# VEDANTA SIDDHANTA MUKTAVALI

A TREATISE ON THE

VEDANTA PHILOSOPHY

BY

PRAKASHANANDA

*EDITED WITH A COMMENTARY*

BY

*Pandit-kulapati Jibananda Vidyasagara*
*Superintendent, Free Sanskrit College*

*CALCUTTA.*

---

Second Edition.

PRINTED AT THE SIDDHESWAR PRESS.

---

*1897.*



To be had from Pandit-kulapati Jibananda Vidyasagara
B. A. Superintendent, Free Sanskrit College, Calcutta.

# वेदान्तसिद्धान्तमुक्तावली ।

श्रीमत्परमहंसपरिव्राजकाचार्य्य-
श्रीप्रकाशानन्दविरचिता ।

---

पण्डितकुलपतिना
बि, ए, उपाधिधारिणा
श्रीजीवानन्दविद्यासागरभट्टाचार्य्येण
प्राचीनां व्याख्यामवलम्ब्य
सङ्कलितया विस्तृतव्याख्यया समलङ्कृता ।

द्वितीयसंस्करणम् ।

कलिकातानगरे
सिद्धेश्वरयन्त्रे मुद्रिता ।

---

इं १८९७ ।



पण्डितकुलपतिः

श्रीजीवानन्दविद्यासागर वि, ए,

PANDIT KULAPATI

JIBANANDA VIDYASAGARA, B. A.

*Superintendent, Free Sanskrit College, Calcutta.*

# वेदान्तसिद्धान्तमुक्तावली ।

अद्दष्टद्वयमानन्दमात्मानं ज्योतिरव्ययम् ।
विनिश्चित्य श्रुतेः साक्षाद्युक्तिस्तत्राऽभिधीयते ॥१॥

तत्र आदौ मङ्गलं तत्त्वाऽनुस्मरणरूपं सूच-

शिष्टाचारप्राप्तमङ्गलमाचरन् निरूपणीयं प्रतिजानीते अद्दष्ट-द्वयमिति। देहादिभ्य आत्मनो व्यावर्त्तनाय अव्ययमिति पदम् आत्मनि प्रमाणसत्त्वासत्त्वाभ्यामनात्मत्वासत्त्वशङ्कां पराकर्त्तुं ज्योतिरिति विशेषणम्। आत्मैव पुरुषार्थ इति प्रतिपादनाय आनन्दमिति विशेषणम्। सजातीयविजातीयभेदापनुत्तये प्रपञ्च-मिथ्यात्वाद्युपपादनाय अद्दष्टद्वयमिति विशेषणम्। श्रुतेर्विनि-श्चित्य इति एतावता एव आत्मनः श्रुतिप्रमाणकत्वे सिद्धेऽपि श्रुतेः अपरोक्षज्ञानकरणत्वमिति द्योतयितुं साक्षात् इति पदम्। ननु अयं ग्रन्थो व्याख्यानपदवीं नार्हति अशिष्ट-प्रणीतत्वात्, अशिष्टत्वं च प्रणेतुर्मङ्गलाननुष्ठानात्, तदननु-ष्ठानं च नमःपदाद्यभावात्। किञ्च ग्रन्थादौ अनुबन्ध-चतुष्टयं निरूपणीयमिति सम्प्रदायविदां स्थितिः, तत्र यद्यपि युक्तेरभिधेयत्वमिह प्रतीयते तथापि इह न प्रयोजनोक्तिः। न च श्रौतविनिश्चयो युक्तेः प्रयोजनमिति वाच्यम्? तस्य क्त्वाप्रत्ययनिर्देशेन पूर्वसिद्धत्वप्रतीतेः। न च आनन्दपदं प्रयो-जनप्रतिपादनाय इति वाच्यम्? तस्य श्रौतज्ञानप्रयोजन-त्वात् ॥ १ ॥

## ग्रन् अभिधेयप्रयोजने साक्षात् प्रतिपाद्य कर्त्तव्यं प्रतिजानीते अदृष्टेत्यादिना। आत्मानमुक्त-विशेषणचतुष्टयविशिष्टं श्रुतितोऽपरोक्षीकृत्य

अतएव न अधिकारी इह निरूपित इति शङ्कां पराकर्त्तु-माह तत्र आदौ इति। तत्र कर्त्तव्ये ग्रन्थे आदौ कर्त्तव्यं प्रतिजानीते इत्यन्वयः। प्रतिज्ञोत्तरं निरूपणीयस्य युक्त-त्वात्। न च मङ्गलाननुष्ठानप्रयुक्तदोषः तत्त्वानुस्मरणरूपस्य मङ्गलस्य कृतत्वात्। तद्वाचकपदाभावदोषपरिहाराय आह सूचयन्निति। तत्त्वं ब्रह्म तस्य अनुक्षणं स्मरणम् अनुस्मरणम् अनेकानि स्मरणानि इत्यर्थः। स्मरणानेकत्वं च अनेकब्रह्मोप-स्थापकपदप्रयोगात्। न च प्रयोजनानुक्तिः, आनन्दपदस्य एव तत्समर्पकत्वात्, प्रधानफलेन एव अङ्गानां फलवत्त्वात् श्रौता-परोक्षज्ञानफलं हि आनन्दस्तादृक्ज्ञाने च अङ्गं युक्तिः तदुक्तं भट्टपादैः। "धर्मे प्रमीयमाणे हि वेदेन करणात्मना इति कर्त्त-व्यताभागं मीमांसा पूरयिष्यति" इति। न च ज्ञानस्य पूर्वसिद्ध-त्वात् तत्प्रति न अङ्गं युक्तिः। ज्ञानस्य पूर्वसिद्धत्वेऽपि तत्-प्रतिष्ठाहेतुत्वात् युक्तेः। तदुक्तं भाष्यकारैः "ब्रह्मात्मैकत्वविद्या-प्रतिपत्तये सर्वे वेदान्ता आरभ्यन्ते" इति। न च तर्हि आत्मज्ञान-प्रतिष्ठैव युक्तिफलं न आनन्द इति वाच्यम्? साक्षात्परम्पराभ्याम् उभयफलत्वाविरोधात् साक्षात् फलं प्रतिष्ठा परम्पराफलम् आनन्दः अभिधेयवत् यथा अत्र साक्षात् अभिधेयं युक्तिः पर-म्परया तु ब्रह्मात्मैक्यम् अतएव आह अभिधेयप्रयोजने साक्षात् प्रतिपाद्येति। वेदान्तानामिति शेषः। यद्वा युक्त्यभि-धानं न स्वं प्रति किन्तु जिज्ञासुं प्रति तस्य च आत्मसाक्षात्-कारार्थं युक्तिर्भवति कथं न ज्ञानाङ्गमित्यर्थः। तत्र अदृष्टद्वयम्

तत्र उक्तविशेषणचतुष्टयविशिष्टे आत्मनि युक्तिः श्रुत्यनुग्राहकस्तर्कोऽभिधीयते इति अन्वयः ।

ननु आत्मसाक्षात्कारे श्रुत्यपेक्षैव नास्ति

आत्मानमिति सामानाधिकरण्यात् ब्रह्मात्मनोः ऐक्यमभिधेयं साक्षादुक्तम् आनन्दमिति पदात् प्रयोजनं च ग्रन्थस्य साक्षादभिधेयमाह कर्त्तव्यमिति। युक्त्यभिधानमिह कर्त्तव्यं तेन अभिधानविषयो युक्तिरिह साक्षादभिधेयमित्युक्तं भवति। यद्यपि साक्षात् प्रयोजनमेतत् ग्रन्थस्य आदौ न उक्तं तथापि शेषे वक्ष्यमाणं यत् स्वबुद्धेरतिशयाख्यं तदेव अत्र अपि बोद्धव्यम्। उभयकामोऽत्राधिकारी सम्बन्धस्तु प्रतिपाद्यप्रतिपादकत्वादिरिति सुस्थं सर्वम्। यच्छब्दयोगः प्राथम्यमित्याद्युद्देश्यलक्षणमिति न्यायात् अद्दष्टद्वयपदार्थस्य प्राथम्यादुद्देश्यत्वेन प्राधान्याद्विशेष्यत्वे प्राप्ते आह आत्मानमिति। प्रसिद्धमुद्दिश्य अप्रसिद्धं विधीयत इति न्यायात्, आत्मनश्च सर्वप्रसिद्धत्वात् विशेष्यत्वं युक्तमिति भावः। साक्षाद्विनिश्चित्येति पदं व्याचष्टे अपरोक्षीकृत्येति। श्रुतित उपनिषद इत्यर्थः। औपनिषदत्वविशेषणश्रवणात् यद्वा सर्वे वेदा यत्पदमामनन्ति इत्याश्रयणात् श्रुतिपदं वेदमात्रपरमेव। तत्र इति पदेन व्यवहितत्वादात्मनः परामर्शमाशङ्क्य आह तत्र इति। ननु श्रुतिपदमितरमानोपस्थितये तन्निवृत्तये वा? नाद्यः, वैयर्थ्यात् लक्षणाप्रसक्तेश्च। अथैतद्दोषपरिहाराय श्रुतिपदमवहन्यात् इतिवत् स्वविधानायेतरप्रमाणव्युदासाय चेति यदि तत्र शङ्कते।

ननु इति। अव्ययपदव्यावर्त्त्यं वा शङ्कते ननु इति। ननु अशनायाद्यतीतमात्मानं न मानान्तरं गोचरयति तत्

देहादेरेव आत्मत्वात् तस्य च लौकिकप्रत्यक्षादि-सिद्धत्वादिति चेत् ? न ।

आत्मा नित्योऽथवाऽनित्यो भेदस्त्वाद्ये स्फुटो मतः।
अन्त्ये कृतस्य हानिः स्यादकृताभ्यागमस्तथा ॥२॥

आत्मनो नित्यत्वात् जगद्वैचित्र्यस्य अदृष्ट-हेतुकत्वात् अन्यथा वैचित्र्यानुपपत्तेः दृष्टस्य

कथं तत्र न श्रुत्यपेक्षेति तत्र आह देहादेरिति । आदिपदम् इन्द्रियाद्यात्मवादपरिग्रहाय अयमर्थः ज्ञानाश्रय आत्मेत्य-विवादम् । ज्ञानं च देहधर्मः अहं मनुष्य इति अहमश्चैतन्यस्य मनुष्यत्वजातिमता देहेन सहधर्मधर्मित्वप्रतीतेः, एवम् इन्द्रिया-देरपि आत्मत्वमुपपादनीयम् । ननु भवतु देहादिरेव आत्मा तथापि तस्य श्रुतिप्रमाणकत्वं किं न स्यात् ? तत्र आह तस्येति । अनधिगतार्थत्वाभावान्न श्रुतेः तत्र प्रामाण्यमित्यर्थः । साक्षिप्रत्य-क्षसिद्धत्वेऽपि अर्थस्य अनधिगतत्वं न निवर्त्तते तस्य तत्साध-कत्वात् । तथाच तत्र श्रुतिः प्रवर्त्ततामित्याशङ्क्य आह लौकि-केति । इच्छादिपरिशेषानुमानमादिपदार्थः अत्र पूर्वपक्षसङ्ग्रह-श्लोकः ।

देहादिरात्मनः सिद्धो लौकिकादेव मानतः ।
नापेक्षते श्रुतिं तस्मात् स्वसाक्षात्कृतये पुनः ॥

एतत् पूर्वपक्षनिराकरणं प्रतिजानीते नेति । हेतुं श्लोकेन संगृह्णाति आत्मेति । श्लोकं व्याकुर्वन्नेति प्रतिज्ञायां हेतुमाह आत्मन इति । देहात्मवादिनं प्रति आत्मनो नित्यत्वमसिद्धमित्या-शङ्क्य तत्साधनाय भूमिकामाह जगत् वैचित्र्यस्येति । कश्चित् सुखी कश्चित् दुःखीत्येवं विचित्रं जगत् इति अविवादं तद्वैचित्र्य

क्षणविनाशित्वात् अदृष्टस्य च पूर्वजन्मसम्बन्धित्वेन तदाश्रयस्य आत्मनोऽनादित्वात् अनादिभावस्य च नित्यत्वनियमात् अन्यथा कृत-

कार्य्यत्वादेव सहेतुकं हेतुश्च विचित्र एव अन्यथा कार्य्यवैचित्र्यं न स्यात्। तदुक्तं वैचित्र्यं च समस्य नेति तद्विचित्रकारणमदृष्टमेव दृष्टस्याचिरध्वस्तत्वेन कालान्तरभाविसुखाद्यजनकत्वात्। तदेतदभिप्रेत्याह वैचित्र्यस्य अदृष्टहेतुकत्वात् इति। इदं जगत् विचित्रकारणकं विचित्रकार्य्यत्वात् विचित्रपटवत्। तच्च विचित्रकारणम् अदृष्टमेव तथाच तदाश्रयत्वेन नित्यात्मसिद्धिः। ननु विचित्रं कार्य्यं क्रियाजन्यं क्रिया च देहजन्या देहे च क्रिया तथाच देहस्यैव क्रिया द्वारासुखादिजनकत्वात् स देह एव आत्मा आत्मनस्तु स एव कारणं न तु अदृष्टं येन अदृष्टाश्रयेण आत्मा नित्यः स्यात् इत्याशङ्क्य आह दृष्टस्येति। दृष्टस्य क्रियारूपस्य श्रुतेरविनाशित्वात् अचिरध्वस्तत्वेन चिरभाविनां सुखादीनां न कारणं क्रिया साक्षात्। ननु शरीरादृष्टयोः परस्परसापेक्षत्वात् अन्योन्याश्रय इति न इत्याह अदृष्टस्येति। वीजाङ्कुरवदनादित्वात् न अन्योन्याश्रयमित्यर्थः। तथापि आत्मनः किमायातमदृष्टस्य भूताश्रयत्वादिति न इत्याह तदाश्रयस्येति। प्रतिनियतभोगान्यथानुपपत्त्या नादृष्टं भूताश्रयं तददृष्टमन्यथा अनुपपद्यमानमात्मानमाश्रयत्वेन कल्पयतीति अदृष्टाश्रय आत्मेत्यर्थः। अस्त्वेवम् आत्मसिद्धिः तथापि तस्य कथं नित्यत्वं तत्र आह आत्मनोऽनादित्वादिति। अनाद्यदृष्टप्रवाहाधिष्ठानत्वादात्मनोऽनादित्वमित्यर्थः। अनादित्वमात्रं न नित्यत्वसाधकं प्रागभावे व्यभिचारादिति तत्र आह

हान्यकृताभ्यागमप्रसङ्गात्, देहादेश्च विकारजातस्य अनित्यत्वकृतकत्वरूपवत्त्वजडत्वपरिच्छिन्नत्वादिभिः अनात्मत्वनिश्चयात् तस्य च नित्यस्य आत्मनोऽविनाशी वा अरेऽयमात्माऽनुच्छित्तिधर्मेत्यादिश्रुतिसिद्धस्य अपरोक्षीकरणे द्वारान्तराभावादस्त्येव श्रुत्यपेक्षा इति अभिप्रेत्य

अनादिभावस्येति। न च अज्ञानेऽनैकान्तिकं तस्य अनिर्वचनीयत्वेन सद्रूपभावत्वानङ्गीकारात्। ननु तर्हि आकाशादौ साधनवैकल्यं न तदिष्टत्वात् तर्हि असाधारण्यं न साध्यस्यापि व्यावृत्तेः सपक्षत्वाभावात् केवलव्यतिरेकिलिङ्गस्वीकारात्। न च तर्हि साध्याप्रसिद्धिः सामान्यतोऽनुमानेन अनवधारितधर्मिकनित्यत्वधर्मसिद्धौ केवलव्यतिरेकिणा आत्मनिष्ठतया नियमात् नैयायिकमताश्रयणेन वा नित्यत्वसाधनात् न आकाशादेः। सपक्षस्य उभयवैकल्यमिति नित्यत्वानुमाने विपक्षबाधकं वदन् उत्तरार्द्धं व्याचष्टे अन्यथेति। आत्मा अनित्यत्ववादे कर्तृभोक्त्रोरेकत्वं न स्यात् इत्यर्थः। धर्मिकल्पनातो धर्मकल्पनावरमिति न्यायात् शरीरादेरात्मत्वं किं न स्यात् इत्याशङ्क्याह देहादेश्च इति। विकारः कार्य्यं जड़त्वं ज्ञानविरुद्धत्वं परिछिन्नत्वम् आदिपदं दृश्यत्वमाह एतेन द्वितीयचरणं व्याख्यातम्। नित्यस्य अपि आत्मनो नैयायिकमते मानसप्रत्यक्षसिद्धत्वात् न तत्साक्षात्कारे श्रुत्यपेक्षेति न इत्याह तस्य च इति। आत्मनः स्वरूपाभावप्रयुक्तविनाशाभावबोधाय अविनाशीति धर्माभावप्रयुक्ताभावनिरासायानुच्छित्तीति अवयवनाशप्रयुक्तनाशाभावाय निष्कलम् इत्यादिश्रुतिसंग्रहाय आदिपदं विशिष्टस्य

उक्तमव्ययमिति। न विद्यते व्ययो विनाशो धर्मतः स्वरूपतोऽवयवतो वा यस्य स तथा। निरवयवनिर्धर्मकः कूटस्थनित्यः परिपूर्ण इत्यर्थः।

ननु आत्मनि प्रमाणमस्ति न वा ? न चेत् तस्य असत्त्वापत्तिः, न हि प्रमाणविरहिणो नरशृङ्गादेः सत्त्वं पश्यामः। आद्ये तत् किं

मानसप्रत्यक्षत्वेऽपि शोधितत्वं पदार्थस्य अकर्त्तुरभोक्तुरमानसत्वेन श्रुत्यपेक्षास्ति इत्यभिप्रेत्याह द्वारान्तराभावात् इति। द्वारान्तरं प्रमाणान्तरं व्ययो विनाशः न व्ययः अव्ययस्तमव्ययमिति समासे अपेक्षितसिद्धिर्न स्यात् नाशादन्यस्य घटादेर्नित्यत्वादर्शनात् इत्याशङ्क्य समासान्तरमाह न विद्यत इति। धर्मतो नाशः कुण्डलनाशात् कनकनाशः। उपचन्नपचन् धर्मी विकरोति धर्मिणमिति न्यायात् अवयवतो नाशो यथा पटावयवनाशात् पटनाशः। अयमेव शास्त्रे अपक्षयशब्देन उच्यते अवयवतो विनाशाभावे हेतुमाह निरवयवेति। धर्मतः तदभावे हेतुमाह निर्धर्मक इति। स्वरूपतो विनाशाभावे हेतुमाह नित्येति। परिणामि नित्यस्य स्वरूपतो नाशवत् ब्रह्मणोऽपि नाशः स्यादिति न इत्याह कूटस्थेति। श्रुतिसिद्धस्य आत्मनः अपरोक्षीकरणे श्रुत्यपेक्षा इत्युक्तम्।

तत्र श्रुतिसिद्धत्वमात्मनो निराकर्त्तुं पूर्वपक्षी भूमिकामाह ननु आत्मनीति। प्रथमे बहुवक्तव्यत्वात् तमुल्लङ्घ्य चरमं प्रथमतो दूषयति न चेत् इति। तस्य आत्मनः ननु प्रमाण

लौकिकं वेदो वा ? नाद्यः, तस्य निर्धर्मकत्वात् इन्द्रियाणां च रूपादिमत्पराग्वस्तुविषयत्वेन तद्व्याप्तहेतोः अनिश्चयेन अनुमानाविषयत्वात् प्रत्यक्षाद्यविषयत्वेन लौकिकवाक्याऽविषयत्वात् तदन्यविषयत्वस्य सम्भावयितुमशक्यत्वात्।

विरहे नासत्त्वं प्रमाणे व्यभिचारात् इत्याशङ्क्य प्रमाणस्य प्रकाशकत्वात् स्वपरसाधकस्य प्रमाणाभावेऽपि नासत्त्वम्, आत्मनस्तु प्रमेयैकरूपत्वात्प्रमाणाभावे असत्त्वमेव इत्यत्र दृष्टान्तमाह न हि इति। आत्मसाधकं लौकिकं मानं भवेत् प्रत्यक्षं वा अनुमानं वा लौकिकः शब्दो वा अन्यद्वा ? आद्यं दूषयति तस्य विरूपादेः क्षित्यादिधर्मत्वात् बुद्ध्यादेश्च अन्तःकरणधर्मत्वात् आत्मा निर्धर्मक इत्यर्थः। निर्धर्मकत्वेऽपि इन्द्रियविषयत्वं किं न स्यात् इत्याशङ्कां पराकुर्वन् द्वितीयं दूषयति इन्द्रियाणां चेति। रूपवति एव चक्षुःप्रवर्त्तते न अरूपे अन्यथा वायौ अपि चक्षुः प्रवृत्तिः स्यात् एवम् इन्द्रियान्तरेऽपि ऊह्यम् आत्मग्राहकं लिङ्गमात्मना व्याप्तं ग्राह्यं तद्ग्राहकञ्च न इन्द्रियं पराग्वस्तुविषयत्वादिति भावः। अनवस्थितेर्नानुमानतोऽपि तद्ग्रहः। ननु यत्र अन्वयिना साध्यसिद्धिः तत्र साध्यव्याप्तहेतुनिश्चयोऽङ्गं यत्र तु केवलव्यतिरेकिणा साध्यसिद्धिः तत्र व्यतिरेकव्याप्तिनिश्चयोऽङ्गम्। तथा च प्राणादिमत्त्वलिङ्गादात्मसिद्धिरिति चेत् ? न, प्रतियोगिज्ञानमन्तरेण अभावग्रहाभावात्। न हि विना वह्निज्ञानं वह्न्यभावो ज्ञातुं शक्यः तथा च आत्मानमज्ञात्वा तदभावस्य कथं लिङ्गाभावेन व्याप्तिग्रहः एतस्मादनुमानादात्मग्रहे कथं

द्वितीयेऽपि वेदजन्यज्ञानभास्यत्वं वा प्रकारान्तरेण भासमानस्य वैदिकज्ञाननिवर्त्त्याऽज्ञानविषयत्वं वा ? आद्ये वेदजन्यज्ञानभास्यत्वेन घटादिवज्जडत्वादनात्मत्वापत्तिः। द्वितीये किं तत्प्रकारान्तरं स्वयं मानान्तरं वा ? चरमे दोषस्योक्तत्वाद् आद्यः परिशिष्यते तच्च न सम्भवति, स्वयंप्रकाशमानस्य अज्ञानविषय-

न अन्योन्याश्रयः अप्रसिद्धविशेषणस्य केवलव्यतिरेकिणि पक्षः तथा च नानुमानविषय आत्मा इत्यर्थः। तृतीयं दूषयति प्रत्यक्षादीति। चतुर्थं दूषयति तदन्यविषयत्वस्य इति। अर्थापत्तेः अन्यथोपपत्तेः अभावस्य च अत्र असम्भव एव इत्यर्थः। अज्ञानविषयत्वं तादृगज्ञानावृत्तत्वम् इत्यर्थः। वेदजन्यज्ञानभास्यत्वं विषयत्वमिति इमं पक्षमनूद्य दूषयति आद्य इति। ननु जड़त्वं नाम चिद्विरुद्धत्वं चित्तानधिकरणत्वं वा उभयमपि न आत्मनि सम्भवति चिद्रूपत्वादात्मनः तत्कथं भास्यत्वेन जड़त्वापादनं यत्तु जड़त्वादनात्मत्वापत्तिरिति तदपि असत्, ज्ञानानाश्रयत्वोपाधित्वात् इति ? मैवं भास्यत्वे चिद्रूपत्वासिद्धेः न हि भास्यं चिद्रूपं किञ्चित् सम्प्रतिपन्नमस्ति ज्ञानस्य वेद्यत्वानङ्गीकारात्। यत्तु ज्ञानानाश्रयत्वमुपाधिरिति तत् न, पक्षेतरत्वात् साधनव्यापकत्वात् चेति स्वयं प्रकाश आत्मा अज्ञानावृत इति। इमं परिशिष्यमाणं पक्षं दूषयति तच्च इति। आवृत्तत्वं नाम आभासमानत्वं स्वयं भासमाने तत् दुर्निरूपम् इत्यर्थः। ननु भासमानेऽप्यादित्ये अभासमानतां सम्भाव-

त्वानुपपत्तेः। न हि स्वयंप्रकाशमानस्वरूपे मध्यन्दिनवर्त्तिन्यादित्ये तमः सम्भावयितुमपि शक्यम्।

अत्र केचित् बन्धमोक्षादिव्यवस्थामाश्रित्य श्रुतिसिद्धमपि अद्वैतं सङ्कोचयन्त आत्मनोऽज्ञानविषयत्वमसहमानाः प्रत्यवतिष्ठन्ते।

यन्ति उलूकादय इति तत्राह न हि इति। दिवान्धत्वदोषादादित्यं न पश्यन्ति तेन तु आदित्यस्य आच्छादितत्वाददर्शनम् इत्यर्थः। ननु वेदविषयत्वमविद्याविषयत्वाभावात् न सम्भवति इत्युक्तं यत्, तत् किं जीवे न सम्भवतीति उच्यते ब्रह्मणि वा? आद्ये इष्टापत्तिः। न हि कर्त्तारं भोक्तारं वेदः प्रतिपादयति निष्प्रयोजनात्। न अपि द्वितीयः, ब्रह्मणः अविद्याविषयत्वात्।

तद्रूपं विषयत्वं किं न स्यात् इति एकदेशिमतं दूषयितुमुत्थापयति अत्र इति। अत्र प्रमाणिकत्वाक्षेपे केचित् मण्डनमतोपजीविनः आत्मनो जीवस्य ननु ब्रह्मविषयमज्ञानं जीवश्च ब्रह्मैव अयमात्मा ब्रह्म इति श्रुतिः तत्कथमज्ञानस्य न जीवो विषयः तत्राह अद्वैतमिति। जीवब्रह्मणोर्जीवानाञ्च भेदं कल्पयन्ते इत्यर्थः। ननु वास्तवद्वैताश्रयणेन आक्षेपसम्भवे अप्रामाणिकमद्वैतं न सङ्कोचमर्हतीति तत्राह श्रुतिसिद्धमपि इति। तत्परत्वन्यायेन श्रुतिः प्रत्यक्षादिकमाभासीकृत्य तत्सिद्धमपि द्वैतमपबाध्य अद्वैतं व्यवस्थापयति। ततश्च स्वमतसिद्धये अद्वैतं सङ्कोचनीयमेव इत्यर्थः। सङ्कोचे हेतुमाह बन्धेति। एक जीवे तदुपपादके च एकस्मिन् ज्ञाने स्वीकृते

जीवाश्रया ब्रह्मपदा ह्यविद्या तत्त्वविन्मता ।
तद्विरुद्धमिदं वाक्यमात्मा त्वज्ञानगोचरः ॥ ३ ॥

ननु आत्मशब्देन जीवः कथ्यते स च अज्ञानस्य आश्रयो न तु विषयः विषयत्वं तु ब्रह्मण

कस्यचिदनुष्ठितसाधनस्य तत्त्वज्ञानोत्पत्तौ जगदुपादानाज्ञानध्वंसादनुभूयमानः संसारो न स्यात् तथा च कश्चिद्बद्धः कश्चित् मुक्त इति व्यवस्था न सिद्ध्येदतो व्यवस्थान्यथानुपपत्त्या अद्वैतसङ्कोचो अवश्यं भावीत्यर्थः। तर्हि अज्ञानं किं निर्विषयमेव। न च ब्रह्मविषयः स्वप्रकाशत्वात् तथाश्रयोऽपि तस्य दुर्निरूपः न च जीव एव अविद्याश्रयः जीवस्य अज्ञानविशिष्टत्वेन आत्माश्रयात् न च ब्रह्माश्रयः तद्विषयस्य ब्रह्मणो अज्ञानाश्रयत्वानुपपत्तेः ।

अज्ञानस्य आश्रयविषयभेदसापेक्षत्वात् ब्रह्मणः सर्वज्ञता च न स्यात् इति तत्राह जीवाश्रयेति। ब्रह्मपदा ब्रह्मविषयिणी इत्यर्थः। न च स्वप्रकाशत्वात् ब्रह्मणो न अज्ञानविषयत्वम् अविद्या कल्पकजीवं प्रति ब्रह्मणः स्वप्रकाशत्वेन संस्फुरणाभावात्, किञ्च यद्विषयकज्ञानात् मोक्षः तदज्ञानात् बन्ध इति अविवादम्। ब्रह्मज्ञानाच्च मुक्तिः "ब्रह्मवेद ब्रह्मैव भवती"ति श्रुतिः अतो बन्धोऽपि ब्रह्माज्ञानादेव भवतीति। कथं न ब्रह्मणो अज्ञानविषयता न च आत्माश्रयो जीवाश्रयत्वे अज्ञानस्य जीवकोटावनन्तर्भावात् उपाधितया तटस्थत्वेन जीवत्वनियामकत्वादिति हि शब्दार्थः।

ननु आत्मशब्दस्य व्युत्पादने ब्रह्मवाचकत्वप्रतीतिः तस्य च अज्ञानविषयत्वस्वीकारात् कथमात्मनो ज्ञानगोचरता तत्र आह

एव। स च जीवोऽनेकोऽन्यथा व्यवहारानुपपत्तिः। यस्य तु श्रवणाद्यभ्यासपाटवेन ब्रह्मात्मावबोधस्तस्य मोक्षस्तदितरस्य बन्ध इति। अतएव अज्ञानानि अनेकानि कल्प्यन्ते। अन्यथा अज्ञानस्य एकत्वे एकज्ञानेन अज्ञानतत्कार्य्यस्य कृत्स्नस्य निवृत्तौ प्रत्यक्षादिसिद्धस्य जगतोऽननुभवप्रसङ्गः। न च एता-

ननु आत्मशब्देन इति। रूढ़िर्योगमपहरति इति न्यायात् आत्मशब्दो जीववाचक इत्यर्थः। अज्ञानविषयत्वात् वेदजन्यज्ञाननिवर्त्त्याज्ञानविषयत्वरूपं यद्विषयत्वं तद् ब्रह्मणः सम्भवतीति द्योतयितुं तुशब्दः। ननु भवतु नाम जीवो अज्ञानाश्रयः तस्य एकत्वात् बद्धोमुक्त इत्यादि व्यवहारो न स्यादिति तत्राह स च इति। स अज्ञानाश्रयः भेदस्य व्यवहारोपपादकत्वं साधयति यस्य तु इति। मननिदिध्यासनयोः आदिपदात् संग्रहः। ब्रह्म आत्मेति ब्रह्मैव आत्माहम् इति योऽवबोधः स साक्षात्कारः इत्यर्थः। बाधायां सामानाधिकरण्येऽपि ब्रह्मैव आत्मा न तदतिरिक्तोऽस्ति कल्पितस्य अधिष्ठानव्यतिरेकेण सत्त्वाभावात् इत्यर्थः। सन्तु अनेके जीवाः तथापि तदुपाधेः अज्ञानस्य एकत्वात् तन्निवृत्तौ संसारो न स्यात् इति तत्राह अतएवेति। व्यवहारानुपपत्तेः इत्यर्थः। ननु साधारणासाधारणप्रपञ्चोपादानं प्रतिबिम्बकल्पानेकजीवाश्रयं ब्रह्मविषयमज्ञानं बद्धमुक्तादिव्यवस्थोपपादकं किं न स्यात् यत्र हि जीवे तत्त्वसाक्षात्कारो जायते तमाश्रयं विरोधात् त्यक्त्वा आश्रयान्तरेषु जीवेषु वर्त्तते यं त्यजति स मुक्त इति

यता कालेन कस्य अपि ज्ञानं न जातम् इति साम्प्रतं प्राचीनानां सम्यक् साङ्गोपाङ्ग-साधनानुष्ठातॄणां व्यासवसिष्ठादीनामपि ज्ञाना-नुत्पत्तौ इदानीन्तनानां ज्ञानोत्पत्तेः सम्भाव-यितुमपि अशक्यत्वेन श्रवणाद्यप्रवृत्तौ अनिर्मोक्ष-प्रसङ्गात्।

ननु व्यवस्थानुरोधेन अज्ञानभेदकल्पना-वत् प्रत्यक्षादिप्रमाणानुरोधेन सत्यमेव द्वैतं किं न स्यादिति चेत्? तन्न वक्तव्यम्।

प्रत्यक्षादिप्रमाणानां प्रमात्वं परतो यदि।
अनवस्था स्फुटा तत्र स्वतस्त्वे दोषसंशयः॥ ४॥

व्यवह्रियते येषु तिष्ठति ते वद्धा इति। तथाच एकेन अज्ञा-नेन अनेकविधव्यवहारोपपत्तौ किमज्ञानानेककल्पनेन इति, तत्राह अन्यथेति। अयमर्थः तत्त्वज्ञानं स्वाश्रयादज्ञानं विवा-सयति अथवा निवर्त्तयति? यदि विवासयेत् तर्हि अज्ञान-निवृत्तिर्न स्यात्। न च ज्ञानव्यतिरिक्तमज्ञाननिवर्त्तकमस्ति स्वीक्रियते वा? तथा च अज्ञाननित्यत्वप्रसक्तिः द्वैतापत्तिश्च। यदि द्वितीयः तत्राह एकज्ञानेन इति। सम्यगिति। अङ्गं शमादिः यज्ञादिः उपाङ्गं साधनं श्रवणादिः तदनुष्ठानस्य सम्यक्त्वं दीर्घकालादरनैरन्तर्य्योपेतत्वं व्यवस्थानुरोधात् अज्ञानानेकत्व-कल्पने तद्दृष्टान्तेन अतिप्रसङ्गं शङ्कते ननु इति। तत्रेति प्रत्यक्षादिप्रामाण्यानुरोधात् द्वैतस्य सत्यत्वे इत्यर्थः।

परत इति। प्राण्याश्रयमात्रग्राहकातिरिक्तग्राह्यम् इत्यर्थः।

किमिदं प्रत्यक्षादेः प्रामाण्यं व्यवहारसमर्थार्थविषयत्वं वा सर्वथा अबाधितार्थविषयत्वं वा? आद्ये कल्पितार्थत्वेन अपि अविरोधः। अन्त्ये तत् किं स्वतः परतो वा? नाद्यः, प्रत्य-

तत्र प्रामाण्यपरतस्त्वे स्वतस्त्व इति पदादूर्ध्वं प्रमात्वस्य इति शेषोऽवगन्तव्यः। प्रमात्वं किं जातिः उत उपाधिर्वा? इति किं शब्दार्थः। नाद्यः, भ्रमज्ञाने सङ्करात्। उपाधिपक्षं दूषयितुं द्वेधा विकल्पयति व्यवहारेति। अर्थविषयत्वम् अप्रमायामपि अस्ति तदर्थं व्यवहारसमर्थं इति अर्थविशेषणम्। न च भ्रमविषयोऽर्थो व्यवहारसमर्थः जलभ्रमात् प्रवृत्तस्य जलपानात् पिपासोपशमनप्रसक्तेः। ननु व्यवहारसमर्थत्वं भ्रमविषयस्य किं भ्रमकाले नास्ति बाधकाले वा? नाद्यः, प्रवृत्तिरूपाद्यर्थव्यवहारसामर्थ्यदर्शनात्। न द्वितीयः, बाधकाले भ्रमाभावेन तदर्थस्यापि अभावादिति अभिप्रेत्य पक्षान्तरमाह सर्वथेति। अबाधितविषयत्वं भ्रमकालेऽपि अस्ति इति तद्युदसनाय सर्वथेति विशेषणं, कालत्रयाबाधितार्थविषयत्वं प्रामाण्यम् इत्यर्थः। व्यवहारसमर्थार्थविषयत्वं प्रामाण्यमिति पक्षम् उक्तयुक्त्या दूषयति आद्ये इति। द्वितीयमनूद्य दूषयितुं विकल्पयति अन्त्ये तत् इति। तत् सर्वथा अबाधितार्थकत्वम् इत्यर्थः। स्वतः स्वाश्रयमात्रग्राहकादेव इत्यर्थः। स्वतस्त्वपक्षं दूषयति नाद्य इति। विमतं प्रत्यक्षादिज्ञानं भ्रमवत् जन्यज्ञानत्वाविशेषात् दोषवत्कारणजन्यं किं न स्यात्? इति दोषसंशये सति तद्युदासाय प्रवृत्तसंवादिरूपदोषाभावग्राहकं प्रमाणान्तरमपेक्षते न वा प्रत्यक्षं स्वप्रामाण्यग्रहे दोषाभावग्राहकं न चेदपेक्षते ततो

त्वादेः सम्भावितदोषत्वेन स्वप्रामाण्यं प्रति दोषाभावग्राहकप्रमाणान्तरसापेक्षत्वेन स्वतस्त्वाभावात्। नापरः गृहीतप्रामाण्यस्य प्रामाण्यनिश्चायकत्वे अनवस्थानात्।

अगृहीतप्रामाण्यस्य तथात्वे प्रामाण्यनिश्च-

निष्कम्पा प्रवृत्तिर्न स्यात्, अपेक्षते चेत्, तत्राह स्वप्रामाण्यं प्रतीति। न हि दोषाभावग्राहकं ज्ञानसामान्यग्राहकं येन तदपेक्षत्वेऽपि स्वतस्त्वं स्यात् तथात्वे वा भ्रमोच्छेदापत्तिरिति ज्ञानमात्रग्राहकातिरिक्तग्राह्यं प्रामाण्यम् इति पक्षं दूषयति नापर इति। अयमर्थः ज्ञानप्रामाण्यग्रहो हि स्वविषयनिश्चयाय, तच्च ज्ञानप्रामाण्यमाश्रयातिरिक्तेन ग्राह्यम्। ग्राहकञ्च किं ज्ञेयं वा, ज्ञानं वा? नाद्यः, तस्य जड़त्वेन प्रकाशकत्वानुपपत्तेः, द्वितीयेऽपि प्रथमज्ञानप्रामाण्यग्राहकं ज्ञानं गृहीतप्रामाण्यं सत् स्वविषयप्रथमज्ञानप्रामाण्यं निश्चाययति अगृहीतप्रामाण्यमेव वा आद्येऽपि ग्राह्यप्रामाण्यग्राहकज्ञानप्रामाण्यं केन गृह्यते किं स्वेनैव किंवा ग्राह्यप्रामाण्याश्रयेण ज्ञानेन अथवा तृतीयेन? नाद्यः आत्माश्रयात् स्वतः प्रामाण्यग्रहापत्तेश्च, द्वितीये अन्योन्याश्रयः, प्रथमज्ञानस्य स्वप्रामाण्यग्राहकज्ञानप्रामाण्यानाकरत्वाच्च, तृतीये ज्ञाने स्वीकृतेऽपि तेनैव स्वप्रामाण्यग्रहे आत्माश्रयः, द्वितीयेन तत्प्रामाण्यग्रहे अन्योन्याश्रयः, प्रथमेन तत्प्रामाण्यग्रहे चक्रकम् अथ एतद्दोषपरिजिहीर्षया चतुर्थं ज्ञानं तृतीयज्ञानप्रामाण्यग्रहाय स्वीक्रियते तदा अनवस्थेत्याह अनवस्थानादिति।

अगृहीतप्रामाण्यमेव द्वितीयं ज्ञानं प्रथमज्ञानप्रामाण्यं

यस्य वैयर्थ्यात् प्रथमेन एव विषयनिश्चयात्। किञ्च नेह नानास्ति किञ्चन, मायां तु प्रकृतिं विद्यादिति च प्रतिपन्नोपाधौ निषिद्धमानत्वमायाप्रकृतित्वाभ्यां कृत्स्नस्य जगतो मिथ्यात्वप्रदर्शनेन तद्विषयस्य प्रत्यक्षादेरप्रामाण्यस्य

निश्चाययतीति द्वितीयं पक्षं दूषयति अगृहीतेति। प्रथमज्ञानप्रामाण्यनिश्चयस्य वैयर्थ्यात् इत्यर्थः। प्रथमेन एव इति। एवकारेण प्रथमज्ञानस्य स्वप्रामाण्यग्रहापेक्षा व्यावर्त्यते सर्वथा अबाधितविषयत्वं प्रामाण्यं प्रत्यक्षादेर्ग्राहकाभात् न सम्भवति इत्युक्तम्, अस्तु वा यथा कथञ्चित् प्रामाण्यग्रहः तथापि सर्वथा अबाधितार्थकत्वरूपं प्रामाण्यं प्रत्यक्षादेर्न सम्भवति श्रुत्यैव अपरिहृतत्वात् इति हेत्वन्तरमाह किञ्चेति। यद्यपि प्रत्यक्षादिः अप्रमाणमेव इत्याह तथापि तद्विषयस्य जगतो मिथ्यात्वं प्रदर्शयन्ती प्रत्यक्षादिः अप्रमाणमिति अर्थात् गमयति इत्यर्थः। ननु प्रत्यक्षादिः अप्रमाणं जगतो मिथ्यात्वादिति व्यधिकरणो हेतुः तत्राह तद्विषयस्य इति। मिथ्याभूतजगद्विषयस्य इत्यर्थः। प्रत्यक्षादिः अप्रमाणं मिथ्यार्थकत्वात् रजतज्ञानवदिति विवक्षितमित्यर्थः। अर्थस्य अबाधितत्वात् न मिथ्यात्वमिति तत्राह नेह नानास्ति इति। प्रतिपन्नस्य जगत उपाधिः अधिष्ठानं ब्रह्म तस्मिन् इहशब्दवाच्ये न नानास्ति किञ्चनेति निषिद्धमानत्वं निषेधप्रतियोगित्वम् इत्यर्थः। ननु यद्बाधितं तदज्ञानप्रभवं दृष्टं यथा रजतादि शुक्त्याद्यज्ञानप्रभवञ्च न घटादि जगदज्ञानप्रभवं मृदादेरुपादानत्वात् तद्विषयककुलालादिज्ञानस्य च निमित्तत्वात् इति तत्राह

श्रुत्यैव दर्शितत्वात् । तस्मात् व्यवस्थानुरोधेन इन्द्रो मायाभिः पुरुरूप ईयते इति मायाभिरिति बहुवचनानुरोधेन च जीवाश्रयाणि ब्रह्मविषयाणि अनेकानि अज्ञानानि इति तत्कथमात्मनोऽज्ञानविषयत्वं विकल्पितमिति संक्षेपः ।

अत्र वदन्ति ।

जीवब्रह्मप्रयोगाभ्यामेकं वस्त्वथवा द्वयम् ।
आद्ये त्विष्टं ममैव स्यात् द्वितीये त्वन्मतक्षतिः ॥५

मायान्त्विति । प्रकृतिमुपादानम् इत्यर्थः । मृदाद्याकारेण परिणतमज्ञानम् घटाद्युपादानम् इति अविरोधः । इत्थंभावे तृतीया, यस्मात् व्यवस्थानुरोधादज्ञाननानात्वेऽपि प्रत्यक्षादिप्रामाण्यानुरोधात् जगत्सत्यत्वम् उक्तयुक्त्या नास्ति तस्मादित्याह तस्मादिति । ननु व्यवस्थानुपपत्तिरूपः तर्कः उपजीव्यप्रमाणाभावात् आभास इति तत्राह इन्द्र इति । अज्ञानविषयत्वाक्षेप उपलक्षणं ब्रह्मणो अविद्याविषयत्वात् तत्र श्रुतिप्रमाणकत्वाक्षेपोऽपि कथमुक्त इत्यपि बोद्धव्यम् । अत्र एकदेशिमतसंग्रहः श्लोकः ।

अज्ञानं प्रति जीवं स्यात् भिन्न ब्रह्मपदञ्च तत् ।
बद्धमुक्तव्यवस्थातो ब्रह्म श्रौतञ्च सिद्ध्यति ॥

सिद्धान्तिमतमवलम्ब्य एकदेशिनो मतं पूर्वपक्षी पराचष्टे अत्र इति । अत्र एकदेशिमते प्रत्यक्ब्रह्मणोरैक्यम् अविद्यायाश्चिन्मात्राश्रयविषयत्वम्, न च चिति भासमानायाम् अविद्याविषयत्वम् इति । न तत्र वेदप्रामाण्यमिति गूढाभिसन्धिः पूर्वपक्षी जीवाश्रया ब्रह्मपदेत्युक्तं दूषयति जीव-

जीवब्रह्मशब्दाभ्याम् आत्मैव उच्यते उत जीवशब्देन आत्मा ब्रह्मशब्देन तु तदन्यत् ? इति। आद्ये कथमात्मनो नाऽज्ञानविषयत्वं ब्रह्मशब्देन अपि तस्यैवाभिधानात्। ननु आत्मनोऽज्ञानविषयत्वे कथं तस्य भानं ? तमसा आवृतत्वात्,

ब्रह्मेति प्रयोगः प्रयुज्यमानः शब्दस्ताभ्याम् इत्यर्थः। यद्यपि जीवब्रह्मशब्दयोर्वाच्यं भिन्नमेव तथापि उपाधिपरित्यागेन एकं लक्ष्यं प्रतिपाद्यते उत भिन्नमिति विकल्पार्थः। आद्यमनूद्य दूषयति आद्ये इति।

यद्यपि प्रत्यग्ब्रह्मणोरैकत्वमेकदेशिनोऽपि इष्टमिति एवकारो न युक्तः तथापि अज्ञानस्य आश्रयविषयैक्यमेकदेशिनोऽनिष्टमिति युक्त एव एवकारः। हेतुं द्योतयितुं तुशब्दः, त्वन्मतक्षतिः एकदेशिमतक्षतिः इत्यर्थः। अवधीर्य वाच्यलक्ष्यविवेकं सामान्यत एव दूषयितुं विकल्पयति जीवब्रह्मेति। कथं न इति निषेधाभ्यामात्मनः अज्ञानविषयत्वं प्रतिज्ञाय तत्र तुशब्दसूचितं हेतुमाह ब्रह्मशब्देन इति। जीवशब्ददृष्टान्तार्थोऽपिशब्दः अयमत्र निष्कृष्टोऽर्थः— आत्मा अज्ञानविषयः अज्ञानाभासकत्वे सति ब्रह्मशब्दवाच्यत्वात् ब्रह्मवत् इत्यर्थः। ननु आत्मा न तमोविषयो भासमानत्वात् यत् न एवं, तत् न एवं, यथा अन्धकारावृतो घट इति सत्प्रतिपक्षम् अभासमानत्वम् उपाधिश्च शङ्कते आत्मन इति। उपाधेः साधनाव्यापकत्वमाह कथं तस्य भानमिति। तस्य अज्ञानाभासकत्वे सति ब्रह्मशब्दे वाच्यस्य आत्मनः अभासमानत्वं नास्ति इति पक्षात् व्यावृत्तत्वात् साधनाव्यापक उपाधिः इत्यर्थः।

न हि अन्धकारावृतो घटो दृश्यते इति चेत् ? न, अद्वयानन्दरूपेण एव तस्य अज्ञानविषयत्वात् चैतन्यमात्रस्य एव भासमानत्वात् तस्य च अज्ञानाविषयत्वात्, अन्यथा अज्ञानस्यापि असिद्ध्या-

अभासमानत्वोपाधिः साध्यव्याप्तिमाह न हि इति। तदुभयं तन्त्रेण निराचष्टे न इति। हेतुमाह अद्वयेति। अयमर्थः प्रतिपक्षानुमाने आत्मशब्देन किमद्वयानन्दरूपं पक्षीकृतं चिन्मात्रं वा ? यदि आद्यः, तत्राह अद्वय इति। तस्य आत्मनः तथाच प्रतिपक्षानुमानं बाधितम् इत्यर्थः। द्वितीयं दूषयति एवेति। चिन्मात्ररूपस्य स्थापनानुमाने पक्षत्वाभावात् प्रतिपक्षानुमानेऽपि पक्षत्वं तस्य न युक्तमिति एवकारार्थः। ननु आनन्दादिपक्षत्वे बाध इत्युक्तमयुक्तं तस्य आत्माभिन्नत्वेन भासमानतया अज्ञानविषयत्वानुपपत्तेः इति तत्राह चैतन्यमात्रस्य इति। आत्माभिन्नेऽपि आनन्दादिरूपे भासमानत्वं व्यावर्त्तयितुम् एवकारः एतेन प्रतिपक्षानुमानं स्वरूपासिद्धम् इत्यपि ध्वनितम्। ननु अज्ञानविषय आत्मा चैतन्यं च आत्मैव ततश्च चैतन्यमज्ञानविषयः कथं भासतामिति तत्राह तस्य चेति। तस्य चिद्रूपस्य इत्यर्थः। अज्ञानाविषयत्वात् अज्ञानानावृतत्वात् इत्यर्थः। चित्स्वरूपमपि किमिति अज्ञानं नावृणोति इत्याशङ्क्य विपक्षे बाधकमाह अन्यथेति। चैतन्यस्य आवृतत्वे अज्ञानं न सिद्ध्यति अज्ञानं हि चिद्रूपसाक्षिमात्रसिद्धं न प्रमाणगम्यम् इत्यावयोः सम्प्रतिपत्तेः इत्यर्थः। जगदान्ध्यप्रसक्तिसमुच्चयाय अपि शब्दः एवं सत्प्रतिपक्षनिराकरणे ग्रन्थो व्याख्यातः। उपाधिनिरसनपक्षेऽप्येवं योज्यः। स्थापनानुमाने हि अद्वया-

पत्तेः। अद्वयानन्दस्वरूपं चैतन्यमात्रात् अभिन्नमेव इति चेत्? सत्यम्। वस्तुतस्तथैव। कथं तर्हि अज्ञानविषयत्वव्यवस्थेति चेत्? अनादिसिद्धाज्ञानसम्बन्धात्। स्वयम्प्रकाशपरिपूर्णानन्द-

नन्दरूपस्य आत्मनः पक्षत्वं तत्र च न उपाधिः सम्भवति साधनव्यापकत्वात् इति इममर्थं मभिप्रेत्याह अद्वयेति। अज्ञानविषयत्वात् अज्ञानविषयत्वस्वीकारात् इत्यर्थः। तत्र च अभासमानत्वमस्ति एव इति कथं न उपाधिः साधनव्यापक इति भावः। ननु आत्मा अभिन्नमद्वयादि कथं न भासते इति तत्राह चैतन्यमात्रस्य एवेति। आत्मत्वं न भानप्रयोजकं चैतन्यमेव तत्प्रयोजकम् इत्यर्थशेषं फक्किकाद्वयं व्याख्यातार्थम् अद्वयानन्दरूपेण आत्मनः अभासमानत्वादज्ञानविषयत्वं चैतन्यरूपेण भासमानत्वात् अविद्यासाधकत्वाच्च न आत्मनः अज्ञानविषयत्वम् इत्युक्तं तत् अयुक्तम्, अद्वयानन्दचैतन्यानां भेदाभावात् विज्ञानमानन्दं ब्रह्मेति श्रुतिः इति शङ्कते अद्वयानन्देति। ननु अभेदवद्भेदोऽपि अस्ति इति तत्राह एवेति। विरुद्धत्वात् भेदाभेदौ एकत्र न स्त इति भावः। अद्वयानन्दचैतन्यानां वास्तवभेदाभावात् भासमानत्वात् अज्ञानविषयत्वं वस्तुतो नास्ति इत्युच्यते उत कल्पितमपि अज्ञानविषयत्वं नास्ति इति? यदि आद्यः तत्राह सत्यमिति। द्वितीयं दूषयितुं पृच्छति कथं तर्हि इति। उत्तरमाह अनादीति। अद्वयानन्दरूपस्य इत्यत्र आत्मन इति शेषः। आत्मनीति सप्तम्यन्तं वा पदं षष्ठ्यन्ततया विपरिणम्य विशेष्यत्वेन अत्र योजनीयं, तद्रूपस्य आत्मनोऽविषयत्वाभिधानम् इति अन्वयः। ननु भेदाभावाद्विषयत्वं न सम्भवति इत्युक्तं तत्राह आत्मनि भेदं

स्वरूपेण भासमानेऽपि आत्मनि मिथ्यैव भेदं परिकल्प्य अद्वयानन्दस्वरूपस्य विषयत्वाभिधानम् चैतन्यमात्रमेव भासते न आनन्दस्वरूपमिति भ्रान्तप्रतीत्यनुरोधात्। कथमस्याः प्रतीतेः भ्रान्तत्वमिति चेत्? परमप्रेमास्पदस्य

परिकल्प्य इति क्त्वाप्रत्ययोऽभिधानक्रियान्तरम् अपेक्ष्य वास्तवं कल्पनं पराचष्टे मिथ्येति। अनिर्वचनीयमित्यर्थः। एवकारो भिन्नक्रमः। परिकल्प्य एव विषयत्वाभिधानं न वस्तुत इत्यर्थः। ननु यद्भाति तदज्ञानावृतं न भवति न च अद्वयादिरूपत्वमात्मनो भासते मुक्तत्वापत्तेः तथा च किं भेदकल्पनयेति तत्राह स्वयंप्रकाशेति। आत्मा तावद्भासते एव अन्यथा त्वं क इति पृष्टे अहमनहं वेति सन्देहप्रसङ्गः, तदभिन्नाश्च अद्वयादयः कथं न भासेयुः? ते च नेदानीं भासन्ते अतस्तेषामभानप्रयोजकभेदकल्पना युज्यते एव इत्यर्थः। अतएवाह चैतन्यमात्रमेवेति। ननु अस्याः प्रतीतेर्बाधादर्शनात् तद्विषयभेदस्य वस्तुत्वं किं न स्यात् इति न इत्याह।

भ्रान्तेति। भ्रान्तेति प्रतीति विशेषणम्। ननु भेदनं भेदः भेदनञ्च द्वैधीभावः, स च, सावयवधर्मः आत्मा च निरवयवः निष्कलमित्यादि श्रुतेः। तथा च तत्र कथं भेदकल्पनं अयोग्यत्वादिति तत्राह अनादिसिद्धाज्ञानेति। अघटनघटनापटीयसी मायेति न्यायात् निरवयवेऽपि आत्मनि अज्ञानसम्बन्धात् मिथ्याभेदकल्पना युक्ता एवेत्यर्थः। प्रतीतेर्बाधितत्वमुपपादयितुं शङ्कते कथमिति। कथं भ्रमत्वम् इत्याक्षेपे तत्परिहाराय हेतुमाह परमेति। आत्मानन्दरूपः परमप्रेमास्पदत्वात् विषयानन्द-

आत्मन आनन्दस्वरूपेण एव भासमानत्वादिति वदामः। तथापि परमार्थतोऽज्ञानस्य विषयाश्रययोर्भेदो न निरूपित इति चेत्? सत्यम्।

वत् इत्यर्थः। तथा च सुखात्मनोः अभेदादात्मनि च भासमाने तदभिन्नं सुखं भासते एव, ततश्च अनवभासप्रतीतिर्बाधितत्वाद् भ्रम एव इत्यर्थः। मा नभूवं भूयासमिति इच्छाप्रेमा-परमत्वं तस्य निरुपाधित्वं तदास्पदं तद्विषयः निरुपाधीच्छाविषयत्वात् इत्यर्थः। दुःखाभावसुखसाधनादौ व्यभिचारवारणाय परमेति विशेषणम्। ननु विषयानन्दे प्रेमात्मोपाधिकः न हि सुखमित्येव कश्चित् प्रार्थयते वैरिसुखेऽपि प्रार्थनाप्रसङ्गात् किन्तु आत्मसम्बन्धात् सुखं प्रार्थ्यते ततश्च विषयानन्दे निरुपाधिकप्रेमास्पदत्वाभावात् साधनविकलतेति चेत्? न, सुखे प्रेमास्पदत्वस्य आत्मोपाधिकत्वानुपपत्तेः फलोपाधिकसाधने प्रेमा सोपाधिकः। न च आत्मा सुखस्य फलं नित्यत्वात् नापि आत्मनिष्ठोपकारः कश्चित् सुखजन्यः सुखातिरिक्तोपकाराभावात् तस्मात् न आत्मोपाधिकः प्रेमा तर्हि वैरिषु स्वमपि उपादेयं स्यात् इति चेत्? न, स्वरूपेण उपादेयत्वेऽपि हेयताया अन्योपाधित्वात्, सुखात्मनोः सम्बन्धानिरूपणाच्च न सोपाधिः सुखे प्रेमा तथा हि सुखात्मनोः कः सम्बन्धः संयोगो वा समवायो वा तादात्म्यं वा अन्यो वा? नाद्यः, सुखस्य अद्रव्यत्वात्, न द्वितीयः निर्गुणत्वश्रुतिविरोधात् अन्तःकरणसमवेतत्वात् सुखस्य आत्मना समवायसम्बन्धानुपपत्तेः, नापि तृतीयः, तादात्म्यं किमैक्यमेव भेदाभेदौ वा? नाद्यः, सुखात्मनोः अत्यन्ताभेदप्रसङ्गात् विरोधाच्च, न द्वितीयः, नापि चतुर्थः, तस्य वक्तुमशक्यत्वात्

अविद्या स्वाश्रयाभिन्नविषया स्यात् तमो यतः।
यथा वाह्यं तमो दृष्टं तथा चेयं ततस्तथा ॥ ६ ॥

तस्य तमःशब्दवाच्यस्य तदनपेक्षत्वात्। न हि गृहोदरवर्त्ति तमः स्वाश्रयगृहान्तर्वर्त्ति देशं

ततो न साधनविकलतेति अनिर्वचनीयभेदभिन्नस्य अद्वयसुखात्मनोऽज्ञानविषयत्वमुक्तं तत्र शङ्कते तथापि इति। अविद्यायाः शक्तित्वात्पारमार्थिकविषयाश्रयभेदसापेक्षत्वात् कल्पितविषयाश्रयत्वं न युक्तमित्यर्थः। तदेतदङ्गीकरोति सत्यमिति। आश्रयविषयभेदः परमार्थतो न निरूपित इति सत्यमित्यर्थः।

तर्हि अज्ञानस्य विषयादिभेदः परमार्थतो निरूप्यतामिति तत्राह अविद्येति। अविद्या स्वाश्रयाभिन्नविषयिणि इतमस्त्वात् वाह्यतमोवत् इत्यर्थः। ननु वाह्यं तमो द्रव्यं वा आलोकाभावो वा? यदि आद्यः तर्हि दृष्टान्तः साध्यविकलः स्वावयवाश्रितस्यापवरकदेशावरकत्वात्. द्वितीयेऽपि अयमेव दोषः प्रतियोगिसमवायिदेशाश्रिताभावस्य घटाद्यावरकत्वादिति चेत्? न, स्वावयवाश्रितस्य घटस्य भूतलाश्रयत्वदर्शनादाद्ये विरोधाभावात् द्वितीयेऽपि आलोकसंसर्गाभावस्य तमस्त्वात् संसर्गाभावत्वेन च प्रतियोगिसमवायिदेशावृत्तित्वनियमाभावात् नोभयथापि दृष्टान्तस्य साध्यविकलतेति श्लोकं व्याचष्टे। तस्येति। तस्य वाह्यस्य आन्तरस्य च तमस इत्यर्थः। तमःशब्दवाच्यस्य इति साधनवत्तामाह तदनपेक्षत्वात् आश्रयविषयभेदानपेक्षत्वात् इत्यर्थः। पूर्वोक्तयुक्तिसिद्धमर्थं स्पष्टयन् आश्रयविषयभेदानपेक्षत्वमेव दृष्टान्तेन साधयति न हि इति। पूर्वार्द्धे वक्तव्याभावात् तदर्थो न

न विषयीकरोति येन तदतिरिक्तमपेक्षेत । अतएव न द्वितीयोऽपि । किञ्च ।

ब्रह्मात्मनोर्विभिन्नत्वे भेदः स्वाभाविको यदि ।
औपाधिकोऽथवा भेदः सर्वथाऽनुपपत्तिकः ॥७॥

ब्रह्मात्मनोः स्वाभाविको भेदः औपाधिको वा ? आद्ये आत्मभिन्नत्वेन ब्रह्मणो जड़त्वापत्तिः । तथा च विज्ञानमानन्दं ब्रह्मेति श्रुति-

स्पष्टीकृतः जीवब्रह्मशब्दाभ्यामात्मैव उच्यते उत जीवशब्देन आत्मा ब्रह्मशब्देन तदन्यत् ? इति विकल्पत्र प्रथमं निराकृत्य द्वितीयमपाकरोति अतएवेति । यतः अविद्याश्रयविषयभेदं नापेक्षते अतो न जीवब्रह्मणोर्भेद इत्यर्थः । ननु जीवब्रह्मणोः परस्परमभिन्ने अविद्याया आश्रयविषयभेदानपेक्षत्वादिति व्यधिकरणो हेतुः इत्याशङ्क्य हेत्वन्तरमाह किञ्चेति । हेत्वन्तरं प्रतिपादयितु भिन्नपक्षं विकल्पयति ब्रह्मात्मनोः इति । यदि शब्दो वा शब्दपर्य्यायः स्वाभाविको वेत्यर्थः । स्वभावेतर-निरपेक्षं वस्तुस्वरूपं तत्प्रयुक्तः स्वावाविको वस्तुस्वरूप-प्रयुक्त इत्यर्थः । स्वाभाविकभेदपक्षमनूद्य दूषयति आद्ये इति । परस्परभिन्नत्वे हि द्वौ भेदौ स्याताम् आत्मप्रतियोगिको ब्रह्मनिष्ठ एको भेदः ब्रह्मप्रतियोगिक आत्मनिष्ठश्च अपरः, तत्राद्यं भेदं दूषयति आत्मभिन्नत्वेन इति । आत्मनश्चिद्रूपत्वात् तदन्यच्चेत् ब्रह्म स्यात् जड़ स्यात् घटवत् इत्यर्थः । अत्र इष्टापत्तिं परिहरति तथाच इति । विज्ञानब्रह्मपदयोः सामानाधिकरण्यात् अखण्डार्थत्वप्रतीतेर्ब्रह्मणो ज्ञानभेदात् जड़त्व-

व्याक्षेपः ब्रह्मणोऽज्ञानविषयत्वानुपपत्तिश्च।
आत्मनश्च ब्रह्मभिन्नत्वे घटादिवदनात्मत्वापत्तिः।
द्वितीयेऽपि उपाधिजन्यत्वं ज्ञेयत्वं तन्नत्वं वा

प्रसक्तिर्नेष्टा इत्यर्थः। ननु ज्ञानब्रह्मपदयोः सामानाधिकरण्यभावात् न ब्रह्मज्ञानयोः अभेदः सिध्यति सामानाधिकरण्यस्य शुक्लः पट इति वत् गुणगुणिभावपरत्वेनापि उपपत्तेः इत्याशङ्क्य एकदेशिनं प्रति हेत्वन्तरमाह ब्रह्मण इति। जड़त्व इति शेषः। तत्र आवरणकृत्याभावात् इति भावः। आत्मधर्मिकब्रह्मप्रतियोगिकभेदपक्षं दूषयति आत्मनश्च इति। अपरिच्छिन्नागौणापरोक्षत्वात् प्रत्यक्षत्वं ब्रह्मणः तस्मादात्मनो भेदे परोक्षत्वं स्यात् इत्यर्थः। जीवब्रह्मणोः स्वाभाविकभेदं पराकृत्य औपाधिकं तयोः भेदम् अनूद्य विकल्पयति द्वितीयेऽपि इति। ननु जीवब्रह्मविभाग औपाधिको न सम्भवति उपाधेः अनिरूपणात्, उपाधिः किमज्ञानम्? उत अन्तःकरणम्? अतिरिक्तो वा? नाद्यः, तस्य अक्षराव्याकृतभेदहेतुत्वात् तदुक्तं कारणोपाधिरीश्वर इति। न द्वितीयः, उपाधेर्वस्तुत्वे भेदस्यापि वस्तुत्वप्रसङ्गः। न च अन्तःकरणमपि कल्पितम्, एवं तर्हि तदनादि वा सादि वा? सादित्वमुत्तरत्र निरसिष्यति मूल एव, अनादि चेत्? सुषुप्त्यादौ किं तत् तिष्ठति न वा? तिष्ठति चेत्? किं स्थूलतया सूक्ष्मतया वा? नाद्यः, मनः सर्वैर्ध्यानैः सहाप्येति इति श्रुतिविरोधात्। न द्वितीयः, सूक्ष्मत्वस्य शक्तिमत्कारणात्मकत्वमन्तरेण अनिरूपणात्, ततश्च कारणमेव तिष्ठेत् न अन्तःकरणमिति तन्निवृत्तौ जीवब्रह्मविभागोऽपि निवर्त्तेत एतेन न तिष्ठतीति पक्षः परास्तः। एवमतिरिक्तपक्षोऽपि निरसनीयः भेदाभेदस्य

औपाधिकत्वम्। जीवब्रह्मभेदस्य उपाधिरपि अज्ञानमेव वक्तव्यम् अज्ञानकार्य्यस्य कादाचित्कत्वेन जीवब्रह्मविभागानुपाधिकत्वात्। तत्र नाद्यः, भेदोत्पत्तेः पूर्वमेव केवले आत्मनि

विरोधाच्च, तस्मात् उपाधेः अनिरूपणात् जीवब्रह्मविभागे औपाधिक इत्युक्तमयुक्तमिति तत्राह उपाधिरपि इति। ईश्वरोपाधिरपि अज्ञानं जीवब्रह्मभेदोपाधित्वेन तदेव वक्तव्यम् इत्यर्थः। एवकारव्यावर्त्तं वदन् अन्तःकरणादेः सादित्वपक्षं दूषयति अज्ञानकार्य्यस्य इति। ईश्वरोपाधिरपि अज्ञानं जीवेऽपि उपाधिः। न च ईश्वरजीवयोः अभेदापत्तिः आवरणशक्तिप्राधान्येन अज्ञानस्य जीवब्रह्मविभागोपाधित्वात् विक्षेपशक्तिप्राधान्येन तस्य ईश्वरोपाधित्वात् अतएव मायोपाधिः ईश्वर इति गीयते इति भावः। एवम् औपाधिकपक्षं त्रेधा विकल्प्य उपाधिमज्ञानञ्च सम्भाव्य तद्दूषणाय उपक्रमते तत्र इति। विकल्पेषु मध्ये इत्यर्थः। अज्ञानजन्यो जीवब्रह्मविभाग इति आद्यः पक्षः। जीवब्रह्मविभागः सादिः अनादिर्वा? अनादिश्चेत् न तर्हि अविद्याजन्यः, अनादेः अजन्यत्वात् जन्यत्वे वा ब्रह्मणि अतिप्रसङ्गः भेदव्यक्तिरादिमती तत्प्रवाहोऽनादिमान् इति चेत्? न, भेदाभेदाभ्यां व्यक्तेः प्रवाहानिरूपणात् ततः सादित्वं भेदस्य परिशिष्यते। तमेनं पक्षं दूषयति भेदोत्पत्तेः। पूर्वमिति। अयमत्रार्थः, किमज्ञानं, विना प्रयोजनं भेदं करिष्यति सप्रयोजनं वा? नाद्यः, निष्प्रयोजनस्य कारणत्वानुपपत्तेः। सप्रयोजनं चेत्? तत् किं प्रयोजनं, जीवस्य वा स्वस्य वा? नाद्यः, भेदोत्पत्तेः प्रागजीवत्वायोगात्। न अपि

अज्ञानसिद्धेर्भेदानपेक्षणात् स्वतन्त्वाऽज्ञानानङ्गीकारात्। न द्वितीयः, अज्ञानस्य जड़त्वेन भासकत्वानुपपत्तेः। नापि तृतीयः, तन्त्रत्वं हि त्रिधा दृष्टं लोके जन्यत्वेन आश्रितत्वेन भास्यत्वेन च। तत्र अन्यतमस्यापि प्रकारस्य अज्ञाननिरूपितस्य प्रकृते असम्भवात् तन्त्वत्वा-

स्वस्य तदपि किमाश्रयविषयलाभः अन्यत् वा नान्यत् जीवब्रह्मविभागजन्याज्ञानगतप्रयोजनान्तरानिरूपणात्, अथ आश्रयविषयलाभश्चेत् तत्राह भेदोत्पत्तेः पूर्वमेव इति। केवले भेदशून्ये इत्यर्थः। तस्य अकारणत्वात् इत्यर्थः। आत्मनि इति आश्रयविषयोपादानम्। ननु भेदोत्पत्तेः ऊर्द्धमज्ञानम् आश्रयं विषयञ्च लप्स्यत इति न इत्याह स्वतन्त्र इति। कस्य कुत्र अज्ञानमिति आश्रयविषयसापेक्षमेव अज्ञानं न अन्यथा स्वातन्त्र्याभावात् तथा च भेदोत्पादनं व्यर्थमिति भावः। अज्ञानभास्यो जीवब्रह्मविभाग इति इमं पक्षं दूषयति न द्वितीय इति। ज्ञानभिन्नत्वात् जड़त्वम् इत्यर्थः। अज्ञानतन्त्रो जीवब्रह्मविभाग इति इमं तृतीयं पक्षं दूषयति न अपि इति। न इति प्रतिज्ञायां हि शब्देन हेतुं द्योतयन् तन्त्रत्वस्य त्रैविध्यमाह तन्त्रत्वमिति। उपाधिजन्यत्वं वा उपाध्याश्रितत्वं वा उपाधिभास्यत्वं वा उपाधितन्त्रत्वम् इत्यर्थः। त्रिविधमपि तन्त्रत्वं दूषयति तत्रेति। तत्र त्रिषु मध्ये इत्यर्थः। प्रकृते प्रस्तुते जीवब्रह्मभेदे अन्यतमस्यापि अज्ञानजन्यत्वादेः असम्भवात् अज्ञानतन्त्रत्वानुपपत्तिः अज्ञानजन्यत्वाज्ञानभास्यत्वे जीवब्रह्मभेदस्य पराकृते अज्ञाना-

नुपपत्तिः। न च अज्ञानात्मसम्बन्धवत् अज्ञानतन्त्रत्वं ब्रह्मात्मभेदस्य इति वाच्यं सम्बन्धस्य

आयत्वञ्च जीवब्रह्मभेदस्य न सम्भवति ब्रह्मजीवयोः अन्यतरनिष्ठत्वात् यदा जीवप्रतियोगिको ब्रह्मनिष्ठो भेदः तदा ब्रह्मणि वर्त्तते ब्रह्मप्रतियोगिको जीवनिष्ठश्च जीवे एव वर्त्तते इत्युच्यते ततश्च कथं स भेदोऽज्ञानमाश्रयेत्। ननु महाकाशात् घटाकाशो भिन्न इत्यत्र घटाकाशस्य धर्मित्वे विशेषणीभूतघटस्यापि धर्मित्ववत् ब्रह्मणोऽज्ञानी जीवो भिन्न इत्यत्रापि ब्रह्मभेदस्य अज्ञानाश्रयत्वं किं न स्यात् इति चेत्? न, अज्ञानस्य उपाधितया तटस्थत्वेन भेदधर्मिविशेषणत्वानङ्गीकारात्। न हि पचिक्रिया पाचकत्वोपाधिरपि पाचकविशेषणं तथात्वे वा पचिक्रियायाः पाचकत्वप्रसङ्गः विशिष्टवृत्तिधर्मस्य विशेषणवृत्तित्वनियमात्, एतेन घटाकाशोऽपि व्याख्यातः। ननु जीवनिष्ठो भेदोऽज्ञाननिष्ठोऽपि किं न स्यात् एकस्यापि भेदस्य अनेकधर्मित्वाङ्गीकारात् इति चेत्? न, अज्ञाने ब्रह्मभेदस्य स्वाभाविकत्वौपाधिकत्वाभ्यामनिरूपणात् विरुद्धत्वात् द्वैतापत्तेर्न स्वाभाविकः उपाधेः अविद्यातिरिक्तत्वानिरूपणात् अविद्यानिष्ठभेदे विद्याया उपाधित्वे कथं न आत्माश्रयः ततो ब्रह्मभेदोऽविद्यायामिति रिक्तं वचः एतेन जीवभेदस्य अविद्याश्रयत्वं प्रत्युक्तं, ब्रह्मणि औपाधिकाभेदस्य अविद्यायामपि औपाधिकत्वे कथं न आत्माश्रयः स्वाभाविकत्वे द्विरूपकत्वप्रसक्तेर्विरुद्धत्वम्। किञ्च अज्ञानस्य जीवात् भिन्नस्य जीवभेदोपाधिता उत अभिन्नस्य? न तावदन्त्यः, स्वस्मिन् स्वस्य अनुपाधित्वात् आत्माश्रयात्। न अपि प्रथमः, अन्योऽन्याश्रयात् भेदादुपाधित्वम् उपाधेश्च भेद इति ततो न

सम्बन्धितन्त्वत्वनियमात् भेदस्य च तथात्वा-
भावात्। तस्मात् जीवब्रह्मविभागशून्यमात्मा-
नमाश्रित्य तमेव विषयीकरोति इति अज्ञान-

अज्ञानाश्रयत्वम् उभयविधभेदस्य इति भावः। तथात्वा-
भावात् सम्बन्धत्वाभात् इत्यर्थः। ननु उक्तनिरूपं तत्र तु
अशून्यद्रव्यत्वगुणवत्त्वयोर्नियम्यनियामकत्ववत् ब्रह्मजीवभेदा-
ज्ञानयोर्नियम्यनियामकत्वं किं न स्यात्? इति न, एकाधि-
करणयोर्नियम्यनियामकत्वदर्शनात्। न च इह अज्ञानजीव-
ब्रह्मभेदयोः एकाधिकरणत्वं ततो दृष्टान्तवैषम्यात् न प्रकृते
नियम्यनियामकतेति। ननु अज्ञानं जीवनिष्ठम् अहमज्ञ
इति प्रतीतेः ब्रह्मभेदोऽपि जीवनिष्ठ एव अहं न ब्रह्मेति
प्रतीतेः ततो ब्रह्मभेदाज्ञानयोर्जीवनिष्ठत्वात् कथं न तयोः
एकाधिकरणतेति शङ्काम् उपसंहारव्याजेन निराकरोति
तस्मादिति। अहं शब्देन अहङ्कारोऽन्तःकरणपर्य्यायो वा
अभिधीयते अन्तःकरणतादात्म्यापन्नं चैतन्यं वा शुद्धमेव वा?
न प्रथमद्वितीयौ तयोः अज्ञाननिरूप्यत्वेन अज्ञानाश्रय-
त्वानुपपत्तेः। तृतीये इष्टापत्तिः इत्यभिप्रेत्याह जीवब्रह्मेति।
भवतु चिन्मात्रनिष्ठमज्ञानं विषयः तस्य ब्रह्म भविष्यतीति
न इत्याह तमेव इति। आत्मानमेव इत्यर्थः। अयमत्राशयः—
ब्रह्माज्ञानविषय इत्यत्र ब्रह्मशब्दार्थः कः? किं बिम्बप्रति-
बिम्बभावनिर्मुक्तं शुद्धं चिन्मात्रम्? आहोस्विद्बिम्बतापन्नं वा?
आद्ये इष्टापत्तिः, द्वितीये बिम्बताया अविद्योत्तरकालीन-
त्वात्, न सा तदालम्बते किञ्च अज्ञातब्रह्मसिद्धिः किं प्रमा-
णात्? भ्रमाद्वा? स्वप्रकाशत्वाद्वा? आद्ये ब्रह्मणो जड़त्वम् अवि-

विषयत्वमात्मनः सिद्धम्। तदुक्तम्। "आश्रयत्वविषयत्वभागिनी निर्विभागचितिरेव केवला। पूर्वसिद्धतमसो हि पश्चिमो नाश्रयो भवति नापि गोचरः॥"

तथापि तदज्ञानमेकमनेकं वेति कथं

च्छायाः प्रामाणिकत्वेन द्वैतापत्तिः विरोधाच्च। न हि प्रमाणनिवर्त्त्यमज्ञानं प्रमाणसम्बन्धं सहते। न द्वितीयः, ब्रह्मणोऽविद्याविषयत्वाभावप्रसङ्गात् विषयबाधादेव ज्ञानस्य भ्रमत्वात्। न तृतीयः, अज्ञातस्य ब्रह्मणः स्वप्रकाशत्वेन अस्फुरणात् तत् कथं ब्रह्माज्ञानविषय इति पूर्वोक्तयुक्तिपरामर्शार्थः। तस्मादिति शब्दः अविद्याजीवत्वब्रह्मत्वविभागनिर्मुक्तं शुद्धं चिदात्मानमाश्रयते तमेव विषयीकरोति इत्युक्तं तत्र सम्मतिमाह तदुक्तमिति। सर्वज्ञात्ममहामुनिभिरिति शेषः किमुक्तम् इत्यपेक्षायामाह आश्रयत्वेति। तमस आश्रयत्वविषयत्वभागिनी चितिः इत्यन्वयः। ननु अज्ञानस्य जीवाश्रयत्वे ब्रह्मविषयत्वेऽपि चितोऽज्ञानाश्रयत्वं तद्विषयत्वञ्च नानुपपन्नम् उभयत्रानुगतत्वात् इति नेत्याह निर्विभागेति। जीवत्वब्रह्मत्वविभागमनापन्ना इत्यर्थः। तथापि अज्ञानस्य अनात्मापि आश्रयो विषयश्च किं न स्यात् इति न इत्याह एवेति। एवकारार्थमेव स्पष्टयति केवलेति। तमसः शुद्धचिदतिरिक्तानाश्रयत्वे हेतुमाह पूर्वसिद्धेति। चिदन्यस्य अज्ञानानाश्रयविषयत्वे हेतुमाह पश्चिम इति। ननु अज्ञानस्य आश्रयैकत्वे सति अनेकता दुर्निरूपा। न हि प्रतिजीवं जगदुपादानभूतमज्ञानमनेकदेशि वापि स्वीक्रियते।

निर्णय इति चेत् ? एकमेव इति वदामः। किं तत्र साधकमिति चेत् ? उच्यते।

लौकिकी वैदिकी चापि नाऽज्ञाने दृश्यते प्रमा।
कार्य्यदृष्ट्याथ कल्प्यं चेत् ? लाघवादेकमेव तत् ॥८॥

अज्ञानं किं वेदसिद्धम् ? उत लौकिकप्रत्यक्षादिसिद्धम् ? उत परिदृश्यमानकार्य्यान्यथानुपपत्त्या कल्प्यम् ?।

एकत्वे च अज्ञानस्य बद्धमुक्तादिव्यवस्थानुपपन्ना इत्युभयत्र दोषदर्शनात् पृच्छति तथापि इति। धर्मिकल्पनातो धर्मकल्पना वरमिति न्यायेन उत्तरमाह एकमेव इति। अज्ञानमिति विशेष्यपदं प्रश्नवाक्यस्थमत्र योजनीयम्। एवकारोऽनेकतामज्ञानस्य वारयति तत्र अज्ञानैकत्वे अयमाशयः, अविद्यायाः एकत्वे यदि प्रमाणं सिद्धान्ती वक्ष्यति तदा अपसिद्धान्तः न च वक्ष्यति चेदविद्यैकत्वासिद्धिः, युक्तिमेव वक्ष्यति चेत् निर्मूलायाः तस्या आभासत्वादिति सर्वथापि न अज्ञानैकत्वसिद्धिरिति।

लौकिकीति च पूर्वार्द्धेन अपसिद्धान्तपरिहारः, उत्तरार्द्धेन लाघवाख्यतर्कोऽविद्यैकत्वं साधयतीति उच्यते इत्यर्थः। ननु न अज्ञाने दृश्यते प्रमेत्ययुक्तम्, अज्ञानस्वरूपे प्रमाया अदर्शनस्य प्रकृतासङ्गतत्वात्। न हि अज्ञानस्वरूपमस्ति न वेति विवादः किन्तु तदेकत्वनानात्व इति चेत्? न, अज्ञानव्यवस्थापकमेव तदेकत्वमपि व्यवस्थापयिष्यति इत्यभिप्रायात् इममेवार्थमभिप्रेत्य श्लोकं व्याचष्टे अज्ञानं किमिति। प्रत्यक्षादि

तत्र नाद्यः, पूर्वकाण्डस्य कर्ममात्रविषयत्वात् वेदान्तानां च परिपूर्णसच्चिदानन्दब्रह्ममात्रविषयत्वात् तत्रैव फलसम्बन्धात् अज्ञानादौ तदभावात् तदप्रतिपादकत्वात्। न अपि द्वितीयः, स्पष्टप्रत्यक्षादिसिद्धत्वे विवादाभावप्रसङ्गात्। तस्मात् स्वतोऽसङ्गोदासीनस्य

इत्यादिपदमनुमानं लौकिकञ्च शब्दमाह परिदृश्यमानेति। परिदृश्यमानं कार्य्यं जगदात्मकम्।

सर्वे वेदा यत् पदमामनन्ति इति अनाश्रित्य प्रथमं पक्षं दूषयति तत्रेति। तेषु विकल्पेषु मध्ये इत्यर्थः। कर्ममात्रेति। साक्षात् परम्परया च इत्यर्थः। एवं वेदान्तेषु अपि बोद्धव्यं किमिति एवं नियम्यते धर्मब्रह्मविषयत्वमेव वेदवाक्यानामिति यथाश्रुतेऽर्थे प्रामाण्यं किं न स्यात् तत्राह तत्रैव फल इति। अध्ययनविधिर्हि फलवदर्थावबोधमुद्दिश्य वेदाध्ययनं विधत्ते। न च साक्षात् वेदप्रतिपाद्योऽर्थः सर्वत्र फलवान् नामधेयाद्यर्थप्रतीतेः सुखदुःखाभावाद्यदर्शनात् धर्मज्ञानं स्वविषयमनुष्ठापयन् स्वर्गादि जनयति ब्रह्मज्ञानञ्च इतरनिरपेक्षमेव अनेकदुःखमयमज्ञानमपनयतीति धर्मब्रह्मणोः एव प्रतिपादने फलसम्बन्धात् इत्यर्थः। एवकारव्यावर्त्त्यमाह अज्ञानादिविति। आदिपदेन श्रवणाद्यर्थसंग्रहः। स्पष्टेति। प्रत्यक्षस्य स्पष्टत्वं विप्रतिपन्नेश्वरादिप्रत्यक्षभिन्नत्वम् इत्यर्थः। ततश्च अज्ञानस्य प्रमाणागम्यत्वात् न अपसिद्धान्तोऽपि इति भावः। एवं पूर्वार्द्धं

सदा स्वानन्दतृप्तस्य असत्यानेकविधसुख-
दुःखाद्यात्मकप्रपञ्चरचनानुपपत्त्या अज्ञानं
कल्प्यते इत्येव वाच्यं गत्यन्तराभावात्। तथा

व्याख्यातम्। तर्हि प्रमाणाभावात् न अज्ञानैकत्वं सिध्यति इत्याशङ्क्य लाघवसहकृतानुपपत्तिरूपा युक्तिः अज्ञानैकत्वसाधिका इत्येवं परिहारत्वेन उत्तरार्द्धं व्याचष्टे तस्मात् इति। यस्मात् न अज्ञाने प्रमाणं सम्भवति तस्मात् अज्ञानं कल्प्यते इति वाच्यमिति अन्वयः। कल्पकमाह प्रपञ्चेति। प्रपञ्चस्य रचना निर्माणम्। ननु यथा कुलालो घटं रचयन् न अज्ञानमपेक्षते एवम् ईश्वरोऽपि जगत् निर्मास्यति विनैव अज्ञानमिति तत्राह असङ्गेति। कारणादिसम्बन्धः सङ्गस्तद्रहितस्य इत्यर्थः। ननु वस्त्रं स्वभावतो जलसङ्ग्यपि यथा मधूच्छिष्टानुरक्तं जलासङ्गि भवति एवम् ईश्वरः स्वभावतः सङ्ग्यपि उपाधिवशात् असङ्गी किं न स्यात् इति न इत्याह स्वत इति। "असङ्गो हि अयं पुरुष इति" श्रुतेः उपाधेः अनिरूपणाच्च न असङ्गित्वम् औपाधिकम् इत्यर्थः। ननु "तत्तेजोऽसृजत" इत्यादि श्रुतेः ईश्वरस्य कर्तृत्वप्रतीतेः असङ्गत्वमसिद्धमिति न इत्याह उदासीनस्य इति। अकर्तुः इत्यर्थः। चेतनो हि प्रयोजनमुद्दिश्य कार्य्यं करोति प्रयोजनं च ईश्वरस्य दुःखाभावः सुखं वा? नाद्यः, तस्य स्वतः सिद्धत्वात्। न द्वितीय इत्याह सदा स्वानन्देति। ततश्च उभयविधप्रयोजनशून्यत्वात् उदासीनत्वात् तेजःप्रभृति कर्तृत्वमयुक्तम् इत्यर्थः। जगन्निर्माणञ्च ईश्वरात् श्रूयते "यतो वा" इत्यादिश्रुतेः, अत एवंविधस्य प्रपञ्चरचना विना अज्ञानं न सम्भवति इति अज्ञानं कल्प्यते इति भावः। ननु

च कल्प्यमानमज्ञानम् एकमनेकं वेति विवादे एकस्यापि निद्रादोषस्य अनेकविधकार्य्यजनकत्वस्य स्वप्ने दृष्टत्वात् लाघवसहकृतानि अन्य-

रजतमुत्पादयन्ती शुक्तिः अज्ञानमपेक्षते रजतस्य कल्पितत्वात् प्रपञ्चस्य पुनः सत्यत्वात् न तन्निर्माणेऽज्ञानापेक्ष इति न इत्याह असत्येति। "नेति नेति" इति प्रपञ्चस्य ईश्वरे निषेधात् असत्यस्य मिथ्यारूपस्य इत्यर्थः। अन्यस्मात् अचेतनादेः प्रपञ्च रचना नेति वक्तुं प्रपञ्चं विशेषयति अनेकेति। ततश्च यथा रज्जुः अज्ञातासत्यसत्यानेकविधसर्पसूत्रधारामालाद्यात्मकप्रपञ्चं रचयन्ती दृष्टा एवमसङ्गोऽपि चिदात्मा ईश्वरोऽज्ञानवशात् प्रपञ्चं रचयति इति अज्ञानसिद्धिरिति। एवकारद्योत्याम् अन्यथापि उपपत्तिं परिहरति गत्यन्तरेति। न तावत् अन्यथैव विनैव अज्ञानं प्रपञ्चोपपत्तिः असङ्गित्वात् ब्रह्मणः। नापि सत्येन उपाधिनापि उपपत्तिः कार्य्यस्य असत्यत्वात्। नापि असत्येन उपाध्यन्तरेणापि उपपत्तिः तस्य सादित्वे अनादिप्रपञ्चोत्पादने उपाधित्वायोगात् अनादित्वे च अज्ञानस्य एव नामान्तरकरणात्। न च अज्ञानस्य प्रपञ्चरचनोपपादकत्वासम्भवो रज्जोः अनेकसर्पादिप्रपञ्चनिर्माणेऽज्ञानस्य उपपादकत्वदर्शनात् असम्भवाभावात् गत्यन्तराभावात् अज्ञानमेव कल्प्यत इति वाच्यम् इत्यर्थः। कल्प्यतां नाम एव ज्ञानं तस्य एकत्वं कुत इत्याशङ्क्याह तथा च इति क्रमिकानेककार्य्यदर्शनात् अनेकाज्ञानकल्पनां प्राप्तां पराचष्टे विचित्रेति। न च एतददृष्टचरम् इत्याह निद्रेति। स्वप्नेऽनेकविधकार्य्यजनकत्वस्य निद्रादोषस्य दृष्टत्वात् इति योजना

थानुपपत्तिर्विचित्रशक्तिकमेकमज्ञानमादाय विश्राम्यतीति युक्तम्।

अतएव अज्ञानस्य जीवोपाधित्वात् तस्य च एकत्वात् तदुपाधिक आत्मा जीवो भवन्नेक एव भवति इति एकजीववादिनो

एकत्वकल्पने धर्मिग्राहकबाधं पराचष्टे कल्प्यमानमिति प्रपञ्च-रचनाया अज्ञानैकत्वानेकत्वकल्पने उदासीनत्वात् इति भावः। ननु अज्ञानानि अनेकानि कल्प्यन्तां तच्छक्तयो वा को विशेषः तत्राह लाघवेति। धर्मिकल्पनातो धर्मकल्पना वरम् इति न्यायात् धर्म्यैक्यकल्पने लाघवम् इत्यर्थः। ननु प्रपञ्चरच-नाया अज्ञानैकत्व इव अज्ञाननानात्वेऽपि उपपत्तेर्निष्फल-मज्ञानैकत्वसाधनमिति नेत्याह अतएवेति। यद्यपि मिथ्या-प्रपञ्चस्य रचनायामज्ञानैकत्वमफलं तथापि जीवैक्यसाधन-फलमज्ञानैकत्वमिति तत्साधनम् उचितम् इति भावः। कथ-मज्ञानैकत्वं जीवैकत्वसाधकम् इति तत्राह अज्ञानस्य इति। एतच्च प्रागुपपादितम्। तदुपाधिक इति एकाज्ञानोपाधिकः। उप समीपे स्थित्वा स्वीयं रूपमन्यत्रादधाति इति उपाधिः। अज्ञानमपि चिदात्मसमीपे स्थित्वा स्वीयमेकत्वम् उपहिते चिदात्मनि समर्पयति इति तदुपाधिक आत्मा जीवोऽपि एक इत्यर्थः। एकाज्ञानोपाधिक आत्मा जीवभावं प्राप्नुवन्ननेको-ऽपि किं न स्यात् दृश्यन्ते हि दर्पणादौ एकस्मिन्नुपाधौ मुखस्तम्भपुरुषादयो बहव इति तत्राह एव इति। उपाधेः एकत्वेऽपि बिम्बानां भेदात् प्रतिबिम्बनानात्वं युक्तं दृष्टान्ते प्रकृते तु न बिम्बनानात्वं ततश्च उपाध्यैक्ये बिम्बैक्ये च उप-

वदन्ति। यथोक्तानुपपत्तिसिद्धार्थानुवादिनी श्रुतिः अपि। "अजामेकां लोहितशुक्लकृष्णां बह्वीः प्रजाः सृजमानां सरूपाः। अजो ह्येको

हितोऽपि एक एव इत्यर्थः। ननु यदुक्तं लाघवादेकमज्ञानमिति तदसत् "इन्द्रो मायाभिः पुरुरूप ईयत" इति श्रुतेः अज्ञाननानात्वप्रतीतेः प्रमाणवतः गौरवस्यापि न्याय्यत्वात् लाघवस्य अकिञ्चित्करत्वात्। यच्चोक्तं, "जीवैक्यसाधनायाज्ञानैक्यमर्थ्यते" इति तदपि असत्, "रूपं रूप"मिति श्रुतेऽर्जीवनानात्वप्रतीतेः इति शङ्कायामाह यथोक्तेति। असङ्गोदासीनस्य आत्मनः प्रपञ्चरचनानुपपत्त्या लाघवसहकृततया सिद्धमेकाज्ञानं तदर्थः। तत्प्रयोजनञ्च जीवैक्यं तदुभयानुवादिनी श्रुतिः अपि विद्यते इति शेषः। न च अज्ञानस्यैकत्वे मायाभिरिति बहुवचनविरोधः, बहुवचनस्य मायागतशक्तिपरत्वात् शक्तीनां मायाधर्मत्वेन मायाशब्दत्वोपपत्तेः। अन्यथा "मायान्तु प्रकृतिं विद्यात्" इति एकवचनविरोधः ततो बहुवचनं ज्ञानभेदपरम्, एतेन गौरवं स्वीकर्त्तव्यं प्रामाणिकत्वात् इति परास्तं प्रामाणिकत्वस्यैवासिद्धेः। यच्च जीवभेदे प्रमाणम् उक्तं "रूपं रूपम्" इति तदपि असत्, एकजीवमोहकल्पितानेकप्राणिभेदपरत्वात् मन्त्रवर्णस्य अन्यथा "अजो ह्येकोऽनीशया शोचति मुह्यमानः" इत्यादि जीवैकत्वप्रतिपादकश्रुतिविरोधप्रसङ्गः। ततो न जीवनानात्वमपि इति भावः। श्रुतिं पठति अजामिति। ननु अविद्योपस्थापकपदाभावात् न अयं मन्त्रोऽविद्यां गमयति कुतः, तदेकत्वं कुतो वा तदुपहितस्यैकत्वम् इत्याशङ्क्य मन्त्रार्थं वक्तुम् उपक्रमते अस्येति। "श्रुतिरूपमन्त्रस्य इत्यर्थः। बह्वीः प्रजाः सृजमानां सरूपाः" इति पादमर्थतो व्याकुर्वन् अजामिति

जुषमाणोऽनुशेते जहात्येनां भुक्तभोगामजोऽन्यः॥ अस्य अयमर्थः। असत्यस्य जगतोऽविद्याहेतुकत्वे वक्तव्ये सा किं जन्या अजन्या वा इति संशये न जन्येत्याह अजामिति। न च अविद्यावाचकपदाभावः अजामिति अस्य एव स्त्रीलिङ्गनिर्दिष्टस्य तद्वाचकत्वात्। तस्या अनेकत्वं व्यावर्त्तयति एकामिति। तस्या विचित्रकार्य्यजननसामर्थ्यं त्रिगुणात्मकत्वेन समर्थयते लोहित इत्यादिना। तादृशाविद्योपहितस्य जीवस्य उत्पत्तिं निरस्यति अज इति। तस्य जीवस्य अनेकत्वं निषेधयति एक इति। ननु जीवगतमनेकत्वं लोकेऽनुभूयते तत्कथमेकत्वम् इति आशङ्का अभेदस्य उपनिषत्प्रसिद्धत्वं युक्तसिद्धत्वं च प्रसिद्धार्थेन हिशब्देन आह हि इति। ननु स्वयम्प्रकाशब्रह्माभिन्नत्वात् जीवस्य कथं तद्विलक्षणावस्थेति अत आह अनुशेते इति। तामविद्यामनुसृत्य निद्रित

पदव्यावर्त्त्यमाह असत्यस्य इति। असत्यमनिर्वचनीयं तस्य सर्वस्य जगतोऽनिर्वचनीयत्वेन सरूपत्वात् असत्यपदेन सरूपा इति पदं व्याख्याय जगत् इति पदेन बह्वीरिति पदम् अविद्याहेतुकत्वपदेन सृजमानाम् इति पदं व्याख्यातम्। अविद्याहेतु-

इव शेते अज्ञानेन आवृतः सन् मुद्रितज्ञाननेत्रो भवति इत्यर्थः। पश्चात् कार्य्याकारेण स्थितां तामेव जुषमाणः सेवमानः संसारी भवति स्वप्नदृगिव इत्याह। जुषमाण इति। ननु अविद्याया अनादित्वेन अविनाशित्वादनिर्मोक्षप्रसङ्ग इति अत आह जहात्येनाम् इति। वाक्योत्थात्मतत्त्वसाक्षात्कारेण निवर्त्तयति इत्यर्थः। त्याज्या चेत् अविद्या कथं तर्हि तामाश्रितवानात्मा इत्याशङ्क्य भोगार्थं हि अविद्याश्रयणं भोगस्य च तया जनितत्वात् इदानीं स्वात्मदर्शनेन प्रयोजनशून्यां मन्यमानो जहाति इत्याह भुक्तभोगामिति। भुक्तो भोगो यया सा तथा इति विग्रहः।

कत्वे वक्तव्य इत्यत्र द्वितीयचरणानुरोधेन इति शेषः। अभेदस्य इति। एको देवः सर्वभूतेषु गूढः नान्योऽतोऽस्ति द्रष्टा नान्योऽतोऽस्ति श्रोता एक एव हि भूतात्मा भूते भूते व्यवस्थित इति स्मृतिसहितोपनिषत्प्रसिद्धत्वम् इत्यर्थः। उपाधिविम्बयोः ऐक्यमुपहितस्य एकत्वे तत्त्वम् इत्याद्या युक्तिः तत् सिद्धत्वम् इत्यर्थः। जीवानेकानुभवो जीवाज्ञानकल्पितानेकप्राणिविषय इति द्योतयितुं चशब्दः अनादित्वेन इति भावत्वे सति इति शेषः। यद्वा सत्कार्य्यवादिमते प्रागभावास्वप्रतिपत्तेर्नैव शेषोपादानम्।

ननु अविद्याविशिष्टस्य जीवत्वात् अविद्याया जीवस्वरूपान्तर्भावात् कथं जहाति इत्युक्तम् इत्यत आह अजोऽन्य इति।
अजो जीवोऽविद्यातोऽन्य एव न तु अविद्यान्तर्भावेन जीवत्वम् अविद्याया जड़त्वात् जीवस्य च चेतनत्वात् जीवोपाधित्वेन स्वीकारात् चेति।

बन्धमोक्षव्यवस्था स्यात् जीवाभेदे कथं तव।
यथा दृष्टं तथैवास्तु दृष्टत्वात् स्वप्नदृष्टवत्॥ ९॥

थयेति साधने तृतीया तेन भोगवत्त्वाभावात् न अविद्यायाश्चेतनत्वम् इत्यर्थः।

अज्ञो जन्तुरित्यादावज्ञ इत्यादिविशेषणत्वेन शङ्कते ननु अविद्येति। अविद्याया जीवत्वाधिकरणत्वे चेतनत्वप्रसङ्ग इत्यर्थादुक्तं तदयुक्तम्, विशिष्टवृत्तेर्धर्मस्य विशेषणवृत्तित्वनियमाभावात् अन्यथा रक्तं घटमानय इत्यत्र रक्तरूपघटत्वजात्यादेरपि क्रियावत्त्वप्रसङ्ग इति अपरितोषाद्धेत्वन्तरमाह जीवोपाधित्वेन इति। प्रपञ्चरचनोपपादिका अविद्या सा च लाघवादेका तादृगविद्योपाधिक आत्मा जीवो भवन्नेक एव भवतीत्युक्तं तत्र जीवैक्ये बन्धमोक्षादिव्यवस्थामुपपादयितुं जिज्ञासामुत्थापयति बन्धमोक्षेति। तव मते एकस्मिन् जीवे सति तत्त्वज्ञानात् प्राक्बद्ध इत्येवं व्यवहारो भवेत् तत्त्वज्ञानोत्तरकालं व्यवहर्तुरभावात् मुक्तव्यवहारो न स्यात् दृश्येते मुक्तबद्धाविति सम्प्रति व्यवहारौ अतो जीवैक्ये तौ व्यवहारौ अनुपपन्नौ इत्यर्थः। उत्तरमाह यथा इति।

ननु एक एव चेत् जीवः कथमेको बद्ध एको मुक्त इति व्यवस्थितिः। ननु का अत्रा-नुपपत्तिरनुभवसिद्धत्वात् द्वैतस्य। अनुभव एव

जीवभेदे यथा दृष्टं जगत् कश्चिद् बद्धः कश्चिन्मुक्त इति व्यव-क्रियमाणं जीवाभेदेऽपि तथैवास्तु बन्धमुक्तिव्यवस्थावत् जगत् अस्तु इत्यर्थः। ननु जीवाभेदे तदनुपपन्नम् इत्युक्तं, सत्यमुक्तं परं तु अनुपपत्तिर्न सम्भवति न हि दृष्टेऽनुपपन्नं नाम इत्यभि-प्रेत्य हेतुमाह दृष्टत्वात् इति। चैतन्याज्ञानकल्पितबद्धमुक्तादि-व्यवस्थाया जगत एकजीववादेऽपि दर्शनोपपत्तेर्नानुपपत्तिः इत्यर्थः। ननु अविद्याकल्पितस्य बाधितत्वात् न व्यवहारोप-पादकत्वम् इत्याशङ्क्य दृष्टान्तेन परिहरति स्वप्नदृष्टवदिति। किमविद्याकालेन व्यवहारोपपादकत्वम् अविद्याकल्पितस्य उत बाधकाले? आद्ये यथा स्वप्ने स्वप्नदृष्टाविद्याकल्पितानेक-गजतुरगादेः स्वव्यवहारोपपादकत्वदर्शनं तथा जाग्रत्कालेऽपि किं न स्यात्, द्वितीये तु इष्टापत्तिः अतो न किञ्चित् अवद्यम् इत्यर्थः।

पूर्वार्द्धं व्याचष्टे ननु इति। दृष्टत्वात् इत्यन्तं व्याकुर्वन्नुत्तर-माह ननु का अत्रेति। एकजीववादे व्यवस्थायां का अनुप-पत्तिः इत्यर्थः। अनुपपत्त्यभावे हेतुमाह अनुभवेति। न हि दृष्टेऽनुपपन्नं नाम इत्यर्थः। ननु लब्धसत्ताकोऽनुभवोऽनुप-पत्तिं परिहरति सत्यम् एकजीववादे तु अनुभवस्वरूपमेव न सम्भवति इति शङ्कते अनुभव एवेति करणाभावात् इति हेतुमाह एकेति। एकस्य वामदेवस्य श्रवणादिसाधनसम्पन्नस्य तत्त्वमस्यादिवाक्यात् तत्त्वसाक्षात्कारात् सकलसंसारोपा-

नोपपद्यते एकमुक्त्या सकलसंसारोच्छेदात् इति चेत्? न, अन्तःकरणादेर्यथायथमाविद्यकस्य स्वीकारात् करणानुपपत्त्यभावात्। विषयाभावात् प्रामाण्यानुपपत्त्या अनुपपन्नोऽनुभव इति

दानाविद्यानिवृत्त्यात्मकमुक्त्यानुभवोत्पत्तिहेतोः अन्तःकरणेन्द्रियादेर्विषयस्य बद्धमुक्तादेश्च संसारस्योच्छेदात् अनुभवस्वरूपलाभो न स्यात् इत्यर्थः। वामदेवशब्देन शरीरावच्छिन्नं चैतन्यमुच्यते उत अनवच्छिन्नमज्ञानि चैतन्यम्? नाद्यः, तस्य कल्पितत्वेन बद्धमुक्तत्वानधिकरणत्वात् अविद्यावान् हि बद्धः न च अवच्छिन्नमविद्यावत् अविद्योत्तरभावित्वात् तेन अवच्छिन्नं चैतन्यं न बद्धम् अतएव न मुक्तं बद्धो हि मुच्यते। अथ अनवच्छिन्नमज्ञानि चैतन्यं वामदेवशब्दार्थः तर्हि तदज्ञानं न निवृत्तमहमज्ञ इति प्रतीतेरेव ततश्च अज्ञानकल्पितविविधकरणस्य यावदज्ञानसद्भावात् अनुभवोपपत्तिः इत्यभिप्रायेण पूर्वपक्षनिषेधं प्रतिजानीते न इति। उक्ताभिप्रायं प्रकटयितुं न इति निषेधे हेतुमाह अन्तःकरण इति। अयमर्थः अनुभवो न सम्भवति इति यदुक्तं तत् कुतः किं करणाभावात् विषयाभावात् वा? नाद्य इत्याह अन्तःकरणादेः इति। आदिपदं वाह्येन्द्रियलिङ्गशब्दादेर्ग्राहकम्। ननु तेषां स्वीकारे द्वैतापत्तिरिति न इत्याह आविद्यकस्य इति। द्वितीयेऽपि इदं चिन्त्यं, विषयः किमनुभवस्वरूपोपयोगी तत्प्रामाण्योपयोगी वा? नाद्यः, विषयासत्त्वेऽपि अतीतादिज्ञानदर्शनात् द्वितीयं शङ्कते विषयाभावात् इति। ननु किं प्रामाण्येन स्वकारणादुत्पन्नोऽनुभवोऽनुपपत्तिं परिहरिष्यति इति

चेत्? तत्र वक्तव्यं कीदृशो विषयोऽपेक्षितः। व्यवहारयोग्यश्चेदस्त्येवासौ। परमार्थसत्यश्चेत् कथमेवं भविष्यति एकत्वस्य एव वेदतात्पर्य्यविषयत्वात् तत्र एव फलसम्बन्धात्।

तत्राह प्रामाण्येति। अनुपपन्नः कार्य्याक्षमः इत्यर्थः। तथा च तादृगनुभवोऽनुपपत्तिं न परिहरिष्यतीति भावः। तत्रेति। प्रामाण्यानुपपत्त्यानुभवानुपपत्तौ इत्यर्थः। कीदृश इति अर्थक्रियासमर्थो वा परमार्थसत्यो वा? इति किं शब्दार्थः अपेक्षित इति। अत्र अनुभवप्रामाण्याय इति शेषः। अस्ति एव असौ इति तथा च अनुभवबलात् व्यवस्था उपपन्नेति भावः। ननु मिथ्यार्थो न प्रामाण्यं प्रयोजयति भ्रमस्यापि प्रामाण्यप्रसक्तेः, किन्तु परमार्थसत्यः अविद्याकल्पितस्य बद्धमुक्तादेः पारमार्थिकत्वाभावात् न स्वानुभवप्रामाण्योपपादकता इति अभिप्रायेण द्वितीयमुत्थापयति परमार्थेति। तथा च प्रपञ्चस्य सत्यत्वे जीवानेकत्वस्य सत्यत्वे किं वक्तव्यमिति भावः। दूषयति कथमेवमिति। बद्धमुक्तादिभेदप्रपञ्चस्य सत्यत्वं कथं भविष्यति इत्यर्थः। भेदप्रपञ्चः सत्य एव कथं न भविष्यति इति चेत्? तत्र वक्तव्यं किमद्वैतग्राहकप्रमाणाभावात् भेदसत्यत्वं शङ्कते उत भेदमिथ्यात्वग्राहकाभावात् वा? नाद्यः, इत्याह एकत्वस्य इति। तात्पर्य्यग्राहकषड्विधलिङ्गोपेतो वेदः तत्त्वमस्यादिवाक्यं त्रिविधवस्तु परिच्छेदशून्यं वस्तु परमार्थतो बोधयति ततः परिच्छेदो न परमार्थसत्य इत्यर्थः। महावाक्यस्य अद्वैतमात्रविषयत्वे हेतुमाह तत्र एव इति। अध्ययनविधिर्हि फलवदर्थावबोधाय अध्यापयति वेदवाक्यानि फलवांश्च अद्वैतसाक्षात्कार एव तरति शोकमात्मवित् इत्या-

भेदस्य च सर्वस्य प्रतिपन्नोपाधौ नेति नेति इति वाक्येन निषिध्यमानतया मिथ्यात्वस्य सिद्धत्वात्। वेदे एव वामदेवादेर्ज्ञानं श्रूयते इति चेत्? सत्यं तस्य जीवभेदाप्रतिपादकत्वात्।

दिश्रुतिः। अतोऽद्वैतप्रतिपादन एव फलसम्बन्धो न अन्यत्रेति अद्वैतं वेदतात्पर्य्यगोचर इत्यर्थः।

द्वितीयं दूषयति भेदस्य चेति। ननु वेदस्य अद्वैत एव तात्पर्य्यमिति अनुपपन्नं, तदद्वैतं पश्यन् ऋषिर्वामदेवः प्रतिपेदे इति श्रुतिः वामदेवो ज्ञानात् मुक्त इति प्रतिपादयन्ती भेदमपि गोचरयति तत्कथमद्वैतमेव श्रुतिगोचर इति शङ्कते वेद एवेति। यो यो देवानाम् इत्यादिश्रुतिसिद्धाद्वैतसाक्षात्काराणां देवादीनां संग्रहाय आदिपदं यथाश्रुतमङ्गीकरोति सत्यम् इति। तर्हि जीवभेदः सिद्ध इति चेत्? तत्र इदं वक्तव्यं किमिदं वाक्यं साक्षात् जीवभेदमापादयति उत तत् तद्ब्रह्म? एतत् एतमात्मानं पश्यन् अपरोक्षीकुर्वन् अहं ब्रह्मास्मीत्येवं साक्षात्कुर्वन् अहं मनुरभवं सूर्य्यश्च इत्येवं जातीयकान् सर्वभावापत्तिप्रतिपादकान् मन्त्रान् प्रतिपेदे दृष्टवानिति श्रुतौ योऽर्थः तदनुपपत्त्या जीवभेदः कल्प्यत इति आद्यं दूषयति तस्य जीवेति। तस्य तद्धि एतत् इत्यादिवाक्यस्य भेदाप्रतिपादकत्वञ्च भेदस्य अपदार्थत्वेन अवाक्यार्थत्वात् भेदाकारज्ञानाजनकत्वात् चेति। ननु वामदेवकर्तृकात् ज्ञानात् वामदेवः सर्वभावं प्राप्तवानिति श्रुतोऽर्थः तदा उपपद्यते यदि वामदेवपदवाच्यः कश्चित् जीवो

श्रुतार्थानुपपत्त्या कल्प्यते इति चेत्? न, निश्चितार्थजीवैक्यप्रतिपादकवाक्यान्तरविरोधेन कल्पनानुपपत्तेः। एकजीवपक्षे एकमुक्त्या सर्वमुक्तिप्रसङ्ग इति चेत्? न, एकत्ववादिनं प्रति सर्वत्वस्य निरूपयितुमशक्यत्वात्। तथापि बहवो जीवा अनुभवसिद्धा इति चेत्? भवतु तर्हि स्वप्नवद्व्यवस्था।

ननु यथा स्वप्ने एक एव स्वप्नदृक् परमार्थसत्यः अन्ये तद्भ्रमकल्पिताः सर्वे एवं जाग-

मुक्तो बद्धान्मुमुक्षोर्मुक्तोऽन्यो भवेत् ततः श्रुतार्थानुपपत्तिर्जीवभेदप्रमापिका इति।

द्वितीयं पक्षमुत्थापयति श्रुतार्थेति। कल्पना हि पुरुषबुद्धिमूला सा च अविरोधाधिकरणन्यायेन निश्चितार्थश्रुत्या बाध्यते इति नेति प्रतिज्ञायां हेतुमाह निश्चितेति। अजो हि एकः सर्वभूतान्तरात्मा इत्यादिवाक्यानि जीवैक्यप्रतिपादकानि। ननु जीवैक्यप्रतिपादकवाक्यानां निश्चितार्थत्वं न युक्तं तर्कविरोधात् इति शङ्कते एकजीवेति। तर्काभासत्वं न परिहरति नेति। तर्कविरोधाभावेऽपि अनुभवविरोधः स्यात् इति शङ्कते तथापि इति। अनुभवस्य चिदज्ञानकल्पितभेदविषयत्वेन भ्रमत्वात् न तेन श्रुतिबाधो युक्त इत्यभिप्रेत्य परिहरति भवतु तर्हि इति।

अभिप्रायमविद्वान् दृष्टान्तदार्ष्टान्तिके व्याकुर्वन् अनिष्टमाशङ्कते ननु यथा इति। ननु स्वप्नद्रष्टा परमार्थसत्य इति

देऽपि एक एव परमार्थसत्योऽन्ये सर्वे कल्पिताः तथा च बहूनां मध्ये कोऽसावेक इति अनिश्चये कः श्रवणादौ प्रवर्त्तेत इति साधनानुष्ठानाभावेऽनिर्मोक्षप्रसङ्ग इति चेत्? नूनं देहात्मवादमाश्रित्य भ्रान्तोऽसि। कथमिति चेत्? शृणु। स्वप्नेऽन्ये जीवाः कल्पिता इति कोऽर्थः। किं देहा देवगन्धर्वादिसंज्ञकाः कल्पिताः? उत अज्ञानोपाधिको यो जीवोऽस्मदभिमतः

प्रतीतिः स्वप्नकाले तन्निवृत्त्युत्तरकाले वा? नाद्यः, जागरेऽपि तद्वत्प्रसक्तेः तथा च अनिश्चयाभावात् कथं न श्रवणे प्रवृत्तिः द्वितीयेऽपि स्वप्ननिवृत्त्युत्तरकाल इव जागरनिवृत्त्युत्तरकाले भवितव्यमनया प्रतीत्या न च सा युज्यते तथा हि जागरनिवृत्त्युत्तरकालः किं स्वप्नकालः? सुषुप्तिकालो वा? मुक्तिकालो वा? नाद्यः, स्वप्ननिवृत्त्युत्तरकाले एव तादृक् प्रतीतेः उदय स्वीकारात्। न द्वितीयः, सुषुप्तौ विशेषज्ञानाभावात्। अतएव न तृतीयः प्रमातृत्वाभावात् च ततः असत् एतत् चोद्यमिति चेत्? मैवम्, अर्थापरिज्ञानात् न ब्रूमो वयं यत् स्वप्नदृगित्थं वेदेति किन्तु स्वाप्नपदार्थस्य तत् द्रष्ट्रविद्याविवर्त्तत्वात् स्वप्नद्रष्टुश्च तादृगविद्याधिष्ठानत्वात् परमार्थसत्यतेति युक्त्या निश्चिते तत् दृष्टान्तेन अत्रापि जागरे तथात्वसम्भावनायां बहूनां द्रष्टॄणां मध्ये कस्य अविद्याविवर्त्तः अयं प्रपञ्च इति संशयः स्यात् एव निश्चयहेत्वभावादिति युक्तं नोद्यमिति जागरे अनेकद्रष्टॄणां निरूपणाभावात् संशयानुप-

तादृशा एव बहवोऽनुभूताः तेषां एकः सत्योऽन्ये कल्पिता इति। नाद्यः, देहानां कल्पितत्वेऽपि अविरोधात्। न हि देहं वा देहावच्छिन्नं वा श्रवणाद्यधिकारिणं ब्रूमो येन अविनिगमो दोषः स्यात्।

न द्वितीयः अज्ञानावच्छिन्नस्य स्वप्ने भेदा-

पत्तौ श्रवणादौ प्रवृत्त्युपपत्त्या न अनिर्मोक्षप्रसङ्ग इति परिहर्त्तुं दृष्टान्ते स्थित्वा विचारमारभते नूनमिति। तेषामिति अनुभूतानाम् अज्ञानोपहितानाम् इत्यर्थः। ननु तेषामनुभूतानां मध्ये एकः सत्यः अन्ये कल्पिता इति अनुपपन्नम्, अनुभूतानामनुभाव्यत्वेन शुक्तिरजतवत् कल्पितैकरूपत्वात् अनुभवितुरेव सत्यत्वादिति। मैवं सर्वेषामज्ञानामनुभवितृत्वस्यापि विद्यमानत्वात् किमेक एव परमार्थतोऽनुभविता लाघवात् अन्येऽज्ञा अनुभवितारोऽपि कल्पिता एवेति कल्पनाया युक्तत्वात् इति प्रथमं दूषयति नाद्य इति। अविरोधात् इति। अनेकद्रष्टृकल्पनाप्राप्तसंशयादिना अनिर्मोक्षप्रसङ्गलक्षणविरोधाभावात् देहानामद्रष्टृत्वात् इत्यर्थः। ननु देहस्य वा तदवच्छिन्नस्य वा द्रष्टृत्वादीनां कल्पितत्वात् कथमनेके द्रष्टारो न कल्प्यन्ते इति कथं न पूर्वोक्तविरोध इति तत्राह न हि इति। द्रष्टा हि श्रवणादौ अधिकारी अज्ञानाश्रयश्च द्रष्टा देहो वा तदवच्छिन्नो वा न अज्ञानाश्रय अज्ञानकार्य्यत्वेन अज्ञानाश्रयत्वानुपपत्तेः ततो देहादिकल्पेन पिकः परमार्थसत्यः श्रवणाद्यधिकारीत्यविनिगमात् अप्रवृत्तेः अनिर्मोक्षापत्तिलक्षणो विरोधो नास्ति इत्यर्थः।

ऽननुभवात्। न हि पराज्ञानावच्छिन्नः परस्य प्रत्यक्षो भवतुमर्हति। तथापि तत्तद्देहचेष्टया अनुमीयत इति चेत्? न, एकेनापि अनेक-

स्वप्ने जीवभेदा अनुभूयन्ते इति पक्षं प्रत्याह न द्वितीय इति। यद्यपि अहमज्ञ इति अज्ञानोपहितमात्मानमनुभवत्येव स्वप्नदृक्, तथापि जीवभेदं न अनुभवति इति हेतुमाह अज्ञानेति। किमज्ञानोपहितजीवभेदं प्रत्यक्षमवगाहते उत अनुमानं? नाद्यः, इत्याह न हि इति। अयमर्थः किमेकमज्ञानमनेकजीवोपाधिः उत प्रतिजीवं भिद्यते अज्ञानमिति? नाद्यः, उपाध्यभेदे उपहितभेदादर्शनादित्युक्तम्। द्वितीयश्चेत् तत्राह न हि इति। परस्य ज्ञानवत् पराज्ञानस्यापि अतीन्द्रियत्वात् तदवच्छिन्नो न अन्येन प्रत्यक्षीकर्तुं शक्यते इत्यर्थः। यद्यपि प्रत्यक्षं न जीवभेदं स्वप्ने अवगाहते तथापि अनुमास्यते, जीवभेद इति। द्वितीयमुत्थापयति तथापि इति। शरीरतदवयवसमवेता धर्मादिनिमित्तजा काचिद्विशिष्टा क्रिया चेष्टा नाम सा च देहभेदाद्भिद्यते तदुपादानसमवेतः प्रयत्नवदात्मसंयोगश्च अस्याश्चेष्टाया असमवायिकारणं चेष्टा च तादृशमसमवायिकारणमनुमापयन्ती असमवायिकारणविशेषणतया आत्मानमनुमापयति स च आत्मा प्रतिदेहं भिन्नः अन्यथा एकस्मिन् देहे चेष्टमाने सति सर्वे देहाश्चेष्टेरन् चेष्टाहेतोः आत्मशरीरसंयोगस्य विद्यमानत्वात् तस्मात् तत्तच्छरीराधिष्ठाता तच्छरीरचेष्टया पृथगनुमीयते इति स्वप्ने जीवभेदोऽनुभवसिद्ध इत्यर्थः। तमेतं पक्षं दूषयति नेति। हेतुमाह एकेन इति। अयमत्रार्थः तत्तच्छरीरचेष्टया पृथगात्मा

देहचेष्टोपपत्तेः नैयायिकानां कायव्यूहदशायां योगिदेहवत्। तद्वदेव अनुसन्धानप्रसङ्ग इति चेत् सत्यम्? अविद्यावच्छिन्नं प्रति इष्टत्वात् तत्तद्देहावच्छिन्नं प्रति तत्रापि अभावात्

अनुमीयते इति कुतः? किमेकस्मिन् देहे चेष्टमाने सर्वे देहाश्चेष्टेरन्? इत्यतिप्रसङ्गात् किंवा एकस्मात् आत्मनोऽनेक-देहचेष्टानुपपत्तेः? अथवा अनेकशरीराधिष्ठातुरेकस्य स्वीकारे शरीरान्तरकृतकार्य्यानुसन्धानप्रसङ्गात्? इति आद्यं दूषयति नेति। न हि आत्मसंयोगमात्रं चेष्टायां हेतुः किन्तु प्रयत्न-वदात्मसंयोगः प्रयत्नश्च यच्छरीरावच्छेदेन उत्पद्यते तच्छरीर-चेष्टायां हेतुरिति कथमिति प्रसङ्गः स्यात् तत्तद्देहारम्भक-धर्म्मादिनिमित्तस्य नियामकत्वात् न अतिप्रसङ्ग इत्यर्थः। द्वितीयं दूषयति एकेन इति। चेष्टाहि तत्तच्छरीरवर्त्तिनी स्वासमवायिकारणमात्मशरीरसंयोगमपेक्षते संयोगविशेषणवान् आत्मा एको वा अनेको वा? अनेको वेत्यत्र उदास्ते ततोऽनया न आत्मभेदोऽनुमीयते इत्यर्थः। किञ्च अनेकशरीवर्त्तिन्यश्चेष्टा एकात्मसंयोगासमवायिन्यः चेष्टात्वात् एकशरीरमात्रसमवेत-चेष्टावत् न च एकशरीरमात्रनिष्ठचेष्टात्वमुपाधिः योग्यनेक-शरीरचेष्टा सुसाध्या व्यापकत्वादिति अभिप्रेत्य एकेन आत्मना अनेकदेहचेष्टोपपत्तौ दृष्टान्तमाह। नैयायिकानाम् इति। तृतीयमुत्थापयति तद्वदेवेति। योगिवदेव इत्यर्थः। शरीरानुप-हितस्य अविद्यावच्छिन्नस्य साक्षिणोऽनुसन्धानमापद्यते शरी-रावच्छिन्नस्य वा नाद्यः इष्टापत्तेः न द्वितीयः उपाधिभेदात् इत्याह अविद्यावच्छिन्नं प्रतीत्यादिना तत्रापि योगिदेहेषु

आत्ममात्रस्य अनुसन्धातृत्वात्। अत एव एकस्मिन्नपि देहे पादावच्छिन्नः शिरोऽवच्छिन्नस्य दुःखं नानुसन्धत्ते पादे मे सुखं शिरसि मे वेदना इति अनुभवात्।

तथा च देहात्मभ्रममाश्रित्यैव जीवभेदानुभव इति स्थितम्। तथापि कथमत्र अनुभव इति चेत्? श्रोतव्यं साधधानेन। एक एव नित्यशुद्धबुद्धमुक्तस्वभाव उपनिषन्मात्रगम्यो वस्तुतोऽस्ति।

इत्यर्थः। कः तर्हि योगिदेहेषु अनुसन्धाता इत्यपेक्षायामाह आत्ममात्रस्य इति। अज्ञानमात्रोपहितस्य इत्यर्थः। उक्तमर्थमनुभवेन द्रढ़यति अतएवेति। उक्तयुक्त्या अज्ञानावच्छिन्नस्य स्वप्ने प्रत्यक्षतः अनुमानाद्वा भेदस्य अननुभवात् जीवभेदानुभवो देहभेदमेव अवलम्बते इति सिद्धम्।

उपसंहरति तथा च इति। एवं दृष्टान्ते स्वप्ने द्रष्ट्रैक्यं प्रतिपाद्य दार्ष्टान्तिकेऽपि द्रष्ट्रैक्यं जीवभेदानुभवस्य च शरीरभेदविषयत्वं प्रतिपादयितुम् अर्थात् बन्धमुक्तादिव्यवस्थां च उपपादयितुं जिज्ञासामुत्थापयति तथापि इति। अत्र जाग्रदवस्थायां जीवभेदानुभवादिः इत्यर्थः। जीवभेदाद्यनुभवं प्रतिपादयितुमाह श्रोतव्यमिति। स एव जागरे इति भ्रान्तो भवतीति योजना स क इत्यपेक्षायामाह एक इति, आत्मेति शेषः। एकः त्रिविधपरिच्छेदशून्यः भेदाभेदनिरासाय एवकारः। तं देहादेर्भिनत्ति नित्येति। कुतः तस्य नित्यतेति तत्राह शुद्धेति।

स एव अज्ञानमाश्रित्य जीवभावं लब्ध्वा देवतिर्य्यङ्मनुष्यादिदेहान् परिकल्प्य तदुपकरणत्वेन ब्रह्माण्डादि चतुर्दशभुवनं सृष्ट्वा तेषु तेषु देहेषु कश्चिद्देवः कश्चित् मनुष्यः कश्चित् हिरण्यगर्भः सर्वेषां स्रष्टा कश्चित् विष्णुः पालकः कश्चित् अन्यः सर्वसंहारकर्त्ता रुद्रः प्रलये। तेषामुपाधयः सत्त्वादिगुणाः तद्वशात्

अविद्यातत्कार्य्यरहित इत्यर्थः। अविद्यकस्य अविद्यायाश्च अनित्यत्वात् आत्मनश्च तदन्यत्वात् नित्यता इत्यर्थः। आत्मनोऽविद्या तत्कार्य्यरूपत्वाभावे हेतुमाह बुद्धेति। जड़रूपाविद्यायाः तत्कार्य्याच्च चिद्रूपस्य आत्मनोऽन्यत्वं युक्तम् इत्यर्थः। ननु आत्मा संसारी स च अविद्याकार्य्य इति नेत्याह मुक्तस्वभाव इति संसारित्वधर्मस्य अविद्याकार्य्यत्वेऽपि विशेष्यस्वरूपं न कल्पितम् इत्यर्थः। विमुक्तश्च विमुच्यते इति श्रुतिं प्रमाणयति उपनिषदिति। प्रत्यक्षादिसंवादविसंवादाभ्याम् उपनिषदां तत्र अप्रामाण्यं व्यावर्त्तयति मात्रेति। अतएवाह वस्तुत इति।

ननु शुद्धचैतन्यस्य न जागराद्यवस्था सम्भवति तस्य अजीवधर्मत्वात् इति तत्राह। स एव जीवभावं लब्ध्वा इति। तर्हि मुक्तत्वसंसारित्वविरुद्धरूपवत्त्वप्रसङ्ग इति तत्राह अज्ञानमाश्रित्येति। शुक्त्यज्ञानकल्पितरजतवत् पूर्वोक्तात्माज्ञानकल्पितत्वात् जीवभावस्य इति न विरुद्धरूपवत्त्वप्रसक्तिः इत्यर्थः। जीवभेदानुभवमुपपादयति देवेत्यादिना, जगदनुभवमुपादयति तदुपकरणत्वेन इति। देवादि परामर्शार्थः तच्छब्दः तद्वशात् इति सत्त्वादिगुणवशात् इत्यर्थः।

तेषां सर्वं सामर्थ्यम् अहं पुनः कश्चिद् ब्राह्मण-कुमारः तेषां भक्तिं पूजानमस्कारादिना अनुष्ठाय श्रवणादि साधनं सम्पाद्य मोक्षं साधयिष्यामीति ईश्वरोऽपि सन् भ्रान्तो भवति जागरे।

पुनर्यथोक्तजागरप्रपञ्चमुपसंहृत्य स्वप्ने निद्रा-दोषसहकृतः तादृशमेव प्रपञ्चं परिकल्प्य तत्तद्देहेन्द्रियसाध्यभोगं भुक्त्वा वसिष्ठादयो मुक्ता अन्ये बद्धा अहमपि कश्चिद् बद्धः दुःखी संसारी मुक्तो भविष्यामि इति च कल्पयित्वा पुनस्तामवस्थामुपसंहृत्य जागरं सुषुप्तिं वा सर्व-भ्रमनिवृत्तिरूपां प्राप्नोतीति। एवं सति एक

सर्वमिति उत्पादकत्वं पालकत्वं संहर्तृत्वं च इत्यर्थः। अधिकारी अनुभवमुपपादयति अहं पुनः इति। ब्राह्मणस्य एव अत्र अधिकार इति द्योतयितुं ब्राह्मणग्रहणम्। क्रमसन्न्यासनियमाभावं द्योतयितुं कुमारग्रहणं श्रवणादिप्रवृत्तौ प्रतिबन्धाभावं द्योतयितुमाह तेषाम् इति। नमस्कारादिना इति इत्थम्भावे तृतीया पूजादिरूपाम् इत्यर्थः। पादसेवादिसंग्रहाय आदि-पदम्। स एव ईश्वरोऽपि सन् इति योजना।

आत्मनोऽज्ञानवशात् जीवत्वपरमेश्वरत्वजगद्रूपत्वावस्था-वत्त्वपरिकल्पने सिद्धमर्थमाह एवमिति। ब्रह्मैव स्वाज्ञान-वशात् संसरति इति जीवादिशब्दभाक् भवति इत्यर्थः।

एव आत्मा परिपूर्णः स्वयम्प्रकाशानन्दैकस्वभावः स्वाज्ञानवशात् जीवः संसारीत्यादिशब्दाभिधेयो भवति। न तदन्यः कश्चित् संसारी सम्भावयितुमपि शक्य इति स्थितम्। तस्य एव अनादिसंसारसञ्चितपुण्यनिचयक्षपितकल्मषस्य वैराग्यादिसम्पन्नस्य शास्त्राचार्य्यप्रसादासादितादरनैरन्तर्य्यदीर्घकालादिसेवितश्रवणादिसाधनपाटवस्य यदा तत्त्वमस्यादिवाक्योत्यात्मसाक्षात्कार उदयमासादयति तदाऽज्ञानं तत्कार्य्यं सर्वमुपसंहृत्य स्वानन्दतृप्तः स्वे महिम्नि स्थितो मुक्त इति व्यवहारभाग् भवति। तस्याम् अव-

कल्पित एव जीव इति कश्चित् तन्मतं प्रत्याचष्टे न तदन्य इति। मुक्तिसंसारयोर्वैयधिकरण्यापातात् इत्यर्थः। एवं ब्रह्मणः स्वाविद्यया संसारित्वं प्रतिपाद्य मुक्तत्वमपि तस्य एव इत्याह तस्य एव इति। व्यवहारभाक् भवति इत्यन्तो ग्रन्थः स्पष्टार्थः। अनेकदेहादिजगद्विभ्रमोपादानाविद्यायाः तत्त्वसाक्षात्कारात् निवृत्त्यवस्थायां न जीवान्तरविभ्रमो नापि जगद्विभ्रम इति फलितमाह तस्यामिति। अत्र सिद्धान्तसंग्रहश्लोकः।

ब्रह्माज्ञानादीशजीवादिभावात्
भ्रान्तं जाग्रत् स्वप्नसुप्तीर्बिभर्त्ति।
स्वात्मज्ञानादज्ञताया निवृत्तौ
नान्यो जीवो नास्ति चाज्ञातमन्यत्॥

स्यायां न तदन्यः कश्चित् संसारी तेन अननु-
भूयमानं द्वैतं वा किञ्चिदस्तीति रहस्यम्।
अज्ञातसत्त्वं नेष्टं चेद् व्यवहारः कथं भवेत्।
नह्यदर्शनमात्रेण विषस्रो नाशनिश्चयात्॥ १०॥

आत्मा अज्ञानं देवादिशरीराकारेण तदुपकरणजगदाकारेण च परिणमते तदेव अज्ञानं तत्तद्वृत्त्याकारेण च विषयाणां चैतन्य-सम्बन्धार्थं परिणमते सा च बोधेच्छा तदाकाराविद्यावृत्ति-र्ज्ञानाभास इति भ्रम इति च उच्यते विषयोऽपि तत एव स्फुरति ततो विषयस्य देवादिदेहस्य जगतश्च अविद्यावृत्तेश्च सर्वेषामविद्योपादानत्वादविद्यायाश्च अद्वैतसाक्षात्कारात् निवृत्तौ निवृत्तिः उचिता इति युज्यते।

विश्वमज्ञातं नास्ति इति पूर्वमुक्तं तदसहमानः शङ्कते अज्ञात-सत्त्वम् इति। अननुभूयमानं द्वैतं नास्ति इति वदन् वेदान्ती प्रष्टव्यः अनुभवशब्देन प्रमाणज्ञानम्? आहोस्वित् अविद्यावृत्तिः इति? नाद्यः, विषयस्य अज्ञातसत्त्वाभावेन प्रामाणिकत्वानङ्गी-कारात् द्वितीयश्चेत् तर्हि अपरोक्षात्माज्ञानविवर्त्तत्वात् प्रप-ञ्चस्य अविद्यावृत्तेश्च अपि अपरोक्षैकस्वरूपता प्राप्ता नहि अपरोक्षशुक्त्यज्ञानविवर्त्तरजतं तत् ज्ञानं वा अपरोक्षं दृश्यते ततश्च अपरोक्षाविद्यावृत्तिविषयत्वमज्ञातस्य द्वैतस्य सत्त्वं नेष्टं चेत्? इति सिद्धान्तिमतानुवादः। एवमनूद्य सिद्धान्तिमतं निराचष्टे व्यवहार इति। परोक्षपुत्रादिविषयोपादानवृत्ति-रूपो व्यवहारः परोक्षार्थाभावात् न स्यात् इत्यर्थः। इष्टा-पत्तिं प्रत्याह न हि इति। अदर्शनमात्रेण नाशनिश्चयाद्विषस्रो न हि इति योजना। ततश्च न अविद्योपानं जगदसत् इति

ननु कथमेव मुच्यते तेन अननुभूयमानं द्वैतं नास्तीति यावता अज्ञातस्यापि द्वैतस्य सत्त्वमभ्युपगच्छन्ति।

अतएव त्रिविधसत्त्वमङ्गीकुर्वन्ति वृद्धाः। न च तदज्ञातसत्त्वानभ्युपगमे उपपद्यते प्रातीतिकपारमार्थिकभेदेन द्वैविध्यस्य एव सम्भवात्। अन्यथा गृहान्निर्गतस्य पुत्रपश्वादिसकलसाधन-

भावः श्लोकं व्याचष्टे ननु इति। यावता अज्ञातस्यापि इत्यत्र अज्ञातस्य इति पदच्छेदः ज्ञातस्य सत्त्ववत् इति दृष्टान्तार्थोऽपिशब्दः। अभ्युपगच्छन्ति इति, अत्र नैयायिकादय इति शेषः।

अस्मदेकदेशिनो वा द्वैतस्य अज्ञातस्य सत्त्वे विवरणाचार्य्याणाम् अङ्गीकारं प्रमाणयति अतएव इति। परमार्थिकसत्त्वं तथा व्यावहारिकम् अज्ञानोपाधिकं सत्त्वम् इति त्रैविध्यम् इत्यर्थः। कथं सत्त्वत्रैविध्यमज्ञातस्य द्वैतस्य सत्त्वोपपादकं तत्राह न च तत् इति। तत् त्रिविधसत्त्वाङ्गीकरणम् इत्यर्थः। तत्र हेतुः प्रातीतिकेति। प्रातीतिकं सत्त्वम् उक्तयुक्त्या प्रपञ्चस्य पारमार्थिकं ब्रह्मणः सर्वथा बाधरहितत्वात् इति उभयविधसत्त्वस्वीकारेण दृग्दृश्यपदार्थस्वरूपनिरूपणोपपत्तौ सत्त्वत्रैविध्याङ्गीकरणं वृथा स्यात् इत्यर्थः। अविद्यकं हि रजतादि ज्ञातमेव सद्भवति प्रपञ्चस्य पुनः अविद्यानुपादानत्वात् अज्ञातस्य अपि सत्त्वमिति भावः। एवं त्रिविधसत्त्वाङ्गीकारानुपपत्तिमज्ञातद्वैतसत्त्वे प्रमाणयित्वा विपक्षे दण्डमाह अन्यथा इति। एवं प्रमाणयुक्तिभ्यां प्रपञ्चस्य

जातमपश्यतः तदभावनिश्चयेन शोकाग्निना दह्यमानस्य रुदतो मरणप्रसङ्गः।

ननु स्वप्नवत् जागरेऽपि प्रातीतिकसत्त्व-सम्पन्नेन एव द्वैतेन व्यवहारः किमिति नोपपद्यत इति चेत्? न, वैषम्यात् जागरबोधेन तस्य बाधात् इह तु साक्षात्कारात् पूर्वं तद-भावात् इति। अत्राहुः।

अज्ञातस्य अपि सत्त्वम् इति स्थापितम्। ननु साधनजात-दर्शनाभावो न तदभावनिश्चायकः सुषुप्तौ तद्दर्शनाभावेऽपि तदभावनिश्चयाभावात् निश्चये वा सुषुप्त्युच्छेदापत्तेः। न अपि सत्त्वत्रैविध्यमज्ञातसत्त्वोपपादकं प्रातीतिकसत्त्वे सति अवान्तर-भेदात् सत्त्वत्रैविध्योपपत्तेः।

न च ज्ञातसत्त्वस्य रजतादेर्व्यवहारानुपपादकत्ववत् द्वैत-प्रपञ्चस्य व्यवहारोपपादकत्वं न स्यात् इति वाच्यं? स्वप्नदृष्ट-गजतुरगादेर्ज्ञातसत्त्वस्य आरोहणादिव्यवहारोपपादकत्ववत् जाग्रत् प्रपञ्चोऽपि ज्ञातसत्त्व एव उपपादकः स्यात् इति दृष्टान्तेन सिद्धान्ती शङ्कते ननु इति। रजतादेः अपि प्रवृत्त्याद्युपपादकत्वमस्ति एव इति भावः। जागरावस्थद्वैतं ज्ञातमेव सद्भवितुमर्हति व्यवक्रियमाणत्वात् स्वप्नप्रपञ्चवत् इति विवक्षितमनुमानम् इत्यर्थः। तत् एतत् बाधितत्वोपाधिना दूष-यति न इति। उपाधिः साध्यव्यापकतामुपपादयन् वैषम्यं स्वप्न-प्रपञ्चस्य जागरादाह जागरेति। साधनाव्यापकतामाह इह तु इति। इह जागरे साक्षात्कारात् पूर्वमिति सिद्धान्त्यभि-

सत्त्वत्रयं वदन् वादी प्रष्टव्योऽत्राधुना मया।
सत्यं द्वैतमसत्यं वा नासत्ये त्रिविधं कुतः॥११॥

किं द्वैतं पारमार्थिकमाश्रित्य अज्ञातसत्त्वं साध्यते उत अनिर्वचनीयम्? नाद्यः, प्रत्यक्षादिप्रामाण्यनिरासेन निरस्तत्वात्। अन्त्ये अनिर्वचनीयं प्रथमतः क्वचित् सिद्धं न वा? न चेत्? तर्हि दृष्टान्ताभावात् कथमाकाशादेः अनिर्वचनीयत्वं साधनीयम्। सिद्धं रज्जुसर्पादिकम् इति चेत्? तर्हि तत्र यादृशं सत्त्वं

प्रायेण एकदेशिमताभिप्रायेण वा जाग्रत् द्वैतप्रपञ्चोऽबाधितत्वादज्ञातोऽपि सन्नित्युक्तं तत् दूषयति अत्राहुः इति।

एकदेशिमतनिरासेन एव नैयायिकादीनामपि मतं निराकृतं भविष्यति इत्यभिप्रायेण एकदेशिनो मतं निराकर्तुं पृच्छति सत्त्वत्रयम् इति। प्रष्टव्यमाह सत्यम् इति। प्रष्टव्यं द्वेधा विकल्प्य आद्यं दूषयति न इति। द्वितीयमिष्टासिद्ध्या दूषयति असत्य इति। श्लोकं व्याचष्टे किं द्वैतमिति। न इति संगृहीतमाद्यनिराकरणं स्पष्टयति नाद्य इति। हेतुमाह प्रत्यक्षादि इति। निरस्तत्वात् प्रत्यक्षादिप्रमाणानां प्रमात्वं परतो यदि इत्यत्र इत्यर्थः। असत्ये त्रिविधं कुत इति संगृहीतं व्याकरोति अन्त्ये इति। अनिर्वचनीयम् इति सत्त्वेन असत्त्वेन सदसद्भ्यां च यत् निर्वचनानर्हं तदनिर्वचनीयम् इत्यर्थः। क्वचित् शुक्तिरजतादौ अन्तिमपक्षम् अनूद्य निराचष्टे न चेत् इति। अयमर्थः, आकाशादिप्रपञ्चस्य अनिर्वचनीयतामङ्गीकृत्य अज्ञातस्य तस्य सत्त्वं साधयितुमिच्छसि

तादृशमेव आकाशादेः प्रपञ्चस्य इति स्थिते विवेचनीयं किमज्ञातसत्त्वं किं वा प्रातीतिकमेव। यदि अज्ञातमपि सत्त्वमाकाशादेः कल्प्येत

तत्र इदं विवेचनीयं, प्रपञ्चस्य अनिर्वचनीयत्वं किं प्रत्यक्षात् अनुमानाद्वा ? नाद्यः, स्पष्टप्रत्यक्षसिद्धत्वे वादिनां विवादाभावप्रसङ्गात् द्वितीयश्चेत् तत्राह तर्हि इति। अनिर्वचनीयत्वसाधनस्य प्रकृते उपयोगमाह प्रथमत इति। तदङ्गीकारेण अज्ञातसत्त्वस्य एकदेशिनासाधनात् इत्यर्थः। अनिर्वचनीयत्वं क्वचित् सिद्धमित्याद्यमवलम्बते सिद्धमिति अनिर्वचनीयम् इति शेषः। अयमत्रार्थः इदं रजतमिति रजतत्वे मिथ्याकारा पुरोवर्त्तिविषयिणी प्रतीतिः अस्ति न वा ? न अस्ति चेत् ? तर्हि रजतार्थिनः पुरोवर्त्तिनि प्रवृत्तिर्न स्यात् प्रवर्त्तकज्ञानाभावात् विवेकाग्रहात् प्रवृत्तिरिति चेत् ? तर्हि अविवेकाग्रहात् निवृत्तिरपि स्यात् विशिष्टज्ञानोच्छेदापत्तेश्च। अस्ति चेत् ? तर्हि सा प्रतीतिर्निर्विषयिणी सविषयिणी वा ? न, तावदाद्यः, निर्विषयज्ञानायोगात् साकारवादापत्तेश्च। सविषयिणी चेत् ? तर्हि तस्याः प्रतीतेर्विषयः सन् असन् वा ? न तावदसन् अपरोक्षत्वात् प्रतीतेः सन् चेत् ? स किं पुरोवर्त्तिनि सन् स्थलान्तरे वा ? पुरोवर्त्तिनि चेत् ? तर्हि भ्रान्तिबाधौ न स्यातां द्वितीये इदमालोचनीयं, तत् स्थलान्तरं किं बुद्धिः ? उत कान्ताकरादि ? न तावदाद्यः प्रमाणाभावात्, न हि रजतमिदमिति प्रत्ययो वा ? न इदं रजतमिति बाधप्रत्ययो वा ? रजतस्य धीरूपतामावेदयति इदङ्कारास्पदरजतावेदकत्वादाद्यस्य बाधकप्रत्ययस्यापि इदमिति पुरोवर्त्तिनो रजताद्विवेचकत्वात् नित्यत्वकार्य्यत्वाभ्यां धीरूपरजतानिरूपणाच्च कान्ताकरादावेव

तदा कथमयं दृष्टान्तो दार्ष्टान्तिके सामञ्जस्येन उपसंह्रियेत विरोधात् ।

न च गृहात् विनिर्गतस्य असत्त्वनिश्चयेन रोदनादिप्रसङ्गो दोषः बाधकप्रमाणस्य अप्रवृत्तत्वेन अभावनिश्चयानङ्गीकारात् स्वप्नवत् सर्वव्यवहारस्य उपपादितत्वाच्च । न च तत्र बाधोऽस्तीति वैषम्यं भ्रमावस्थायां कुत्रापि बाधस्य

रजतं सदिति चेत् ? न, तस्य अत्र ग्रहणानुपपत्तेः व्यवहितत्वात् न चक्षुस्तत् गृह्णाति दोषात् तद्ग्रह इति चेत् ? किं दोषमात्रात् ? उत दोषसहकृतचक्षुषः ? न तावत् आद्यः, अन्धस्यापि तत्प्रतीतिप्रसङ्गात् । न द्वितीयः, अन्तरालवर्त्तिनां पदार्थानामपि चक्षुषा ग्रहणप्रसङ्गात् ततो रजतं पुरोवर्त्तिनि न सत् न अपि असत् विरोधादुभयात्मकमपि न, ततोऽनिर्वचनीयमेव तदिति सिद्धं भ्रमविषयो निर्वचनीय इति एवं तत् दृष्टान्तावष्टम्भेन आकाशादिप्रपञ्चस्य अनिर्वचनीयत्वमङ्गीकृत्य अज्ञातसत्त्वसाधनीयमिति स्थितं तदेतत् दूषयति तर्हि इति । दृष्टान्तदार्ष्टान्तिकयोर्वैषम्यपरिहाराय इति शेषः । दृष्टान्ते च ज्ञातसत्त्वस्य अनिर्वचनीयत्वेन उपपादितत्वादाकाशादेरपि तथा एव स्वीकर्त्तव्यम् इत्याह यदि अज्ञातमपि इति ।

अज्ञातसत्त्वसाधकं तर्कमनूद्य दूषयति न च इति । असत्त्वनिश्चयलक्षणहेत्वसिद्धौ हेतुमाह बाधकेति । जागरावस्थं द्वैतं ज्ञातमेव सत् व्यवह्रियमाणत्वात् स्वप्नप्रपञ्चवदित्यनुमानादपि प्रपञ्चस्य ज्ञातस्य सत्त्वमिति हेत्वन्तरमाह स्वप्नेति । न च बाधितत्वोपाधिना उपहतिः इत्याह न च इति । भ्रम-

अनङ्गीकारात्। प्रमाणप्रवृत्तौ बाधेऽपि न कश्चित् दोषः तदानीं भ्रमसिद्धेन व्यवहारानभ्युपगमात्। न च त्रिविधसत्त्वाभ्युपगमविरोधः सर्वस्य द्वैतस्य प्रातीतिकसत्त्वमपरित्यज्य तैर्भ्रान्तसन्तोषमात्रस्य कृतत्वात् प्रातीतिकत्वेऽपि

काले स्वप्नावस्थायां वा, जाग्रदवस्थायामिव बाधाभावादुपाधिः स्वप्नदृष्टान्ते साध्याव्यापक इत्यर्थः। बाधदशायान्तु स्वप्नलक्षणधर्मिण एव अभावात् उपाधिसाध्ययोर्व्याप्तिग्रहणलक्षणादिव्यवहाराभावादुपाधेः साध्यव्यापकत्वस्य प्रमाणाभावादित्याह प्रमाणप्रवृत्ताविति। तदानीमिति बाधकाले इत्यर्थः। भ्रमाभावेन भ्रमसिद्धस्य अभावादित्यर्थः। त्रिविधसत्त्वाङ्गीकरणानुपपत्तिः अज्ञातसत्त्वकल्पिकेति यदुक्तं तदनूद्य अन्यथोपपत्त्या दूषयति न च इति। व्याख्यातार्थः पूर्वमेव ग्रन्थः।

स्वप्नवद्दृष्टिसृष्टः सन् सर्वव्यवहृतिक्षमः।
प्रपञ्चो नात्र दोषोऽस्ति तस्य परिहृतत्वतः॥

आत्मा ज्ञानं देवादिदेहाकारेण तदुपकरणब्रह्माण्डाकारेण तत्तद्वृत्त्याकारेण च परिणमते तत्र वृत्तिकालीना एव तत्तत्पदार्था न वृत्तेः पूर्वं नापि उत्तरमनुवर्त्तन्ते वृत्तिसमकालीना ज्ञाता एव पदार्थाः सन्ति घटादय इत्युक्तं तत्र इदं विचार्य्यते वृत्तिः किमाबाधमनुवर्त्तते उत आशुतरविनाशिनी? नाद्या, सुषुप्त्याद्यभावप्रसङ्गात् वृत्त्यन्तराभावप्रसङ्गाच्च ज्ञानानामयौगपद्योपगमात्। न द्वितीयः, वृत्तिसमानयोगक्षेमस्य द्वैतप्रपञ्चस्यापि आशुतरविनाशित्वप्रसङ्गात् ज्ञानोत्पत्तौ उत्पत्तिप्रसङ्गात् ज्ञान-

प्रपञ्चस्य भ्रान्तबुद्धिसिद्धौ आन्तरवैषम्यमाश्रित्य व्यावहारिकसत्त्वाभिधानाविरोधात् ।

द्वैतभेदे प्रतिज्ञानं प्रत्यभिज्ञा कथं वद ।
दृशानां युगपत् सर्पभ्रमे तद्वत्तथैव सा ॥ १२ ॥

तथापि अज्ञातसत्त्वानभ्युपगमे स्वप्नप्रबुद्धस्य स एवायं प्रपञ्च इति प्रत्यभिज्ञाने का गतिरिति चेत्? एकस्यामेव रज्ज्वां मन्दान्धकारवर्त्तिन्यां दृशानां युगपत् सर्पभ्रमेण पलाय-

भेदे प्रपञ्चभेदप्रसङ्गाच्च नैष दोष इति चेत्? तत्राह द्वैतभेद इति। प्रतिज्ञानं द्वैतभेद इत्यन्वयः। स एवायं घट इति तदेव इदं गृहमित्यादि प्रत्यभिज्ञा प्रतिज्ञानं घटादिभेदेन स्यात् प्रत्यभिज्ञाविषयघटाद्यभेदस्य अभावादित्यर्थः। विषयाभावे किं प्रत्यभिज्ञा स्वरूपमेव न सिध्यतीत्युच्यते तत्प्रामाण्यं वा? नाद्य इत्याह दृशानामिति। कालान्तरीयपृथक्सर्पभ्रमे प्रत्यभिज्ञैव नास्ति इति तदर्थं युगपदित्युक्तं प्रमास्थले विषयभेदे विप्रतिपत्तेर्भ्रम इत्युक्तं भवति।

देवदत्तचक्षुषो रज्जुलक्षणाधिष्ठानसंयोगे सति दोषवशाद्रज्जुत्वानाकारेदमाकारान्तःकरणवृत्तिर्जायते तत्र प्राक्संस्कारवशाद्रज्ज्ववच्छिन्नेदमाकारदेवदत्तान्तःकरणवृत्ति प्रतिविम्बिचैतन्यनिष्ठाविद्याक्षुब्धा सती सर्पतद्बुद्ध्याकारेण विवर्त्तते स च जायमानः सर्पो यदन्तःकरणवृत्तिप्रतिविम्बितचैतन्यनिष्ठाविद्याविवर्त्तस्तं प्रत्येव जायते तेन एव च ज्ञायते वृत्तेः अपि तदविद्याविवर्त्तत्वात् एतेन मैत्रादिसर्पभ्रमो व्याख्यातः

मानानां परस्परं संवादेन एक एव सर्पः सर्वैः अनुभूत इति प्रत्यभिज्ञायां या सैवेति सन्तोष्टव्यम्। तत्र हि स्वस्वभ्रमसिद्धः सर्वैः पृथक् पृथक् एव अनुभूयते विषयः अन्यभ्रमसिद्धस्य अन्येन ज्ञातुम् अशक्यत्वात् अन्यभ्रमस्य अज्ञा-

ततश्च दशानां रज्ज्वधिष्ठानसर्पभ्रमैर्युगपत् जाते दश सर्पाः तत् ज्ञानानि च दशैव जायन्ते तथा च सर्पैक्याभावेऽपि यथा तेषामेक एव सर्पः सर्वैः अनुभूयते इति प्रत्यभिज्ञानं स्वरूपेण जायते तथा इह अपि विनैव विषयैक्यं प्रत्यभिज्ञास्वरूपमुपपद्यते अथ विषयाभावे प्रामाण्यं न स्यात् इत्युच्यते तत्राह एवेति तथैव सा सा प्रत्यभिज्ञा विषयाभावेऽपि स्यात् एव प्रमा च तद्देव इत्यर्थः। श्लोकपूर्वार्द्धं व्याचष्टे तथापि इति। उत्तरार्द्धं सिद्धान्तत्वेन व्याचष्टे एकस्यामिवेति। सर्वेषां विशेषदर्शनाभावे हेतुमाह मन्दान्धकारेति। दशानामपि प्रत्यभिज्ञा सर्पैकविषया किं न स्यात् इति तत्राह तत्रेति। पृथगेव सर्पोऽनुभूयते इत्यत्र हेतुमाह स्वस्वभ्रमसिद्ध इति। देवदत्तस्य रज्जुविषयेदमाकारान्तःकरणवृत्तिप्रतिविम्बितचैतन्यनिष्ठा अविद्यात्मकभ्रमसिद्धः पृथगेव सर्पो देवदत्तेन अनुभूयते नैकः सर्वेण इत्यर्थः। ननु यथा एको घटः सर्वैः अनुभूयते एवं भ्रमसिद्धो विषय एक एव सर्वैः अनुभूयताम् इत्याशङ्क्य स्वस्वेति विशेषणसूचितं हेतुमाह अन्यभ्रमेति। अशक्यत्वे हेतुमाह अन्यभ्रमस्य इति। देवदत्तान्तःकरणप्रतिविम्बितचैतन्यनिष्ठाविद्यात्मको भ्रमो देवदत्तान्तःकरणवृत्तेर्दुर्ज्ञेयत्वात् देवदत्तान्येन ज्ञातुमशक्य इत्यर्थः। ननु एवं युक्त्या सर्पादिभ्रमविषय-

नात्। अविवेकादेव तु तत्र प्रत्यभिज्ञानम् एक एव सर्पः सर्वैः अनुभूयत इति। एवं जाग्रदवस्थायां प्रपञ्चम् अनुभूय सुषुप्तिं गत्वा पुनरुत्थाय योऽयं प्रपञ्चानुभवः स प्रपञ्चान्तरमेव विषयीकरोति प्रत्यभिज्ञानं तु अविवेकादेव। न च सुषुप्तौ प्रपञ्चविलये प्रमाणाभावः न हि द्रष्टुर्दृष्टेः विपरिलोपो विद्यते अविनाशित्वात् न तु

भेदश्चेत् तर्हि कथं सर्पाद्यैक्यानुभवः तत्राह अविवेकादिति। अतिसादृश्यात् सर्पादीनां भ्रमसिद्धानां परस्परभेदाग्रहात् ऐक्यानुभव इत्यर्थः। एवं दशानां युगपत् सर्पभ्रमे यद्वदित्यन्तं व्याख्यातं तथैव सेत्येतद्व्याख्यातुम् उपक्रमते एवमिति। स्पष्टार्थो ग्रन्थः। यद्यपि जाग्रदवस्थायामेव वृत्तेः आशुतरविनाशित्वात् तत्समानयोगक्षेमप्रपञ्चस्यापि नाशः साधयितुमुचितः तथापि भिक्षुपादप्रसारणन्यायमाश्रित्य अवस्थासु प्रपञ्चभेदमुक्तवान् इति अदोषः। ननु प्रत्यभिज्ञानमुभयवादिसिद्धं न च तस्य भ्रमत्वं बाधकाभात्। न च उक्तयुक्तिर्बाधिका मूलप्रमाणाभावेन तस्या आभासत्वात् ततो न अवस्थास्वपि प्रपञ्चभेदः तत्र अपि ऐक्यानुभवादेव प्रपञ्चैक्यसिद्धेः इत्यभिप्रायेण सुषुप्तौ प्रमाणाभावात् न प्रपञ्चप्रविलय इति चोदयित्वा परिहरति न च इति। प्रपञ्चविलये प्रमाणं दर्शयन् न चेति प्रतिज्ञायां हेतुमाह न हि द्रष्टुरिति। पश्यन् वा एतदिति वाक्ये तत्र सुषुप्त्यवस्थायां पश्यन् एव भवति इत्युक्तेः। ननु व्यापृतस्य चक्षुरादेः करणस्य अभावात् जानीमो यत् सुषुप्ते न पश्यति इति

तद्द्वितीयमस्ति ततोऽन्यद्विभक्तं यत् पश्येदिति श्रुत्या सुषुप्तौ द्वितीयाभावं वदन्त्या तत्र सर्व-प्रपञ्चाभावस्य दर्शितत्वात् ।

शङ्कायां श्रुतिः उत्तरमाह न हि इति द्रष्टुः आत्मनोऽविनाशित्वात् तत्स्वरूपभूताद्दृष्टिरपि अविनाशिनीति सुषुप्तेऽपि आत्मा पश्यत्येव इत्यर्थः । कथं तर्हि न पश्यति आत्मा सुषुप्त इति तत्राह न तु इत्यादिना सुषुप्त्यन्यावस्थायामात्मनो विशेष-दर्शने कारणं साभासमन्तःकरणं प्रमातृ तदत्र नास्ति इत्याह न तु तत् द्वितीयमिति । यत् द्वितीयमन्तःकरणं प्रमातृ जाग्रदादौ पश्येत् तदत्र नास्ति ततोऽन्तःकरणादपि अन्य-च्चक्षुरादिकरणं तदपि अत्र नास्ति तथा यच्च विभक्तं रूपादि-विषयजातं तदपि अत्र सुषुप्तौ नास्ति इति आत्मनो विशेष-दर्शनाभावो युक्तः विशेषदर्शनकारणभूतानां प्रमातृकरण-विषयाणामभावादिति द्वितीयस्य आत्मभिन्नस्य प्रमात्रादे-रभावं विशेषदर्शनाभावे हेतुत्वेन अनुवदन्ती देवताधिकरण-न्यायेन प्रपञ्चभावं सुषुप्तौ प्रमापयति इत्यर्थः ।

अवस्थासु प्रपञ्चैक्यविषयानुभवो भ्रमः ।
न हीत्यादिश्रुतिः सुप्तौ प्रपञ्चाभावबोधनात् ॥
उत्थितस्य पुनः सृष्टिं प्राणादेः श्रुतिरब्रवीत् ।
स यदा प्रतिबुध्याद्या प्रपञ्चैक्यं ततः कुतः ॥

भ्रममात्रशरीरस्य प्रपञ्चस्य भ्रमनिवृत्तेः । निवृत्तावज्ञात-सत्त्वं नास्ति स्वस्वभ्रमसिद्धभिन्नसर्पेऽपि दशानाम् अवि-वेकात् सर्पैक्यानुभववत् प्रपञ्चैक्यानुभवो भ्रम इत्युक्तं

सर्पभ्रमाद्विशेषोऽस्ति जाग्रद्बोधेऽन्यथा कथम्।
इन्द्रियादेरुपादानं तदभावे यतो न धीः ॥ १३॥

तथापि रज्जुसर्पादिज्ञानात् आकाशादिप्रपञ्च-ज्ञानेऽस्ति कश्चिद्विशेषः प्रत्यक्षादिप्रमाणाविद्या-कारणकत्वभावाभावाभ्याम्। न हि यादृशमर्थ-मिन्द्रियादिजन्यं ज्ञानं विषयीकरोति तादृशमेव अविद्याजन्यभ्रमोऽपि इति सम्भवति भ्रमात्

तत्र दृष्टान्तदार्ष्टान्तिकवैषम्येण शङ्कते सर्पभ्रमात् इति। सर्पादेः स्वस्वभ्रमसिद्धत्वात् अस्तु प्रातीतिकत्वं प्रपञ्चस्य पुनर्न भ्रमसिद्धत्वं ऐन्द्रियकादिप्रमाविषयत्वात् इममेवार्थं विपक्षबाधकोक्त्या आह अन्यथा कथमिति भ्रमसिद्धप्रपञ्चवादिनं प्रति इन्द्रियादेः प्रपञ्चधियं प्रति कारणत्वमसिद्धम् इत्याशङ्क्य व्यतिरेकं तत्र प्रमाणयति तदभावे इति।

तथापि इति उक्तयुक्त्या प्रपञ्चस्य भ्रममात्रशरीरत्वेन प्रातीतिकसत्त्वे साधितेऽपि इत्यर्थः। ननु प्रपञ्चज्ञानस्य अविद्याजन्यत्वमर्थविषयत्वञ्च रज्जुसर्पज्ञानतुल्यं ततः कथं तस्मिन् रज्जुसर्पज्ञानाद्विशेष इति तत्राह प्रत्यक्षादि इति। कारणकृतो विषयकृतश्च प्रपञ्चज्ञाने सर्पज्ञानाद्विशेषोऽस्ति तथाहि प्रपञ्चज्ञानस्य प्रत्यक्षादिप्रमाणकारणकत्वाभावोऽविद्याकारणकत्वाभावश्च सर्पज्ञानाद्विशेषः सर्पज्ञानेऽविद्याकारणकत्वभावः प्रत्यक्षादिप्रमाणाजन्यत्वञ्च विशेष इति तयोर्ज्ञानयोः कारणकृतो विशेष इत्यर्थः। प्रपञ्चसर्पज्ञानयोर्विषयकृतं विशेषमाह न हि इति। यादृशमज्ञातसत्त्वम् इत्यर्थः। कुतः सम्भवनेति अत्र हेतुमाह

पूर्वं विषयस्य असत्त्वात् इन्द्रियादिजन्यज्ञानस्य च सन्निकर्षादिजन्यत्वेन ज्ञानात् पूर्वं विषयसत्त्वस्य अवश्यम्भावात् अन्वयव्यतिरेकाभ्यां च इन्द्रियादेः कारणत्वस्य सिद्धत्वात्।

तस्मात् प्रपञ्चस्य अज्ञातसत्त्वाभ्युपगमोऽवश्यम्भावी। अन्यथा वैलक्षण्यानुपपत्तेः।

मैवम्।

भ्रमादिति। ज्ञानमात्रशरीरत्वात् इत्यर्थः। भ्रमविषयात् इन्द्रियजन्यज्ञानविषयस्य विशेषमाह इन्द्रियादीति। इन्द्रियादिभ्यो जातस्य इत्यर्थः। सन्निकर्षेति इन्द्रियार्थसन्निकर्षजन्यत्वात् प्रत्यक्षज्ञानस्य तत्कारणत्वेन सन्निकर्षस्य ज्ञानात् पूर्वं वक्तव्यत्वात् तदाधारत्वेन ज्ञानात् पूर्वं चक्षुर्वदर्थोऽपि वक्तव्य एव इत्यर्थः। सन्निकर्षात् इत्यादिपदेन लिङ्गादिसंग्रहः। अनुमितिरूपज्ञानस्य लिङ्गज्ञानजन्यत्वात् लिङ्गस्य च पक्षव्याप्तिघटितत्वात् पक्षव्याप्त्योश्च साध्यघटितत्वात् ततोऽनुमित्युत्पत्तेः प्राक्साध्यसत्त्वं मृग्यमित्यर्थः। न च भविष्यदर्थकानुमितौ व्यभिचारः तत्रापि भविष्यदर्थस्यानुमितेः पूर्वं विद्यमानत्वात् न हि अनुमितिप्राक्काले भविष्यन्नर्थो नास्ति तथा सति वर्त्तमानार्थकानुमित्यापत्त्या भविष्यदर्थकानुमितित्वासिद्धेः ततः कथं तत्रापि व्यभिचार इति शब्दार्थसम्बन्धज्ञानजन्यत्वात् शब्दज्ञानस्य शाब्दकरणकज्ञानात् पूर्वमेवार्थसत्ताप्यूह्येति प्रपञ्चमिथ्यात्ववादिनं प्रति इन्द्रियादेः प्रपञ्चज्ञानं प्रति कारणत्वे प्रमाणमाह अन्वयेति।

अस्तु प्रपञ्चज्ञाने भ्रमज्ञानाद्विशेषः तथापि किमिष्ट

इन्द्रियाणां कारणत्वे भवेच्चोद्यं तदा तव ।
स्वप्नभ्रमे यथा तेषामन्वयव्यतिरेकधीः ॥ १४ ॥

इन्द्रियादेर्वस्तुतः प्रपञ्चज्ञानं प्रति अकारणत्वात् । कुत इति चेत् ? तत्र वक्तव्यं किमिन्द्रियादेः प्रमितिमात्रे कारणता किं वा भ्रमप्रमासाधारणज्ञानमात्रे भ्रममात्रे वा ? ।

सिध्यति इत्याशङ्क्याह तस्मात् इति । तस्मात् ज्ञानात् प्राग्यथोक्तन्यायेन अर्थसत्त्वस्य अवश्यं स्वीकर्त्तव्यत्वात् इत्यर्थः । अवश्यम्भावे हेतुमाह अन्यथेति । प्रपञ्चज्ञानोत्पत्तेः प्राक् प्रपञ्चसत्त्वानभ्युपगमे प्रपञ्चज्ञानस्य प्रपञ्चलक्षणार्थेन्द्रियसन्निकर्षाकारणत्वेन अविद्यायोनिमात्रत्वापत्तेर्भ्रमरूपतैव स्यात् न भ्रमवैलक्षण्यम् इत्यर्थः । आकाशादिप्रपञ्चज्ञानस्य इन्द्रियादिकारणकत्वेन भ्रमाद्वैलक्षण्यात् तदुपपादनाय अर्थस्य अज्ञातस्य सत्त्वमङ्गीकर्त्तव्यमिति उक्तं तत् दूषयितुम् उपक्रमते मैवमिति ।

कारणत्वे इति प्रपञ्चज्ञानं प्रतीति शेषः । प्रपञ्चज्ञानं प्रति इन्द्रियकारणत्वग्राहकान्वयव्यतिरेकावित्युक्तं निरस्यति स्वप्नभ्रमे इति । मैवमिति प्रतिज्ञायां हेतुं वदन् श्लोकं व्याचष्टे इन्द्रियादेरिति । अकारणत्वादिति हेतुम् उपपादयितुं जिज्ञासामाह कुत इति चेत् इति । अकारणत्वम् उपपादयति तत्रेति । इन्द्रियादेः कारणत्वे विना कार्य्यं न कारणमिति न्यायात् इन्द्रियकारणत्वं कार्य्यनिरूप्यं वक्तव्यं कार्य्यस्य च दुर्निरूपत्वात् तन्निरूप्यमिन्द्रियकारणत्वमसत् इत्यर्थः । तदर्थं कार्य्यस्य दुर्निरूपत्वम् उपपादयितुं विक-

नाद्यः, इन्द्रियादिजन्यज्ञानप्रामाण्यं भ्रमविषयव्यावृत्तार्थविषयत्वेन साधनीयं भ्रमविषयव्यावृत्तार्थत्वं च प्रमितिविषयत्वेन इति अन्योऽन्याश्रयात्। न च प्रमितिविषयत्वमर्थसत्यत्वे हेतुरपि मिथ्येदं रजतमिति प्रमित्या असत्यस्य अपि विषयीकरणात् अबाधितत्वस्य च असिद्धेः।

ष्यति किमित्यादिना प्रमाकार्य्यतानिरूपितकारणम् इन्द्रियादेः इति आद्यविकल्पार्थः। न च प्रमामात्रे न इन्द्रियादेः कारणत्वम् ईश्वरप्रमायां व्यभिचारादिति वाच्यं ? मात्रचोऽवधारणार्थत्वेन कार्त्स्न्यार्थत्वाभावात् अतएव द्वितीयं विकल्पमाह किं वेति। अत्र विकल्पे कारणत्वविवक्षायां मात्रचोऽवधारणार्थत्वम्।

प्रमामात्रे इन्द्रियादीनां कारणता इति पक्षं दूषयति नाद्य इति। प्रमात्वस्य अन्योऽन्याश्रयत्वेन दुर्ग्रहत्वात् इति हेतुमाह इन्द्रियेति। भ्रमव्यावृत्तार्थत्वं प्रमाज्ञानाधीनज्ञानं प्रमाज्ञानञ्च तादृगर्थज्ञानाधीनम् इति अन्योऽन्याश्रय इत्यर्थः। ततश्च प्रमाया दुर्ज्ञानत्वात् तां प्रति इन्द्रियादेः कारणत्वं दुर्ग्रहमिति भावः। अर्थस्य भ्रमव्यावृत्तत्वे प्रमाविषयत्वं न प्रयोजकं मिथ्येदं रजतमभावादिति प्रमाविषयरजतस्य भ्रमासम्बन्धित्वादर्शनात् इति दूषणान्तरमाह न च इति। सत्यत्वं भ्रमव्यावृत्तत्वं भ्रमाविषयत्वमिति यावत्। ननु नार्थस्य भ्रमव्यावृत्तत्वप्रमाविषयत्वेन साध्यते येन अन्योऽन्याश्रयव्यभिचारौ स्यातां किन्त्वबाधितत्वेन इति न इत्याह अबाधितत्वस्य

किञ्च इन्द्रियाणां प्रमाणत्वेन अज्ञातार्थविषयत्वे वक्तव्येऽधिष्ठानमात्रविषयत्वं प्राप्तं प्रपञ्चस्य सर्वस्य जड़त्वेन अज्ञातत्वाभात्।

तथा च अधिष्ठानत्वस्य आत्मनि एव विश्रान्तत्वेन प्रत्यगात्मविषयाणि इन्द्रियाणि प्रमाणानि

इति। अतोऽन्यदार्त्तं नेह नानास्ति किञ्चन इत्यादिश्रुत्या अद्वैतमिथ्यात्वबोधनादसिद्धेः इत्यर्थः। चक्षुरादीनां प्रमाकरणत्वलक्षणं प्रामाण्यं स्वीकृत्य प्रमाया दुर्ग्रहात् तन्निरूपितं कारणत्वं दुर्ग्रहम् इत्युक्तं इदानीं चक्षुरादेः प्रामाण्यमेव नास्तीति वक्तुम् उपक्रमते किञ्चेति। अनधिगतार्थगन्तृ प्रमाणमिति प्रमाणविदां स्थितेः अज्ञातार्थविषयानुभवजननद्वाराम् इन्द्रियाणामज्ञातार्थविषयता वाच्या अस्तु को दोष इति शेषः। अधिष्ठानेति तस्य एव अज्ञातत्वादिति शेषः। अधिष्ठानस्य एव विषयत्वं कुतः तत्राह प्रपञ्चस्य इति। अज्ञातं हि विषयः प्रमाणानाम् अज्ञातत्वञ्च अधिष्ठानस्य एव न प्रपञ्चस्य जड़त्वेन आवृत्तैकरूपस्य पुनः अज्ञानविषयत्वलक्षणाज्ञातत्वकल्पने प्रयोजनाभावात् विमतः प्रपञ्चो नाज्ञातः जड़त्वात् व्यतिरेकेण आत्मवत् इत्यर्थः। न च अज्ञातो घट इति प्रत्यक्षविरोधः अज्ञानेन सह साक्षिचैतन्ये घटादेः अध्यासात् तथा प्रतीत्युपपत्तेः प्रत्यक्षस्य आभासत्वादिति अस्तु अधिष्ठानमज्ञानविषयः तद्विषयत्वञ्च प्रमाणानामपि अस्तु तथापि प्रपञ्चैकदेशस्य शुक्तिरज्जुमरुभूम्यादेः अधिष्ठानत्वेन अज्ञातत्वात् तद्विषयत्वम् इन्द्रियाणां प्राप्तमिति नेत्याह।

तथा च इति। शुक्त्याद्यवच्छिन्नचैतन्यनिष्ठाविद्याविवर्त्तत्वात्

इति वक्तव्यं तच्च न उपपद्यते प्रत्यगात्मन इन्द्रियाविषयत्वात् तस्य निर्धर्मकत्वात्। तथा च श्रुतिः।

न सन्दृशे तिष्ठति रूपमस्य
न चक्षुषा पश्यति कश्चिदेनम्।
पराञ्चि खानि व्यतृणत् स्वयम्भूः
तस्मात् पराङ् पश्यति नान्तरात्मन्॥ इति॥

रजतादेश्चैतन्यमेव सर्वत्र भ्रमाधिष्ठानमिति तद्विषयत्वेन एव इन्द्रियाणां प्रामाण्यं वक्तव्यम् इत्यर्थः। इष्टापत्तिं परिहरति तच्च इति। आत्मविषयत्वेन प्रामाण्यम् इत्यर्थः। आत्मन इन्द्रियविषयत्वायोग्यत्वेन इन्द्रियाणि आत्मविषयाणि न भवन्तीति हेतुमाह प्रत्यगात्मन इति। विषयेभ्यः प्रकाश्येभ्योऽनिर्वचनीयेभ्यः प्रत्यग्वैपरीत्येन प्रतिकूलतया च अतीव उपलक्षत इति प्रत्यक् स च असावात्मा च तथा च स्वभानार्थम् इन्द्रियाणि न आत्मा अपेक्षते इत्यर्थः। स्वाज्ञाननिवर्त्तकस्वाकारवृत्त्युत्पत्त्यर्थम् इन्द्रियाणि अपेक्षिष्यत इति नेत्याह तस्य इति। सत्यमपेक्षतेऽज्ञाननिवृत्तये इन्द्रियाणि आत्मा तथापि इन्द्रियाणि आत्मनि न प्रवर्त्तन्ते रूपादिपुरस्कारेण इन्द्रियाणां खलु प्रवृत्तिः न च आत्मा रूपादिमान् निर्गुणश्रुतेः ततो न इन्द्रियविषयत्वमात्मनो युक्तमिति हेत्वर्थः निर्धर्मक आत्मनि इन्द्रियाणि न प्रवर्त्तन्त इत्यत्र श्रुतिं प्रमाणयति तथा च इति।

स्वयम्भूरीश्वरः खानि इन्द्रियाणि पराञ्चि पराग्विषयाणि इति गर्भविशेषणं तेषां हिंसने पराग्विषयत्वं हेतुः

न च अनयैव श्रुत्या इन्द्रियाणां प्रपञ्चविषयत्वं दर्शितमिति वाच्यं ? स्वप्नेन्द्रियवदन्वयव्यतिरेकभ्रमसिद्धप्रपञ्चज्ञानकारणत्वानुवादेन आत्मन इन्द्रियाविषयत्वप्रदर्शने तात्पर्य्यात्। एतेन भ्रमप्रमासाधारणज्ञानकारणत्वमपि अपास्तं प्रमाकरणत्वस्य निरूपयितुमशक्यत्वात्।

इत्यर्थः। व्यतृणद्धिंसितवान् अनात्मदर्शनसाधनत्वमेव तेषां हिंसेत्याह तस्मादिति। पराङ् पराञ्चमित्यर्थः। विभक्तिव्यत्ययः छान्दसः यस्मात् पराग्विषयत्वमेव इन्द्रियाणां तस्मात् इन्द्रियेभ्यः पुरुषः पराञ्चमनात्मानमेव पश्यति नान्तरात्मानं निर्धर्मकत्वात् इत्यर्थः। तत उक्तयुक्त्या प्रपञ्चज्ञाने साधनत्वाभाववदात्मज्ञानेऽपि साधनत्वाभावात् न इन्द्रियाणां क्वापि प्रामाण्यमिति भावः।

ननु तस्मात् पराङ् पश्यतीति श्रुतिः इन्द्रियाणां प्रपञ्चप्रमां प्रति साधनत्वं प्रतिपादयन्ती तेषां प्रपञ्चविषयत्वं दर्शयतीति कथं न तेषां प्रामाण्यमिति नेत्याह न च इति।

तत्र हेतुः स्वप्नेति पराङ् पश्यतीति श्रुतिः इन्द्रियाणां प्रपञ्चविषयत्वप्रदर्शने तात्पर्य्यवती उत तदनुवादेन आत्मन इन्द्रियाविषयत्वप्रदर्शनपरा ? नाद्यः निष्प्रयोजने श्रुतेः तात्पर्य्यायोगात् द्वितीयेऽपि इदं चिन्त्यम् अनुवादः किं प्रमाणसिद्धस्य भ्रमसिद्धस्य वा ? नाद्यः प्रपञ्चप्रमां प्रति इन्द्रियाणां कारणत्वग्राहकप्रमाणत्वाभिमतान्वयव्यतिरेकादेः अन्य-

**अस्तु तर्हि भ्रममात्रे कारणता इन्द्रियाणाम्। न भ्रमज्ञानस्य अविद्यामात्रयोनित्वस्य त्वयैव उक्तत्वात् ज्ञानं प्रति इन्द्रियान्वयव्यतिरेकयोश्च**

श्चोपपत्तेर्वक्ष्यमाणत्वात् भ्रमसिद्धानुवादपक्षे न इन्द्रियाणां प्रपञ्चविषयप्रमाकारणत्वेन प्रामाण्यमित्यर्थः। प्रमामात्रे इन्द्रियाणां कारणत्वमिति आद्यः पक्षः प्रमाकरणत्वस्य दुर्ग्रहत्वात् प्रमाकरणत्वाभावाच्च न सम्भवति इत्युक्तं तत एव प्रमाकारणत्वाभावादेव ज्ञानमात्रे इन्द्रियाणां कारणतेति द्वितीयः पक्षोऽपि निरस्त इति अतिदिशति एतेन इति।

भ्रममात्रे इन्द्रियादीनां कारणतेति तृतीयं पक्षम् उपपादयति अस्तु तर्हि इति। किमेतत् एकदेशिनां चोद्यम् उत नैयायिकादीनां? नोभयथापि इति प्रतिजानीते न इति। एकदेशिनिरासाय हेतुमाह भ्रमज्ञानस्य इति। उक्तत्वात् प्रत्यक्षादिप्रमाणाविद्याकारणत्वाभावाभावाभ्यामित्यत्र इत्यर्थः। द्वितीयनिराकरणे हेतुमाह ज्ञानं प्रतीति। इन्द्रियाणां भ्रमं प्रति कारणत्वग्राहकं प्रमाणमन्वयव्यतिरेकौ वा अन्यद्वा नान्वयव्यतिरेकौ स्वप्ने इन्द्रियप्रवृत्तेः अभावेऽपि इन्द्रियान्वयव्यतिरेकदर्शनेन तयोः अप्रमाणत्वेन कारणत्वाग्राहकत्वात् नेतरः तस्य अनुपलब्धेः इति। ननु रूपोपलब्धिः करणसाध्या क्रियात्वात् छिदिक्रियावदित्याद्यनुमानानि चक्षुरादीनां प्रपञ्चात्मकरूपाद्युपलब्धीः प्रति करणत्वग्राहकाणीति चेत्? न, उपलब्धिशब्देन किं स्फुरणं चित् स्वरूपं शब्दमुच्यते उत वृत्तिः वृत्त्युपहितं वा? नाद्यः, तस्य नित्यं विज्ञानमिति श्रुतेर्नित्यत्वे करणत्वानपेक्षणात् वृत्तिश्चेत् सा किमकरणिकैव पक्षः उत चक्षुषोऽन्य-

स्पर्शेन्द्रियानुयव्यतिरेकवदुपपत्तेः। एवं घटादि-कार्य्यमात्रे कारणाकाङ्क्षायां कारणत्वेन अविद्यैव उपसंहर्तव्या। तत्तदर्थिनां तत्तत्कारणविशे-

करणा चक्षुः करणिका वा न प्रथमद्वितीयौ बाधात्। नान्त्यः अन्योऽन्याश्रयात् चक्षुःकरणकवृत्तौ सिद्धायां तत्पक्षकानुमान-प्रवृत्तिः प्रवृत्ते च अनुमाने चक्षुष्करणकवृत्तिसिद्धिः इति अतएव न वृत्त्युपहितपक्षोऽपि। न च अवधीरितविकल्पमुप-लब्धिमात्रं पक्षः तस्मादपि पृष्ठत उपस्पृष्टो मनसा विजाना-तीति मनसा अविद्यया वा अर्थान्तरात् मनसः स्वातन्त्र्येण वहिः प्रवृत्तेः श्रुतिसिद्धत्वात् विमतं चक्षुर्न रूपस्य तदाश्रयद्रव्यस्य वा ग्राहकम् असाधारणेन्द्रियत्वात् घ्राणादिवदिति प्रयोगाच्च। एतेन घ्राणादीनां गन्धादिग्राहकत्वं व्याख्यातम्। न च मनोऽपि करणं तत् किमात्मोपलब्धिं प्रति करणं उत सुखाद्युपलब्धिं प्रति करणम्? नाद्यः, कर्तृकर्मविरोधात् स्वप्रकाशत्वाच्च। न द्वितीयः, सुखादेः साक्षिवेद्यत्वात् तस्मात् अविद्यामूलैव जगदुप-लब्धिरिति कुत इन्द्रियाणां प्रमाणतेति चशब्दं प्रयुञ्जानस्य भावः। ननु अविद्योपादानस्य रजतादेः अविद्यावृत्तिग्राह्यत्वं युज्यते घटादिजगत्तु नाविद्योपादानं घटाद्यर्थिनां मृदादिका-रणविशेषाद्यानयनदर्शनेन अन्वयव्यतिरेकसिद्धमृदाद्युपादान-कत्वात् ततः कथमविद्यावृत्तिभास्यता घटादिप्रपञ्चस्य इति तत्राह एवमिति। घटादि तावत्कार्य्यं मध्यमपरिमाणत्वात् व्यतिरेके आत्मवत् तच्च भावरूपं निष्प्रतियोगिकत्वात् एवं सर्वस्मिन् भावकार्य्ये उपादानकारणाकाङ्क्षायाम् आत्मनो-ऽसङ्गत्वेन अकारणत्वात् अविद्यैव कारणत्वेन कल्पनीया इत्यर्थः। घटादेः अविद्योपदानत्वे घटाद्यर्थिनां मृदाद्युपादानदर्शनेन

घोपादानं तु तथैव स्वप्नवदुपपादनीयम्। ततो ब्रह्मातिरिक्तं कृत्स्नकार्य्यजातं ज्ञानं ज्ञेयरूपं तत् सर्वमाविद्यकमेव। इति प्रातीतिकमेव सत्त्वं सर्वस्य इति सिद्धम्। तदुक्तं वशिष्ठेन।

घटादीन् प्रति मृदाद्युपादानकल्पनं व्याहन्येतेति नेत्याह तत्तदर्थिनामिति। आविद्यकत्वमेव तथैवेत्युच्यते तथाच मृदाद्याकारेण अविद्याया एव परिणतत्वात्तदुपादानेन मृदादेर्घटादीन् प्रति कारणत्वकल्पना आविद्यकत्वाविरोधिनीत्यर्थः। तत्र दृष्टान्तमाह स्वप्नवदिति। यथा स्वप्ने वस्तुतो घटो वा मृद्वा नास्ति किन्तु अविद्यैव मृद्रूपतां प्राप्याविद्यककुलालोपात्ता घटादिकमपि तादृशमेव आरभते न तत्र रथा इत्यादि श्रुत्या वास्तवसृष्टेर्निषिद्धत्वात्तथा जाग्रत्कालेऽपि नेह नानास्तीत्यादि श्रुत्या घटादेः प्रपञ्चस्य निषिद्धत्वात् मायान्त्विति श्रुत्या मायाया जगदुपादानत्वश्रुतेर्मृदाद्याकारपरिणताविद्यैव घटादेरुपादानमिति न किञ्चिदपि विरुध्यत इत्यर्थः। अवान्तरप्रमेयमुपसंहरति तत इति उक्तयुक्तित इत्यर्थः। प्रपञ्चस्य तत्प्रतीतेश्च आविद्यकत्वोपपादनफलं प्रपञ्चस्य ज्ञातसत्वमुपसंहरति प्रातीतिकमिति।

ज्ञानज्ञेययोराविद्यकत्वात् ज्ञानकालीनैव ज्ञेयसत्ता न ज्ञानात् प्राक् नोत्तरमिति ज्ञानस्थित्या तिष्ठति ज्ञाननिवृत्त्या निवर्त्तते प्रपञ्च इति ज्ञात एव सन् प्रपञ्च इत्युक्तं तत्र वशिष्ठवाक्यं संवादयति तदुक्तमिति। भावा ज्ञानज्ञेयरूपाः प्रतिज्ञानं प्रपञ्चभेदं संवादयति क्षणमुद्भूय गच्छन्तीति। कारणत्वेनोपसंहर्त्तव्येत्युक्तम्।

अविद्यायोनयो भावाः सर्वेऽमी बुद्बुदा इव ।
क्षणमुद्भूय गच्छन्ति ज्ञानैकजलधौ लयम् ॥
मृदादीनां कारणत्वं न चेदिष्टं घटं प्रति ।
अविद्यायाः कारणत्वं कथं सिद्ध्येत् प्रमां विना १५

ननु अविद्यायोनित्वं भावानां कार्य्यकारणभावमङ्गीकृत्य न वा ? न चेदविद्यायोनित्वमपि कथम् ? अस्ति चेत् कार्य्यकारण-

ननु तत्तदर्थिनां तत्तत्कारणविशेषोपादानं स्वप्नवदुपपादनीयमिति वदता मृद्घटादीनां कार्य्यकारणभाव एव नेष्यते इष्यते वा आद्यं शङ्कते मृदादीनामिति। तत्र दूषणं सम्भावयति अविद्याया इति। कार्य्यकारणभावस्य क्वापि अस्वीकारादविद्यापि कारणं कथं स्यादित्यर्थः। इष्यते चेत् तर्हि स कार्य्यकारणभावो मृद्घटादीनां प्रमाणात् भ्रमाद्वा न तावद्भ्रमात् विषयबाधे हि भ्रमत्वं तथाच पूर्वोक्त एव दोषः अथ प्रमाणात् न तर्हि घटादीन् प्रति अविद्याकारणं कारणताग्राहकप्रमाणस्य मृदादिविषयत्वेन अविद्याविषयत्वाभावादित्यभिप्रेत्याह प्रमां विनेति।

स्वपद्यं व्याचष्टे नन्विति। अविद्यायोनित्वं कथमित्यत्र कार्य्यकारणभावस्य अनङ्गीकारादिति शेषः। यथायथमिति यथायोग्यं अन्वयव्यतिरेकादि इत्यादिपदं धर्म्मिग्राहकमानपरम्। ततश्च प्रत्यक्षाणां मृद्घटादीनामन्वयव्यतिरेकाभ्यां शब्दाकाशादीनां धर्म्मिग्राहकमानात् कार्य्यकारणभावो यथायोग्यं गृह्यते इत्यर्थः। तत्रेति कारणभावे असम्भवात् अदर्शना-

भावः तदा यथायथमन्वयव्यतिरेकादिरेव प्रमाणं तत्र प्रकारान्तरासम्भवात्। तथा च अन्वय-व्यतिरेकादिसिद्धं मृदादिकारणत्वमपहाय अविद्याकारणत्वाभिधानमनुचितमेव। किञ्च अविद्यायोनित्वं भावानां वदन् प्रष्टव्यः। किमितरनिरपेक्षा अविद्यैव कारणम्? उत अदृष्टे-श्वरादिकारणान्तरसापेक्षा? नाद्यः कारण-

दित्यर्थः। भवतु मृद्घटादावन्वयव्यतिरेकादिप्रमाणसिद्धा कार्य्य-कारणता ततः किं स्यादिति तत्र आह तथा चेति। किञ्च कार-णत्वेन अविद्यैवोपसंहर्त्तव्येत्यत्र एवकारोऽविद्यातोऽन्यत्र मृदादौ कारणत्वयोगं व्यवच्छिनत्ति अविद्यायां कारणत्वायोगं वा न उभयथापि सम्भवतीति दूषणान्तरमाह किञ्चेति। इतरनिर-पेक्षेति मृद्दण्डकुलालादृष्टेश्वरादिनिरपेक्षेत्यर्थः। अयोगव्यव-च्छेदपक्षमाह उतेति। ईश्वरादीत्यत्र आदिपदेन मृदादिकार-णान्तरग्रहः अन्ययोगव्यवच्छेदपक्षमादिमं निराचष्टे नाद्य इति तत्र हेतुमाह कार्य्येति। अविद्यैव चेत् कारणकार्य्यं वियदादि-प्रपञ्चलक्षणं विचित्रं नानारूपं न स्यात् तत्र हेतुः कारणेति। एकस्मादविचित्रादनेकं कार्य्यं न स्यात् सामग्रीभेदस्य कार्य्य-भेदे प्रयोजकत्वादित्यर्थः। किञ्च कारणत्वेन स्वीक्रियमाणा-विद्या न तावच्चेतना अविद्यात्वक्षतेः।

अचेतना चेत्तर्हि सा स्वयमेव प्रवर्त्तते चेतनाधिष्ठिता वा न तावच्चेतनाधिष्ठिता चेतनस्यापि तदधिष्ठातृत्वेन कारणत्व-प्रसक्तौ अविद्यामात्रकारणवादक्षतेः तस्माच्चेतनानधिष्ठिता

वैचित्र्याभावेन कार्य्यवैचित्र्यानुपपत्तेः चेतनाधिष्ठानमन्तरेण जड़शक्तेः कार्य्यकारित्वानुपपत्तेश्च। नापरः अविद्याकारणवादिनापि अदृष्टेश्वरादेः कारणत्वस्य अवश्यं वक्तव्यत्वात् लाघवात् तत एव विचित्रकार्य्योपपत्तौ किमज्ञानेन कारणत्वाभिमतेन कल्पितेन।

तथा च प्रत्यक्षादेर्लौकिकस्य प्रमाणस्य पूर्वकाण्डस्य च पुत्रपशुस्वर्गादिकं प्रति यागादेः साधनताबोध-

स्वयमेव कार्य्यकरणाय प्रवर्त्तते इति वाच्यं तत् दूषयति चेतनेति। शक्तित्वेन पारतन्त्र्यमाह जड़ेति। कारणान्तरसापेक्षेति पक्षं दूषयति नापर इति। कार्य्यस्य घटादेर्निमित्तत्वेन अदृष्टेश्वरादिप्रवेशादुपादानापेक्षायाश्च मृदादिना पूरणात् किमविद्ययेत्यभिप्रायेण। नापर इत्यत्र हेतुमाह अविद्येति। ननु अदृष्टादिवत् अविद्याया अपि प्रमाणसिद्धत्वात् सापि किं न कारणमिति तत्राह कल्पितेनेति। अहमज्ञ इत्यादि प्रतीतेर्ज्ञानाभावविषयतयापि उपपत्तेर्नाविद्या प्रमाणवतीत्यर्थः।

ननु वेदान्तप्रामाण्याय भावानामविद्यायोनित्वं वाच्यमिति तत्राह तथा चेति। भावानामविद्यायोनित्वाभावे सति इत्यर्थः। घटपटादेराविद्यकत्वे मिथ्यार्थविषयलौकिकप्रमाणस्य शुक्तिरजतज्ञानवत्प्रामाण्यं न स्यात् स्वर्गादियागादीनाञ्च आविद्यकत्वे तत्सम्बन्धस्य साध्यसाधनलक्षणस्यापि आविद्यकत्वात्तद्विषयपूर्वकाण्डस्य प्रामाण्यं न स्यात् भावानामनाविद्यकत्वे

कस्य प्रामाण्यं समर्थितं भवति। अन्यथा लोकवेदविरुद्धः कं पक्षमवलम्बेत। तस्मात् अविद्यामात्रकारणकं जगदिति साहसमात्रम्। अत्र वदामः।

यथा सतो जनिर्नैवमसतोऽपि जनिर्न च।
जन्यत्वमेव जन्यस्य मायिकत्वसमर्पकम् ॥१६॥

किमिदं कार्य्यं सत्यमसत्यं वा? नाद्यः

तु स्यादेव लौकिकवैदिकप्रामाण्यमिति भावानामनाविद्यकत्वमेव युक्तमित्यर्थः। मास्तु तेषां प्रामाण्यमिति तत्राह अन्यथेति। न तावदयमाविद्यकजगद्वादी वैदिकः पूर्वकाण्डप्रामाण्यास्वीकारात् नापि बौद्धः प्रत्यक्षाद्यप्रमाणवादित्वात् ततश्चोभयभ्रष्टत्वात् कं पक्षमवलम्बन्तामित्यर्थः। नच प्रपञ्चस्यानाविद्यकत्वे वेदशिरसामप्रामाण्यं जपाद्यर्थत्वेन प्रामाण्योपपत्तेरिति यस्माद्वैचित्र्यानुपपत्तिर्यतश्चाविद्या जड़ाशक्तिर्यतश्च प्रत्यक्षादिप्रामाण्यं ततो भावानामविद्यामात्रयोनित्वं न युक्तमित्युपसंहरति तस्मादिति। सिद्धान्तयति अत्रेति। यदुक्तं मृदादिकारणत्वमपहाय अविद्याकारणत्वाभिधानमनुचितमित्यत्रास्मिन् पक्षे अविद्याकारणत्वाभिधानस्यौचित्यं सिद्धान्तं वदाम इत्यर्थः।

अविद्याकारणत्वं कथं सिध्यतीत्यपेक्षायां वक्तव्यमाह यथेति। कार्य्यं किं निर्वचनार्हम् उत न, यदि निर्वचनार्हं तर्हि तत्किमात्मवत्सत्वेन उत शशविषाणवदसत्वेन नोभयथापि निर्वचनार्हता कार्य्यत्वक्षतेरित्याह सत इति। स्वसत्तासम्बन्धो

## एकमेव अद्वितीयम् इति अद्वैतमात्रपर्य्यवसितागमविरोधात् अनुपपत्तेश्च।

हि जनिः नच स्वसत्तासम्बन्धवति सति सत्तासम्बन्धापेक्षावैयर्थ्यादित्यर्थः। उत्पत्तिमद्धि कार्य्यं नच सर्वदा सदुत्पत्तिमत् ततः प्रपञ्चस्य सत्वेनैव निर्वचने कार्य्यत्वं न स्यादित्यर्थः। एवं सत उत्पत्तिं निरस्य तद्दृष्टान्तेनासतोऽपि तां निरस्यति एवमिति। स्वसत्तासमवायः स्वकारणसंसर्गो वा जनिः न चासतः सम्बन्धाधारत्वं सम्बन्धनिरूपकत्वं वा सम्भवति दृष्टं वा ततः प्रपञ्चस्यासत्वेन निर्वचने उत्पत्तिमत्त्वासम्भवे कार्य्यत्वच्चतेन तत्वेन निर्वचनार्हतेत्यर्थः। अस्तु तर्हि सत्वासत्वाभ्यां प्रपञ्चस्य निर्वचनार्हतेति तत्किमेककाले उभयं भिन्नकाले वा ? नाद्यः विरोधात् न द्वितीयः सत्वासत्वयोः कालोपाधिकत्वप्रसङ्गेन अस्वाभाविकत्वप्रसङ्गात् कालभेदेन वस्तुनो द्वैरूप्यासम्भवाच्च ततः सदसत्पक्षोऽपि न युक्तिमानिति चकारार्थः। निर्वचनानर्हं सदसद्विलक्षणं कार्य्यमस्तु तथाच न पूर्वोक्तदोषप्रसङ्ग इति। यदि द्वितीयः पक्ष उत नेत्यत्रोक्तस्तस्मिन् पक्षे प्रपञ्चस्य सत्योपादानत्वानुपपत्तेः कार्य्यकारणयोर्वैलक्षण्यादर्शनात् योग्यं योग्येन सम्बध्यते इति न्यायेन च अनिर्वचनीयमेव कारणं युक्तं सैव चाविद्येत्यविद्योपादानत्वं प्रपञ्चस्य कार्य्यत्वमेव कल्पयतीति तत्कारणत्वाभिधानमुचितमित्याह। जन्यत्वमेवेति श्लोकं व्याकर्तुं कार्य्यस्वरूपं विमृशति किमिति कार्य्यं निर्वचनीयम् उत अनिर्वचनीयमिति किं शब्दार्थः। निर्वचनीयपक्षं द्वेधा विकल्पयति सत्यमित्यादिना सदसदात्मकत्वस्य विरोधादनुपन्यासः कार्य्यं सत्यं पारमार्थिकं यद्वा असत्यं तुच्छमिति

तथाहि किम् उत्पत्तेः पूर्वं कार्यं सदसद्वा? असच्चेत् तर्हि शशविषाणमपि कारणव्यापाराज्जायेत असत्त्वाविशेषात्। सच्चेत् किं

विकल्पार्थः पारमार्थिकत्वपक्षं दूषयति एकमेवेति। एवकारः स्वगतभेदनिरासार्थः तथाच सजातीयविजातीयस्वगतभेदशून्याद्वैतमात्रे उपक्रमोपसंहारादिना पर्य्यवसितागमविरोधान्न कार्य्यं पारमार्थिकमित्यर्थः। ननु मृत्तिकेत्येव सत्यमिति प्रपञ्चसत्यत्वप्रतिपादकोऽप्यागमोस्तीति कथमसत्यता प्रपञ्चस्येति चेत्? सत्यं तस्य पूर्वोक्तश्रुत्या वक्ष्यमाणानुपपत्तिलक्षणतर्कसनाथया बलवत्या विरोधेनान्यपरत्वादित्यभिप्रेत्य प्रपञ्चसत्यत्वे अनुपपत्तिमाह अनुपपत्तेश्चेति।

प्रतिज्ञातामनुपपत्तिं प्रतिपादयति तथाहीति। यथानुपपत्तिर्भवति तथा प्रतिपाद्यत इत्यर्थः। पारमार्थिकत्वपक्षे घटादेः कार्य्यत्वानुपपत्तिं वक्तुं विकल्पयति किमित्यादिना। असत्पक्षमनूद्य निराकुर्वन् द्वितीयं चरणं व्याचष्टे असच्चेदिति। स्वकारणसम्बन्धनिरूपकत्वं स्वसत्तासमवायाधारत्वमसतो जनिशब्दवाच्यमस्ति न वा? न चेत् कथमसज्जायते? अस्ति चेत्तदा दूषयति तर्हीति। ननु कथं शशविषाणं जायतां तत्सामग्र्यभावादिति तत्राह कारणव्यापारादिति। असतो घटादेर्या सामग्री सैव शशशृङ्गस्यापीति तदपि जायतामित्यर्थः। ननु असत् घटसामग्री कथं शशशृङ्गसामग्री तयोर्भेदादिति तत्राह असत्वेति। भेदधर्मित्वे सत्यत्वप्रसक्तेर्नासन् घटः शशशृङ्गाद्भेत्तुमर्हतीति तत्सामग्र्येव शशशृङ्गसामग्रीति कथं तदजनिरित्यर्थः। ननु नात्यन्तमसत्कार्य्यं किन्तु

कारणव्यापारेण पूर्वमपि तस्य सत्त्वात् कार्य्यत्व-व्याघाताच्च ।

अभिव्यक्तिमात्रं कारणव्यापाराज्जायत इति चेत्? न, तत्रापि सत्त्वासत्त्वविकल्पग्रासवासानपायात् । अस्तु तर्हि सदसद्विलक्षणमनिर्व-

प्रागेवासदिति कथं तन्न कारणादिसम्बद्धमिति चेन्न असतः प्रागिति विशेषणायोगात् योगे वा शशविषाणेऽपि तथा स्यादिति आद्यमनुवदति सच्चेदिति । कारणव्यापारवैयर्थ्यापत्त्या दूषयति किं कारणेति । कारणव्यापारो हि कार्य्यसत्त्वाय तच्चेत् कार्य्यं कारणव्यापारात् पूर्वमेव सत् किं कारणव्यापारेण सतो हि पुनः सत्त्वस्य सम्पादयितुमशक्यत्वादित्यर्थः । न केवलं कारणव्यापारवैयर्थ्यं सत्कार्य्यपक्षे किन्तु घटादेः कार्य्यत्वमपि न स्यादिति हेत्वन्तरमाह कार्य्यत्वेति । नियतपश्चाद्भावित्वस्य कार्य्यत्वात् पूर्वमपि तस्य सत्त्वे पश्चाद्भावित्वलक्षणविशेषणाभावात् कार्य्यत्वं व्याहन्येतेत्यर्थः । एतेनाद्यचरणो व्याख्यातः ।

कारणव्यापारसार्थकत्वाय शङ्कते अभिव्यक्तीति । कार्य्यस्यासतो जनेरनुपपत्तेरसत्वं तुच्छमिति पक्षोऽपि द्वितीयो निरस्तो वेदितव्यः । अनिर्वचनीयपक्षमुत्थापयति अस्तु तर्हीति । अनिर्वचनीयत्वं कुत इत्याशङ्क्य हेतुगर्भविशेषणमाह । सदसदिति पूर्वोक्तयुक्त्या इत्यर्थः । तर्हि मायोपादानत्वं सिद्धमित्याह एवं चेदिति । कार्य्यानुरूपं कार्य्यसदृशमित्यर्थः । सादृश्यमुपपादयितुम् अनिर्वचनीयेत्यज्ञानविशेषणम् अज्ञानस्य सादित्वे तथाविधोपादानान्तरप्रसक्तिं वारयति अनादीति । कार्य्यानु-

नीयमेव कार्य्यम्। एवं चेत् तर्हि कार्य्यानुरूपा-
नाद्यनिर्वचनीयाज्ञानमेव कारणम् उचितं
सत्यस्य असत्यहेतुत्वानुपपत्तेः लोके तथा दर्श-
नात्। न च कार्य्यवैचित्र्यानुपपत्तिः विचित्र-
शक्तिकस्य एव अज्ञानस्य कल्पनादित्युक्तम्। न

रूपमिति विशेषणसूचितं हेतुमाह सत्यस्येति। विलक्षणत्वा-
दित्यर्थः। वैलक्षण्येऽपि कार्य्यकारणभावः किं न स्यात् दृश्यते
हि सत्याशुक्तिरजतादेरसत्यस्य कारणमिति तत्राह लोक
इति। शुक्त्यज्ञानमेव रजतादेः कारणं न शुक्तिर्बाधकालेऽपि
कार्य्यप्रसक्तेरित्यर्थः। यदुक्तं पूर्वपक्षे कारणवैचित्र्याभावे
कार्य्यवैचित्र्यं न स्यादिति तदनूद्य दूषयति न चेति। उक्तमिति
विचित्रशक्तिकमेकमज्ञानमादाय विश्वास्यतीति युक्तमित्यत्र न
चाविद्यैव कारणमिति पक्षे चेतनाधिष्ठानमन्तरेण जड़शक्तेः
कार्य्यकरत्वानुपपत्तिरिति वाच्यम्। अधितिष्ठतां नाम चेतनो
विद्यां तथापि नाविद्यामात्रोपादानत्वं भावानां विरुध्यते।
तस्य निमित्तत्वात् चेतनगतविद्याधिष्ठानत्वस्य अविद्या-
लक्षणाधिष्ठेयसापेक्षत्वेनाविद्यकत्वादविद्यामात्रकारणत्वाहानाच्च
एतेन अदृष्टादिसापेक्षाविद्याकार्य्यं करोतीति पक्षे लाघवा-
ददृष्टादिकमेव कारणमस्तु किमविद्ययेति निरस्तम् अदृष्टा-
देराविद्यकत्वेन तत्कारणत्वेनाविद्याया एव कारणत्वात् एतेन
मृदादेर्घटाद्युपादानत्वात् किमविद्ययेति परास्तं मृदाद्याकार-
परिणताया अविद्याया एव तत्राप्युपादानत्वात्तस्मादाविद्यक
एव प्रपञ्च इति निरवद्यं मिथ्याप्रपञ्चविषयत्वे प्रत्यक्षादेर्लौकिक-

च पूर्वकाण्डस्य प्रामाण्यानुपपत्तिः तस्यापि साध्यसाधनभावमुखेन सत्त्वशुद्धिद्वारेण प्रवृत्ति-

प्रमाणस्य मिथ्याभूतस्वर्गयागसाध्यसाधनभावग्राहकत्वे पूर्वकाण्डस्य च प्रामाण्यानुपपत्तिरित्याशङ्क्याह न चेति। लौकिकप्रत्यक्षादेरुक्तयुक्त्या अप्रमाणत्वादेव प्रामाण्यानुपपत्तिर्न दोषायेति तदुपेक्षणम् इत्यभिप्रेत्याह पूर्वकाण्डेति। कुतः प्रामाण्योपपत्तिस्तत्राह तस्यापीति। अयमर्थः पूर्वकाण्डं किं स्वर्गयागयोः साध्यसाधनमात्रे पर्य्यवसन्नम् उत तत्प्रतिपादनद्वारेण ब्रह्मण्येव पर्य्यवसन्नं? नाद्यः अध्ययनविधिविरोधात् तथाहि अध्ययनविधिर्हि प्रयोजनवदर्थज्ञानोद्देशेनाध्ययनं विधत्ते न च यागस्य प्रयोजनवत्ता स्वर्गादेः क्षयित्वेन प्रयोजनाभासत्वात्तत्साधनयागस्य पारमार्थिकप्रयोजनसाधनत्वानुपपत्तेः तादृगर्थमात्रपरत्वे पूर्वकाण्डस्य उच्यमाने कथं नाध्ययनविधिविरोधः न हि अध्ययनविधिस्त्रैवर्णिकान् प्रतारयति तस्मात् साध्यसाधनमात्रे पूर्वकाण्डस्य पर्य्यवसानमिति रिक्तं वचः द्वितीयेन प्रामाण्यानुपपत्तिरित्यभिप्रायेणाह साध्येति। तस्य पूर्वकाण्डस्य ब्रह्मण्येव तात्पर्य्यान्न प्रामाण्यानुपपत्तिरिति पूर्वेणान्वयः। ननु पूर्वकाण्डात् ब्रह्माप्रतीतेः कथं तत्परतेति तत्राह साध्येति मुखेन द्वारेणेत्यर्थः। पूर्वकाण्डं हि साध्यसाधनभावं यागस्वर्गादेर्बोधयति तद्बोधनाच्च पुमान् कर्माणि अनुतिष्ठति अनुष्ठितानि च कर्माणि ब्रह्मज्ञानं साधयन्तीति तादृक्कर्मबोधकपूर्वकाण्डस्य ब्रह्मपरता परम्परया युज्यते इत्यर्थः। ननु उपनिषदामेव तादृक्ज्ञानसाधनत्वात् न तादृक् ज्ञानं प्रति कर्मणां साधनतेति तत्राह सत्त्वशुद्धिद्वारेणेति।

द्वारेण वा ब्रह्मणि एव तात्पर्य्यात् तात्पर्य्यार्थे शब्दस्य प्रामाण्यात्। तस्मादविद्यायोनित्वं भावानां सुष्ठूक्तम्। अतोऽविद्याकल्पितस्य जगतः प्रतीतिसमकालीनमेव सत्त्वमुचितं रज्जु-सर्पशुक्तिरजतगन्धर्वनगरस्वप्नप्रपञ्चेषु तथा दर्श-नात्।

सत्त्वशुद्धिर्हि तावत् ज्ञानाङ्गं ज्ञानमुत्पद्यते पुंसां क्षयात् पापस्य कर्मण इत्यागमात् सत्त्वशुद्धिः कर्मभ्यः कषाये कर्मभिः पक्वे इत्यागमात् ततश्चान्तःकरणशुद्धिद्वारा कर्मणां ज्ञानोपयोग इति तद्बोधकपूर्वकाण्डस्य ब्रह्मपरतेति भावः। ननु अफलत्वा-न्नित्यकर्मणां भवतु शुद्धिहेतुता काम्यकर्मणान्तु फलान्तराव-बोधात् कथं शुद्ध्यर्थतेति चेत् न कर्मणा पितृलोक इति श्रुतेर्नित्यानामफलत्वासिद्धेः संयोगपृथक्त्वन्यायाच्च संस्कारार्थ-त्वाविरोधात् विविदिषापक्षमाश्रित्य वा परिहरति प्रवृत्ति-द्वारेण वेति अयमर्थः। उत्पत्तिवाक्यविहितानि तावत् कर्माणि तेषां च फलाकाङ्क्षावस्थायामधिकारविध्यन्तरप्रवृत्तिवदग्नेनित्या-दिफलविधायकवाक्यप्रवृत्तेस्तस्य च ब्रह्मानुभवकामो यागादी-न्यनुतिष्ठेदित्यर्थकत्वात् कर्मणामविशेषेण तत्त्वानुभवसाधनत्व-प्रतीतेः साक्षात्कर्मसाध्यत्वस्य ज्ञाने बाधादङ्गावतरणन्यायेन ज्ञानसाधनश्रवणादिप्रवृत्तिद्वारा कर्मणां ब्रह्मज्ञानार्थत्वाव-गमात्तादृक् कर्मबोधकवेदराशेः पूर्वकाण्डस्य युज्यते ब्रह्मपर-तेति कथं तदप्रामाण्यमिति। ननु भवतु ब्रह्मणि पूर्वकाण्डस्य तात्पर्य्यं तथापि तत्र प्रामाण्यं कुतस्तत्राह। तात्पर्य्यार्थे

अत्रेदं निरूपणीयम्।

प्रतीतिमात्रं सत्त्वं चेत् सत्त्वं प्रातीतिकं मतम्।
अविरोधात् ममापीष्टं तन्न्ने दे वद का प्रमा॥१७॥

प्रतीतिसमकालीनं सत्त्वं जगत इति कोऽर्थः किं प्रतीतिरेव सत्वं किं वा प्रतीतिव्यतिरेकेण जगतः पृथक् सत्वमस्ति। अन्त्ये तत्र प्रमाणमस्ति न वा। अस्ति चेत् तत्र किं प्रत्यक्षमनुमानमागमोऽर्थापत्तिर्वा। प्रत्यक्षमिति

इति यत्परः शब्दः स शब्दार्थं इति न्यायादित्यर्थः। जगतोऽज्ञानमूलकत्वे यतो न एकोऽपि दोषः प्रसरति तस्मादित्युपसंहरति तस्मादिति आविद्यकत्वसाधनस्य जगतः प्रातीतिकत्वसाधनोपयोगमाह अत इति। अविद्या हि प्राणिकर्मवशात् क्षुब्धा सती जगदाकारेण तत्प्रतीत्याकारेण च युगपदेव परिणमते नियामकाभावात् क्रमपरिणामे प्रयोजनाभावाच्च वृत्तेश्च विषयजनन्यत्वानङ्गीकारार्पकत्वस्य अजनकत्वे अपि उपपत्तेस्ततः प्रतीतिसमकालीनमेव विषयसत्वमुचितमित्यर्थः। विमतः प्रपञ्चः प्रतीतिमात्रकालीनः अविद्योपादानत्वात् रज्जुसर्पादिवदित्यभिप्रेत्य दृष्टान्तमाह। रज्जुसर्पेति साध्यसाधनवैकल्यं दृष्टान्तेन परिहरति तथेति एतच्चोपपादितं पुरस्तात् प्रतीतिमात्रकालीनं घटाद्याविद्यकं यतः रज्जुसर्पादिकं यद्वत् तथाच इदं ततस्तथा प्रतीतिमात्रकालीनं जगद्युक्त्या निरूपितं प्रतीतिव्यतिरेकेण सत्वं चास्य निवार्य्यते। ननु प्रतीतिसमकालीनं

जगतः सत्वमुदितमित्युक्तं तत्रैकं जगतः सत्वमपरञ्ज्ञानस्येति सत्वद्वयं प्रतिभाति न हि घटमात्रकालीनस्य पटस्य घटान्नातिरिक्तं सत्वं युगपदुत्पन्नविनष्टयोरपि घटपटयोर्भेदेन एकसत्वायोगात् ततश्च ज्ञानज्ञेययोरपि भिन्नत्वात् सत्वैकत्वं न युक्तमित्याशङ्क्याह। अत्रेदमिति प्रातीतिके जगतः सत्वे इदं बुद्धिस्थं वक्ष्यमाणं किमिदमित्यपेक्षायामाह। प्रतीतीति प्रातीतिकं सत्वमिति यत्तत् प्रतीतिमात्रं प्रतीतिरेव सत्वमिति मतं चेद्यदि इति अनुवादः इमं पक्षमविरोधात् स्वीकुरुते अविरोधादिति। अथ उक्तयुक्त्या ज्ञानज्ञेययोर्भेदान्न ज्ञानसत्वमेव ज्ञेयसत्वमिति तत्राह तद्भेद इति। ज्ञानज्ञेययोर्भेदे इत्यर्थः। का प्रमेति किं शब्द आक्षेपे प्रमाप्रमाणमित्यर्थः। ततश्च ज्ञानज्ञेययोर्भेदे प्रमाणं न किञ्चिदित्यर्थः। श्लोकं व्याख्यातुं भूमिकामाह। प्रतीति इति। कोऽर्थ इत्युक्तं विशदयति किं प्रतीतिरेवेति ज्ञेयं तु प्रतीतिरेव अतस्तयोरभेदात् ज्ञेयसत्वा प्रतीतिसत्वैवेत्यर्थः। विकल्पान्तरमाह किं वेति। जगतो ज्ञानात् व्यतिरेकेण भेदेन सत्वं किं पृथगस्ति ज्ञानसत्वाया जगत्सत्वं किं भिन्नमस्तीति द्वितीयविकल्पार्थः सत्वभेदे हेतुमाह प्रतीतिव्यतिरेकेणेति। जगत इत्युभयत्र सम्बध्यते ज्ञानज्ञेययोर्भेदात्तत्सत्वयोरपि भेद इति। आद्यस्याङ्गीकरिष्यमाणत्वादन्तिमं दूषयति अन्त्ये तत्रेति। अन्त्ये अन्तिमे तत्र तस्मिन् पक्षे हेतुत्वेनोपन्यस्ते ज्ञानज्ञेययोर्भेद इत्यर्थः। न चेत् प्रमाणं ज्ञानव्यतिरेकेण जगतः पृथक् सत्वे ततः प्रमाणाभावादेव ज्ञानज्ञेययोर्भेदस्तत्[illegible]सत्वभेदोऽपि न सिद्ध्यतीति स्पष्टत्वाद्वहिरेवान्तिमं प्रमाणाभावपक्षं निराकृत्य विस्तरेण आद्यं प्रमाणसत्त्वपक्षं निराकर्त्तुमनुवदति अस्ति चेदिति प्रमाणमिति शेषः। प्रमाणसत्त्वपक्षं दूषयितुं विकल्पयति तत्रेति। तत्र प्रमाणसत्त्वपक्षे

चेत् तत्र घटोऽयमिति यत् प्रत्यक्षमिदमेव स्वस्माद् घटस्य भेदं विषयीकरोति प्रत्यक्षान्तरं वा। स्वयमेव स्वविषयभेदं गृह्णाति प्रत्यक्षमिति चेत् तत् किं स्वप्रकाशं परप्रकाशं वा? तत्राद्ये स्वविषयविशेषणत्वेन भेदस्य भानेऽपि विशिष्ट-

किं शब्दसूचितान् विकल्पानाह प्रत्यक्षमित्यादिना। उपमानस्य नियतविषयत्वादनुपलब्धेश्चाभावमात्रगोचरत्वात्तयोरनुपन्यासः प्रत्यक्षं ज्ञानज्ञेययोर्भेदे प्रमाणमिति पक्षं दूषयितुमनुवदति प्रत्यक्षमिति। तत्रेति प्रत्यक्षप्रमाणसद्भावपक्षे इदं घटोऽयमिति प्रत्यक्षं स्वस्माद्घटोऽयमित्याकारात् ज्ञानरूपात् घटस्य भेदं घटधर्मिणः सम्बन्धिनं भेदं विषयीकरोति प्रमापयति प्रकाशयतीत्यर्थः। आत्माश्रयप्रसक्तेर्विकल्पान्तरमाह प्रत्यक्षान्तरं वेति। अयं घट एतद्विषयकज्ञानाद्भिन्न इति प्रत्यक्षं प्रत्यक्षान्तरशब्दार्थः।

आद्यमनुवदति स्वयमेवेति। स्वविषयभेदमिति स्वप्रतियोगिकं विषयधर्मिकं भेदमित्यर्थः। आद्यं निराकर्त्तुं तदुपयोगि विचारान्तरमाह तत्किमिति। तत्पूर्वोक्तं प्रत्यक्षं स्वप्रकाशमवेद्यं सत् अपरोक्षव्यवहारयोग्यं परप्रकाशं वेद्यमित्यर्थः। घटोऽयमिति प्रत्यक्षं स्वप्रकाशं सत् स्वविषयसम्बन्धिनं भेदं स्वयमेव गृह्णातीति आद्यं पक्षमनूद्य दूषयति तत्राद्ये इति। तत्राद्ये इति प्राप्तमिति अन्वयः तत्र स्वप्रकाशपरप्रकाशयोर्मध्ये इत्यर्थः। इति शब्दपरामृष्टमाह स्वेनैव स्वं जन्यते इति। किमिति स्वेनैव स्वस्य जननमिति तदर्थमिदं विचार्यते प्रत्यक्षं स्वभेदं घटनिष्ठतया

ज्ञानस्य विशेषणज्ञानजन्यत्वपक्षे स्वेनैव भेद-लक्षणविशेषणविषयेण स्वयं जन्यते इति प्राप्तं तथा च आत्माश्रयः।

विशेष्यत्वेन भेदस्य भाने विशेषणविशेष्योभयेन्द्रियसन्निकर्षमात्रं विशिष्टज्ञानकारणमिति पक्षे

गृह्णन् विशेष्यं घटं प्रति विशेषणत्वेन भेदं गृह्णाति मत्तो भिन्नो घट इति उत मद्घटयोर्भेद इति। स्वभेदं विशेष्यत्वेन यदि स्वविषयविशेषणत्वेन स्वप्रतियोगिकं भेदं प्रत्यक्षं गृह्णातीति पक्षस्तदापि इदमालोचनीयं किं विशिष्टज्ञानं विशेषणज्ञान-विशेष्येन्द्रियसन्निकर्षजन्यं किं वा विशेषणविशेष्योभयेन्द्रियसन्नि-कर्षजन्यं विशेषणज्ञानजन्यं विशिष्टज्ञानमिति पक्षेऽपि इत्थं विचारणीयं विशेषणस्य भेदस्य ग्राहकं ज्ञानं किमिदमेव यत् प्रत्यक्षं भेदग्राहकत्वेन सम्प्रतिपन्नं तदेव उत ज्ञानान्तरं यदि तदेव तर्हि विशिष्टज्ञानं स्वस्मात् स्वविषयस्य भेदग्राहक-त्वेन सम्मतं यत्तदेव विशिष्टज्ञानजनकत्वेन अभिमतविशेषण-भेदज्ञानेन स्वेनैव जन्यत इति कथं न उक्तदोष इत्याह स्वविषयेत्यादिना। स्वेनैव स्वजनने को दोष इति तत्राह तथा चेति। इतराव्यवधानेन स्वजनने कारणत्वेन स्वापेक्षणात् इत्यर्थः।

आत्माश्रयदोषपरिहारार्थं प्रत्यक्षं स्वभेदं विशेष्यत्वेन गृह्णाति इति पक्षमुत्थापयति विशेष्यत्वेन भेदस्य भान इति। भेदस्य विशेष्य-त्वेन ग्रहणपक्षे धर्मिप्रतियोगिनोर्भेदं प्रति विशेषणत्वं तत्र प्रति-योगिभूतं प्रत्यक्षं स्वप्रकाशतयैव भाति घटो धर्मिस्वमात्रविषयेण ज्ञानेन भातीति तज्जन्यत्वेऽपि विशिष्टभेदप्रत्यक्षस्य स्वाजन्य-

ज्ञानोत्पत्तेः पूर्वं भेदोऽस्तीति वाच्यं तथा च तस्यैव ज्ञानस्य कथं स भेदो विषयः स्यात् स्वोत्पत्तेः पूर्वं स्वस्यैवाभावात् ।

ज्ञानान्तरस्य च स्वयंप्रकाशज्ञानाविषयत्वेन तत्प्रतियोगिकभेदाऽविषयत्वात् । अवर्त्तमा-

त्वान्नात्माश्रय इत्यर्थः । एवमपि विशेष्येन्द्रियसन्निकर्षजन्यत्व-मादायात्माश्रयं विशेषणविशेष्योभयेन्द्रियसन्निकर्षजन्यत्वपक्ष एव दातुं तं पक्षमुत्थापयति विशेषणेति । अस्मिन् पक्षे आत्माश्रयं दातुं भूमिकामाह ज्ञानोत्पत्तेरिति । अयमर्थः भेदग्राहकप्रत्य-क्षस्य उभयेन्द्रियसन्निकर्षजन्यत्वपक्षे भेदस्य विशेषणत्वेन विशेष्य-त्वेन वा भाने भेदेन्द्रियसन्निकर्षोऽवश्यं प्राग् वक्तव्यः । भेदसन्नि-कर्षस्य विशिष्टभेदग्राहकप्रत्यक्षजनकत्वात् इन्द्रियसन्निकर्षस्य भेदाश्रयत्वाच्च तदर्थं पूर्वभेदसत्वा वक्तव्येति भवतु एवं भेदसत्ता पूर्वं तथा सति किं स्यादिति तत्राह तथा चेति । इदमत्राकूत-मिन्द्रियसन्निकर्षाश्रयो भेदः स्वग्राहकप्रत्यक्षं किं ज्ञातः सन् जनयति सत्तामात्रेण वा ज्ञातश्चेत् तज्ज्ञानं किमेतदेव ज्ञानं ज्ञानान्तरं वा आद्यं दूषयति तस्यैवेति । स्वप्रतियोगिक-विषयधर्मिकभेदग्राहकत्वेन अभिमतस्य प्रत्यक्षस्यैव कारणी-भूतभेदो विषयो न सम्भवेदित्यर्थः । तत्र हेतुमाह स्वोत्पत्ते-रिति । भावे च आत्माश्रय इत्यर्थः ।

भेदग्राहकत्वेन अभिमतविशिष्टज्ञानोत्पत्तेः प्राक् भेद-ज्ञानं ज्ञानान्तरमेवेति न आत्माश्रय इत्यभिप्रेत्य पक्षान्तर-मुत्थाप्य दूषयति ज्ञानान्तरस्य चेति । अयमत्राशयः

नस्य ज्ञानस्य परप्रकाश्यत्वे वर्त्तमानकालोपाधिकं स्वप्रकाशत्वमिति स्यात्। वर्त्तमानकाले ज्ञानस्वरूपमेव स्वप्रकाशमिति चेत्? न, अतीतानागतयोरपि तथात्वापत्तेः।

नहि घटः कदाचित् अघट इति स्यात्। इन्द्रियसन्निकर्षाश्रयस्य भेदस्य स्वसत्तामात्रेण

तज्ज्ञानान्तरं किं निर्विकल्पकं सविकल्पकं वा? नाद्यः भेदस्य सविकल्पकैकवेद्यत्वात्। न द्वितीय इत्याह स्वयं प्रकाशेति। भविष्यज्ज्ञानस्य प्रतियोगिभूतस्य न स्वप्रकाशत्वमवर्त्तमानत्वात् तथाच तद्विषयकस्य भेदज्ञानस्य न अनुपपत्तिरिति शङ्कित्वा परिहरति अवर्त्तमानस्येति। परप्रकाश्यत्वे ज्ञानस्य अवर्त्तमानत्वं हेतुं वदता वर्त्तमानज्ञानस्य स्वप्रकाशत्वमिति अर्थादुक्तं भवति। तत्र ज्ञानस्य स्वप्रकाशत्वे वर्त्तमानत्वं प्रयोजकं ज्ञानत्वं वा? आद्यं दूषयति वर्त्तमानकालेति। तथाच ज्ञानस्य स्वाभाविकस्वप्रकाशताङ्गीकारपक्षक्षतिरिति भावः। द्वितीये पूर्वदोषानतिक्रम इति शङ्कोत्तराभ्याम् आह वर्त्तमानेति। तथात्वापत्तेः स्वप्रकाशत्वापत्तेः ज्ञानत्वाविशेषादित्यर्थः।

इममर्थमर्थान्तरन्यासेन आह नहीति। यद्वा अतीतानागतयोस्तर्हि ज्ञानत्वमेव मास्तु इत्याशङ्क्याह न हीति। स्वभावत्यागप्रसङ्गादित्यर्थः। विशिष्टज्ञानस्य विशेषणज्ञानजन्यत्वपक्षे भेदस्य च विशेषणत्वेन भानपक्षे विशेषणज्ञानं

स्वविषयकज्ञानजनकत्वमित्यपि प्रक्रियामात्रं प्रमाणाभावेन सत्तामात्रस्य अपि असिद्धेः । अस्तु तर्हि परप्रकाशज्ञानपक्षे प्रत्यक्षान्तरेण ज्ञानात् ज्ञेयस्य भेदग्रहः ।

विशिष्टज्ञानादन्यदिति पक्षोऽप्येतेनैव निराकरणेन निरस्त इति न पृथक् दूषित इति बोद्धव्यं इन्द्रियसन्निकर्षाश्रयो भेदः स्वसत्तामात्रेण स्वविषयकप्रत्यक्षं जनयतीति पक्षमनूद्य दूषयति इन्द्रियसन्निकर्षेति। ननु प्रत्यक्षे प्रत्यासन्नं भासते प्रत्यासत्तिश्च भेदेन्द्रिययोर्यथायथं विशेषणविशेष्यता न ज्ञानं ततः किमिति भेदस्य स्वरूपसत एव स्वज्ञानं प्रति जनकत्वं प्रक्रियामात्रमिति तत्राह प्रमाणेति । अस्तु विशेषणविशेष्यताप्रत्यासत्तिः सा तु सतो भवति नासतः सत्वञ्च भेदस्य प्रमाणाधीनमिति कथं न भेदविषयकप्रत्यक्षात् प्राक् भेदसत्ताग्राहि प्रमाणं मृग्यमिति तदभावान्न भेदसत्तेति असन् भेदः कथं ज्ञानं जनयेदित्यर्थः । सत्ताभावेन नितरां विशेषणविशेष्यताप्रत्यासत्तिरपीति द्योतयितुमपि शब्दः । घटोऽयमिति प्रत्यक्षमेव स्वप्रकाशं सत् स्वविषयभेदं गृह्णातीति पक्षो न सम्भवतीत्युक्तम् । ननु तदेव प्रत्यक्षं परप्रकाशं सत् स्वविषययोर्भेदं गृह्णातु न च अत्र पूर्वोक्तदोषः एतत्प्रतियोगिकविषयनिष्ठभेदग्राहकज्ञानान्तरस्य स्वीकारे परप्रकाशप्रत्यक्षपक्षे अनुपपत्त्यभावादिति चेत् ? न, इदमेव प्रत्यक्षं भेदं विषयीकरोतीति प्रतिज्ञा व्याघातादिति तदेव प्रत्यक्षं परप्रकाशं सत्स्वभेदं विषयीकरोतीति पक्षो वहिरेव निरसनीयः स्वप्रकाशज्ञानपक्षे

सोऽपि व्यावृत्तप्रतियोग्यादिग्रहपूर्वको न वेति विवेचनीयम्। न चेत्कथं भेदं विषयीकुर्य्यात्। नहि निर्द्धर्मिकं निष्प्रतियोगिकं वा भेदं कश्चित् प्रत्येति अयमस्माद्भिन्न इति अनुभवात्।

व्यावृत्तप्रतियोग्यादिग्रहपूर्वकत्वे तु व्यावृत्तिग्राहकप्रत्यक्षान्तरान्वेषणे अनवस्था। तेनैव व्यावृ-

प्रतियोगिनः प्रत्यक्षस्य अवेद्यत्वात्तत्प्रतियोगिकभेदं ज्ञानान्तरं विषयीकर्त्तुं न शक्नोतीति तं पक्षमुपेक्ष्य ज्ञानपरप्रकाशपक्षे भेदस्य ज्ञानान्तरग्राह्यत्वपक्षमुत्थापयति अस्तु तर्हीति।

प्रतियोगिनोऽन्यत्प्रत्यक्षान्तरं तमिमं पक्षं दूषयितुं विकल्पयति सोऽपि इति। प्रतियोग्यादिग्रहपूर्वको न भेदग्रह इति इमं पक्षं दूषयति न चेत् इत्यादिना। प्रतियोग्यादिकमविषयीकृत्य किमिति प्रत्यक्षं भेदं न गोचरयति तत्राह न हीति। अयमत्राशयः भेदग्राहि प्रत्यक्षं निर्विकल्पकं सविकल्पकं वा? न तावन्निर्विकल्पकं भेदस्य समवायादिवत् सविकल्पकैकवेद्यत्वात् सविकल्पकं चेत् तर्हि सविकल्पकं प्रमेयत्वेन भेदं विषयीकरोति भेदत्वेन वा? न तावत्प्रमेयत्वेन निष्प्रयोजनत्वात् न हि प्रमेयत्वेन जलज्ञाने पिपासुस्तदुपशमाय प्रवर्त्तते नापि भेदत्वेन धर्मिप्रतियोगिज्ञानं विना भेदत्वेन भेदग्रहस्य दुर्निरूपत्वात् भेदस्य तत्सापेक्षैकरूपत्वादिति इममेवार्थमभिप्रेत्याह। अयमस्मादिति।

व्यावृत्तप्रतियोग्यादिग्रहपूर्वको भेदग्रह इति पक्षमनूद्य

त्तिग्रहे आत्माश्रयः। तस्माद्वस्तुमात्रावगाहि प्रत्यक्षं न भेदवार्त्तां जानातीति सिद्धम्।

अस्तु तर्हि अनुमानात् ज्ञानज्ञेययोर्भेदग्रहः। तथाहि विमतो विषयः स्वविषयज्ञानाद्भिद्यते तद्विरुद्धधर्माश्रयत्वात् यो यद्विरुद्धधर्मा-

दूषयति व्यावृत्तेति। प्रतियोगि ज्ञानं भेदज्ञाने हेतुरित्यत्र कीदृक् प्रतियोगि ज्ञानं विवक्षितं निर्विकल्पकं चेत् तर्हि किञ्चिदाकारः प्रतियोगिभेदज्ञाने भासेत ज्ञानस्य स्वसमानाकारविषयोपस्थापकत्वात् अन्यथा अतिप्रसङ्गात् सविकल्पकं चेत् तत् किं भिन्नत्वेन प्रतियोग्यादि गृह्णाति अभिन्नत्वेन वा ? न तावदभिन्नत्वेन प्रतियोगिधर्मिणोरभेदग्राहिणः प्रमाणत्वेन उत्तरस्य भेदग्राहकत्वेन अभिमतस्य अप्रामाण्यप्रसङ्गात् तदुपजीव्योत्तरस्य प्रवृत्तेः ततो भिन्नत्वेन धर्म्यादिग्रहः परिशिष्यत इति एतमर्थमभिप्रेत्य प्रतियोग्यादि विशेषयति व्यावृत्तेति। प्रत्यक्षान्तरस्यापि व्यावृत्तं प्रतियोग्यादिविषयत्वेन विशेषणव्यावृत्तप्रतियोग्यादिग्रहजन्यत्वात् तद्ग्राहकान्तरस्वीकारे अनवस्था स्यादित्यर्थः। भेदग्राहकत्वाभिमतस्य प्रत्यक्षस्यैव व्यावृत्तप्रतियोग्यादिज्ञानत्वे स्वेनैव स्वयं जन्यत इत्यात्माश्रयापत्तिरिति दूषयति तेनैवेति। प्रत्यक्षस्य भेदाग्राहकत्वे निर्विषयत्वापत्तिमुपसंहारव्याजेन परिहरति तस्मादिति।

एवं प्रत्यक्षस्य भेदग्राहकतां पराकृत्य अनुमानं भेदग्राहकमिति पक्षमुत्थापयति अस्त्विति। स्वविषयेति विषयो घटो रजतज्ञानाद्भिद्यते इति सिद्धसाधनमिति साध्यं विशि-

अयः स ततो भिद्यते यथा घटात् पटस्तथा चायं तस्मात् तथा। नैवं विरोधस्य भेदनिरूप्यत्वेन भेदासिद्ध्या विरोधासिद्धौ तद्विरुद्धधर्माश्रयत्वस्य अपि असिद्धेः। साध्याप्रसिद्ध्या व्याप्त्यसिद्धेश्च। नहि घटपटयोर्भेदः केनचित् मानेन सिद्धो येन साध्यं प्रसिद्ध्येत्। प्रत्यक्षाभावे अनुमानान्तरानुसरणेऽपि अनवस्थादिदोषस्य तादवस्थ्यात्।

नह्वि स्वविषयेति। तद्विरुद्धेति तस्मात् ज्ञानाद्विरुद्धो यो धर्मः जड़त्वमप्रकाशत्वं तदाश्रयत्वादित्यर्थः। असिद्ध्या हेतुदूषणेन दूषयति नैवमिति। धर्मस्य विरुद्धत्वं तावद्विरोधाश्रयत्वादिति अविवादं विरोधश्च ज्ञानज्ञेययोर्भेदे ज्ञात एव ज्ञातुं शक्यो नान्यथा तद्भेदस्य च साध्यत्वादसिद्धौ तन्निरूप्य विरोधलक्षणधर्मविशेषणासिद्ध्या तदाश्रयत्वस्यापि असिद्धेर्नैवमित्यर्थः। किञ्च ज्ञानप्रतियोगिको भेदः साध्यते भेदमात्रं वा न तावदन्त्यः तत्र अविवादात् आद्यश्चेत् तत्राह साध्येति। तथा च साध्यस्य पक्षविशेषणस्य अप्रसिद्ध्या पक्षासिद्धेराश्रयासिद्धिरित्यर्थः। अथ ज्ञानतद्विषयौ परस्परं भिन्नौ विरुद्धधर्माश्रयत्वात् घटपटवदिति विवक्षितं परस्परं भेदश्च घटादावेव प्रसिद्ध इति नाप्रसिद्धविशेषणत्वेन आश्रयासिद्धिरिति तत्राह व्याप्त्यसिद्धेश्चेति। कुतो व्याप्त्यसिद्धिरिति तत्राह न हीति। व्याप्तिर्नाम साध्यसाधनयोरव्यभिचरितसम्बन्धः सम्बन्धस्य च उभयनिरूप्यत्वादुभयेन सत्ता भवितव्यं तत्र साध्यं न दृष्टान्तेऽपि सत्प्रमाणाभावात् ततः

आगमस्याभेदमात्रे तात्पर्य्येण पर्य्यवसन्नस्य भेदबोधकत्वं शङ्कितुमपि अशक्यम्। ननु ब्रह्मणः सकाशात् सृष्टिं प्रतिपादयन्नागमः कार्य्यं जातस्य ततो भेदमपि प्रतिपादयति। अभेदे ततो जन्मैव न स्यादिति चेत्? न, सृष्टिवाक्यस्य सर्वस्य प्रधानादिपरपरिकल्पितकारणान्तरनिरा-

साध्याप्रसिद्ध्या तन्निरूपिता व्याप्तिर्न सिद्ध्यतीति व्याप्यत्वासिद्धो हेतुरित्यर्थः। एतेन आश्रयासिद्धिरपि व्याख्याता केनचिन्मानेन इत्युक्तं विशदयति प्रत्यक्षाभावे इति प्रत्यक्षस्य भेदग्राहकत्वमुपरिष्टान्निराकरिष्यते। अनुमानान्तरेति प्रकृतादनुमानादन्येन येन अनुमानेन घटपटयोर्भेदो ग्राहिष्यते तत्रापि व्याप्तिग्रहस्तेनैव चेदात्माश्रयोऽन्येन चेदनवस्थेति पूर्वोक्तदोषतादवस्थ्यमित्यर्थः। ज्ञानज्ञेययोर्भेदे प्रमाणमागम इति पक्षं दूषयति। आगमस्येति। पूर्वोत्तरकाण्डात्माहि आगमस्तत्र पूर्वकाण्डस्य साध्यसाधनमुखेन संस्कारादिद्वारा अद्वितीये ब्रह्मणि एव तात्पर्य्यादुत्तरकाण्डस्य षड्विधलिङ्गोपेतस्य पुनः साक्षादेव अद्वैतपरत्वाद्भेदबोधकत्वं शङ्कितुमशक्यमित्यर्थः। ननु यतो वा इमानि भूतानि जायन्ते इत्यागमस्य देवताधिकरणन्यायेन ज्ञानज्ञेयभेदप्रतिपादकत्वात् तत्र प्रामाण्यमिति शङ्कते ननु ब्रह्मण इति। ननु यतो वेत्यादि वाक्यं ब्रह्मणो निमित्तोपादानरूपात् जगतः सृष्टिमाह न भेदं तदप्रतीतेस्ततः क्व देवताधिकरणन्यायेन तस्मिन् तस्य प्रामाण्यमिति तत्राह अभेद इति। ब्रह्मजगतोरिति शेषः। ततो ब्रह्मणो जन्म न स्यात् कार्य्यस्य नहि घटो घटाज्जायते एकस्य

करणपरस्य मृद्घटादौ कारणात् कार्य्यस्य भेदेनानिरूपणवद् ब्रह्मणः कारणात् कार्य्य-जातस्य सर्वस्य भेदेनानिरूपणेनाद्वितीयब्रह्म-सम्भावनामात्रे तात्पर्य्यात्। अन्यथा भेदपरत्वे तन्निषेधोऽनर्थकः स्यात्। किञ्च सृष्टिवाक्यं

पूर्वोत्तरवृत्तित्वासम्भवादित्यर्थः। ननु ब्रह्मजगतोरेवंभेदेऽपि ज्ञानज्ञेययोर्भेदे किमायातं नहि कार्य्यं ज्ञानं तस्य जड़त्वात् न अपि ब्रह्म तस्य असङ्गतित्वेन घटाद्यप्रकाशकत्वात् ततः कथं तयोर्भेदेऽपि ज्ञानज्ञेययोर्भेदः स्यादिति मैवं प्रकाशकं हि ज्ञानं वृत्तौ हि चिद्रूपं ब्रह्म जगत् प्रकाशकं वृत्तेर्जड़त्वेन अप्रकाशत्वात् सविशेषणे हीति न्यायेन ब्रह्मण्येव प्रकाशकत्व-पर्य्यवसानेन ज्ञानत्वोपपत्तेरतस्तद्भेदः कार्य्यस्य ज्ञानादेव भेद इति किं कार्य्यकारणप्रतिपादकत्वमात्रेण उक्तागमस्य ज्ञानज्ञेय-भेदसाधकत्वम् उत तत्प्रमापकत्वेन? नाद्यः विषं भुङ्क्ष्व इत्यादौ अतिप्रसङ्गात् न द्वितीयः तस्य परकल्पितकारणा-न्तरनिराकरणपरत्वेन कार्य्यकारणभावाप्रमापकत्वादित्याह नेत्यादिना। यतो वा इमानि भूतानि जायन्ते इति श्रुताविमा-नीति तावद्भूतविशेषणं तेन नामरूपाभ्यां व्याकृतं मनसाप्य-चिन्त्यरचना रूपादीत्येवम्भूतधर्माः समर्प्यन्ते तैश्च धर्मैः प्रधाना-देरचेतनात् परिच्छिन्नज्ञानशक्तेश्च हिरण्यगर्भादेर्जगतः सम्भवो न सम्भवतीति यतो वेत्यादि श्रुति स्तेषां जगत्कारणत्वनिषेध-परा इत्यर्थः। ननु सृष्टिवाक्यस्य परकल्पितप्रधानादेर्जगत्कारण-निराकरणत्वं नोपपद्यते समन्वयाधिकरणविरोधादिति तत्राह

न तावत् साक्षाद्भेदं प्रतिपादयति भेदवाचकपदाभावेनापदार्थस्य वाक्यार्थत्वाभावात् पदार्थस्यैव संसृष्टत्वेन वा धर्म्मिमात्रपरत्वेन वा वाक्यप्रतिपाद्यत्वात् कल्पनायाश्च निषेधवाक्यविरोधिनानुत्थानात्। नच ज्ञानमेव स्वातिरिक्तज्ञेयव्यतिरेकेणानुपपन्नं स्वभिन्नं ज्ञेयं विषयीकरोति न हि निर्विषयं ज्ञानं सम्भवति दृष्टं वा सवि-

अद्वितीयेति। अद्वितीयं विजातीयभेदशून्यं यद्ब्रह्म तदीया सम्भावना पूर्वोक्तस्वरूपं ब्रह्म भवितु मर्हतीत्येवं रूपा तन्मात्रे सृष्टिवाक्यस्य तात्पर्य्यान्नेति पूर्वनिषेधे हेतुत्वेनान्वयः। सम्भावनायां हेतुमाह ब्रह्मणः कारणादिति। अत्र दृष्टान्तो मृद्घटादाविति भेदे हिमवद्विन्ध्ययोरिव कार्य्यकारणभावादर्शनात् मृद्घट इति सामानाधिकरण्याच्च तयोरभेदे कार्य्यकारणभावो युज्यते इत्यर्थः। ननु मृद्घटयो रभेदे पूर्वोत्तरभावासम्भवात् पूर्वोत्तरभावव्याप्तः कार्य्यकारणभावो विना भेदं न सम्भव इति सृष्टिवाक्यं भेदपरमेव किं न स्यादित्याशङ्क्याह अन्यथेति।अन्यथा शब्दं व्याचष्टे भेदपरत्वे इति। तस्य भेदस्य निषेधः तन्निषेधः भेदस्य सृष्टिवाक्यतात्पर्य्यविषयत्वे नेह नानास्ति किञ्चनेत्यादिश्रुत्या निषेधो व्यर्थः स्यादखण्डवस्तुसिद्धयर्थोभेदनिषेधः। नच श्रुतितात्पर्य्यविषये सति भेदेऽखण्डवस्तु सिद्ध्यतीति व्यर्थस्तन्निषेध इत्यर्थः। न च विना भेदं पूर्वोत्तरभावासम्भवात् न कार्य्यकारणभाव इति साम्प्रतं कल्पितभेदमाश्रित्य कल्पित-

विषयस्यैव भासमानत्वात् अन्यथा निष्प्रकारक-

कार्य्यकारणभावे विरोधाभावात् किञ्च सृष्टिवाक्यं भेदपरमिति कोऽर्थः ? किं तद्वाक्यं पदार्थत्वेन भेदं साक्षात् प्रमापयति वाक्यार्थत्वेन वा ? विना भेदं वाक्यार्थः कार्य्यकारणभावो नोपपद्यते इति वाक्यार्थोपपादकभेदमर्थात् कल्पयतीति वा सर्वथापि न सम्भवति इत्याह। किञ्चेत्यादिना भेदो न सृष्टिवाक्यनिविष्टपदार्थः सृष्टिवाक्ये भेदोपस्थापकपदाभावात् अपदार्थत्वाच्च न वाक्यार्थ इत्यर्थः। ननु अपदार्थस्यापि परगृहभोजननिषेधस्य विषं भुंक्ष्वेति वाक्यार्थतावत् ब्रह्मजगतोर्भेदस्य अपदार्थस्यापि सृष्टिवाक्यार्थता किं न स्यादिति नेत्याह पदार्थस्य एवेति। अखण्डवाक्यार्थत्वपक्षमाश्रित्याह धर्मीति। वाक्यप्रतिपाद्यत्वादित्यत्र साक्षादिति शेषः। ततश्च परगृहभोजननिवृत्तेरपदार्थत्वात् न साक्षाद्वाक्यार्थतेति न दोषः। तृतीयं पक्षं निषेधयति कल्पनायाश्चेति। न तावत् सृष्टिवाक्यमेव कार्य्यकारणयोर्भेदं कल्पयति अचेतनत्वात् न अपि वाक्यार्थं दृष्ट्वा पुरुषो भेदं कल्पयति पुंकल्पनायाः श्रुतिविरोधेन आभासत्वादित्यर्थः। एतेन अर्थापत्तिर्भेदे प्रमाणमिति निरस्तं ज्ञानात्मकब्रह्मजगतोर्भेदे तयोः कार्य्यकारणभावानुपपत्तिः प्रमाणमिति प्रसङ्गान्निरस्तं ज्ञानान्यथानुपपत्तिर्ज्ञानज्ञेयभेदे प्रमाणमित्याशङ्क्य पराचष्टे न चेत्यादिना इति नच वाच्यमिति अन्वयः। इति शब्दपरामृष्टमाह ज्ञानमेवेत्यादिना। यथा दाह्यं विना न वह्निरात्मानं लभते तथा विना ज्ञेयं ज्ञानं स्वरूपमेव न लभते अतः अवश्यं ज्ञेये न भवितव्यम्, तच्च ज्ञेयं न स्वयमेव वृत्तिविरोधात् तस्मात् ज्ञानमेव स्वभिन्नज्ञेयमन्तरेण अनुपपन्नं ज्ञेयं कल्पयतीति ज्ञानज्ञेययोर्भेदसिद्धिरिति। ननु दाह्यप्रभवो

मेव भासेत ज्ञाने विषयातिरिक्तस्य प्रकारस्य अभावादिति वाच्यम्? ज्ञेयव्यतिरेकेण ज्ञानस्य अनुपपत्त्यभावात्।

वह्निर्विना दाह्यं न सम्भवतीति युक्तं ज्ञानं तु न विषयजन्यं ततः कथं विना विषयं ज्ञानमेव न सम्भवतीति तत्राह न हीति। अर्थप्रकाशो हि ज्ञानम् अत्यन्तासति वाह्यार्थे कस्य प्रकाशनं ज्ञानं भवेत्। ततोऽर्थनिरूप्यत्वात् ज्ञानस्य विषयाभावेन तस्य स्वरूपं सम्भवति इत्यर्थः। ननु असम्भावितोऽपि अर्थः प्रामाणिकश्चेत् स्वीक्रियते एव यथा औत्पातिकः सवितरि सुषिरिति तत्राह दृष्टमिति। दृष्टं वा न हि इति अन्वयः। निर्विषयज्ञाने प्रमाणाभावं प्रतिज्ञाय तत्र सविषयज्ञानभासनं हेतुत्वेनाह सविषयस्यैव इति। ननु कस्मिंश्चित् भूतले घटवति अपि भूतलान्तरं निर्घटं यथा तथा कस्मिंश्चित् ज्ञाने सविषयेऽपि ज्ञानान्तरं निर्विषयं किं न स्यादिति शङ्कानिरासाय आह एवेति। अवधारणार्थमुपपादयति अन्यथेति। अन्यथा निर्विषये ज्ञाने सति इत्यर्थः। ननु घटोऽयमिति ज्ञाने घटो विषयो घटत्वञ्च प्रकार इति उभयं सम्मतं ततश्च विषयप्रकारयोर्भेदात् किमिति विषयाभावे निष्प्रकारकं ज्ञानं भासिष्यत इति तत्राह ज्ञाने इति। भासमानवैशिष्ट्यनिरूपको हि ज्ञाने प्रकारः स च विशेष्यवद्भासमानत्वात् विषय इति तस्यापि अभावे निष्प्रकारकमेव ज्ञानं भासेत इत्यर्थः। ततो ज्ञानं ज्ञेयं विना अनुपपन्नं वृत्तिविरोधात् स्वभिन्नं ज्ञेयं कल्पयति इति नच वाच्यमिति प्रतिज्ञायां हेतुमाह ज्ञेयेति।

ज्ञेयं विना ज्ञानस्य अनुपपत्त्यभावमुपपादयति तथाहीति।

तथाहि तत् किं ज्ञानस्य ज्ञेयव्यतिरेकेण उत्पत्त्यनुपपत्तिःस्थित्यनुपपत्तिर्ज्ञप्त्यनुपपत्तिर्वा? नाद्यः, ज्ञानस्य स्वरूपत उत्पत्त्यभावात्। भावे वा प्रमाणतदाभासाभ्यामेव तदुत्पादनसम्भवे विषयानपेक्षणात् ज्ञानस्य सर्वत्र विषयजन्यत्वे नियमाभावात्।

नापि स्थित्यनुपपत्तिः विषयस्य ज्ञानानाश्रयत्वात् तथात्वे वा विषयत्वव्याघातात्।

ज्ञानज्ञेययोर्भेदे ज्ञानस्य ज्ञेयव्यतिरेकेण उत्पत्त्यनुपपत्तिस्तत्प्रमाणं किम् इत्यर्थः। ज्ञानस्य स्वभिन्नज्ञेयमन्तरेण उत्पत्त्यनुपपत्तिरिति किमेकदेशिमतम्? उत व्युत्थितस्य? आद्यश्चेत्? तत्राह ज्ञानस्येति। ज्ञानस्य वृत्त्युपरक्तत्वाकारेण उत्पत्तावपि स्वरूपतो नित्यभावत्वेन उत्पत्त्यभावात् न आद्य इत्यर्थः। व्युत्थितं प्रत्याह भावे वेति। अन्यथैव उपपत्तेर्नेयमर्थापत्तिः प्रमाणमित्यर्थः। ननु यथा प्रमाऽप्रमे प्रमाणतदाभासौ कारणत्वेन अपेक्षेते तथा कारणत्वाविशेषाद्विषयमपि ते अपेक्षेते एव इति कथं तद्व्यतिरेकेण तयोरुत्पत्तिरिति तत्राह ज्ञानस्येति। अनुमित्यादौ व्यभिचारादित्यर्थः।

द्वितीयं दूषयति नापीति। नैयायिकादीन् प्रति हेतुमाह विषयस्येति। तादृशं प्रत्याचष्टे तथात्वे इति। तथात्वे विषयस्य ज्ञानाश्रयत्वे ज्ञानाश्रयस्य प्रमातृत्वात् इत्यर्थः। कथं तर्हि ज्ञातो घट इति प्रत्यय इति नष्टो घट इतिवत् सन्तोष्टव्यम्। तृतीयमुत्थापयति ज्ञानविषयकेति।

ज्ञानविषयकज्ञानस्य विषयज्ञानाधीनत्वेन ज्ञेयं विना ज्ञप्त्यनुपपत्तिरस्त्विति चेत्? न, ज्ञानस्य स्वयम्प्रकाशमानत्वेन स्वव्यवहारार्थं स्वातिरिक्तानपेक्षणात्। परप्रकाशत्वेन ज्ञानान्तरापेक्षायां तस्यापि अन्यतस्तस्यापि अन्यत इति अनवस्थित्या ज्ञानासिद्धौ जगदान्ध्यप्रसङ्गात्।

ज्ञानस्य ज्ञेयं विना ज्ञप्त्यनुपपत्तिर्ज्ञानज्ञेयभेदे प्रमाणमस्तु। ननु ज्ञानस्य विषयीभूतज्ञानविषयं विना किमनुपपन्नं स्वरूपमेव इत्याह ज्ञानविषयकेति। विषयज्ञानाधीनत्वं नाम विषयव्यावृत्तज्ञानजन्यत्वं ततश्च ज्ञानवत् ज्ञानविषयस्यापि ज्ञानज्ञप्तौ कारणत्वात् तदभावे ज्ञानज्ञप्तिः अनुपपन्ना इत्यर्थः। ज्ञानज्ञप्तेरभावात् न ज्ञानज्ञप्तिकारणत्वेन ज्ञेयसिद्धिः इत्यभिप्रेत्य पूर्वपक्षनिषेधं प्रतिजानीते नेति। ज्ञानं किं स्वव्यवहारार्थं स्वातिरिक्तज्ञानमपेक्षते? उत विषयव्यवहारार्थं? नान्त्यः, ज्ञानातिरिक्तविषयस्याद्याप्यसिद्धेः अत एव दूषयन्नेति प्रतिज्ञायां हेतुमाह ज्ञानस्येति। स्वयम्प्रकाशमानत्वेनेति अवेद्यत्वे सति अपरोक्षव्यवहारयोग्यत्वेन इत्यर्थः। ननु न ज्ञानं स्वकाशं तस्य वस्तुत्वेन घटवद्वेद्यत्वादिति तत्राह परप्रकाशत्वेनेति। ज्ञानं किं ज्ञायमानं विषयसाधकं? उत अज्ञायमानं? नाद्यः प्रथमज्ञानवत् ज्ञानाभासकज्ञानान्तरस्यापि ज्ञातस्य स्वविषयाभिमतज्ञानसाधकत्वापत्तौ ज्ञानान्तरान्वेषणायाम् एवं तृतीयज्ञानस्यापि ज्ञानान्तरापेक्षया अनवस्थाप्रसङ्ग इत्याह ज्ञानान्तरापेक्षायामिति। प्रथमज्ञानस्येति शेषः। ननु नेयमनवस्था दोषाय मूलभूतप्रथमज्ञानस्य क्षयाभावात् इति तत्राह

अज्ञायमानस्यैव ज्ञानस्य स्वविषयसाधकत्वे प्रमाणाभावेन नरशृङ्गतुल्यस्य स्वरूपसत्त्वासिद्धेः। अस्तु वा ज्ञानस्य स्वज्ञानार्थं ज्ञानान्तरापेक्षा तथापि विषयापेक्षणं कुतः विषयज्ञानस्यैव अपेक्षणात्। ज्ञानसामान्यस्य अनपेक्षणे स्वविषयव्यावृत्तज्ञानापेक्षायां विषयापेक्षापि अवश्यम्भा-

ज्ञानासिद्धाविति। यदेव ज्ञानं न ज्ञायते तदसत्त्वापत्त्या तद्विषयज्ञानस्यापि प्रमाणाभावादसत्वापत्त्या संविद्धाराया अपि असत्त्वापत्त्या मूलभूतज्ञानस्य अपि असिद्धिः स्यात् तदसत्वे च जड़प्रपञ्चस्य स्वयं सिद्ध्यभावात् अनवभासः स्यादिति परप्रकाशत्वं ज्ञानस्य न युक्तमित्यर्थः।

द्वितीय मनूद्य दूषयति अज्ञायमानस्यैवेति। ननु यदा कदापि प्रमाणप्रवृत्त्या स्वरूपं सेत्स्यतीति तत्राह अस्तु वेति। पूर्वं ज्ञानस्य ज्ञप्तिरेव न सम्भवति इति अर्थापत्तौ असम्भवो दोष उक्त अस्तुवेत्यादिना तु अन्यथैव उपपत्ति रुच्यते इति विवेकः। विषयीभूतज्ञानस्य यो विषयस्तदपेक्षणं ज्ञानविषयकज्ञानान्तरस्य कुत इत्यर्थः। विषयज्ञानस्येति ज्ञानज्ञप्तिर्हि स्वविषयं ज्ञानमेव अपेक्षते न विषयीभूतज्ञानविषयम् अपि स्वविषयज्ञानमात्रेण चरितार्थत्वात् इत्यर्थः। ननु ज्ञानज्ञप्तौ किं ज्ञानसामान्यमेव विषयः ? किं वा ज्ञानविशेषः ? नाद्यः घटज्ञानमित्याकारत्वात् ज्ञानमात्रविषयत्वायोगात् तन्मात्रानपेक्षणात्। अथ यदि द्वितीयः तर्हि ज्ञानविशेषस्य विषयाधीनत्वात् कथं विषयाभावे ज्ञानज्ञप्त्युपपत्तिरिति पूर्वपक्षी शङ्कते ज्ञानसामान्यस्येति। सत्यं ज्ञान-

विनी इति तत्तुच्छं ज्ञानस्य स्वत एव व्यावृत्तत्वात् परसिद्धजात्यादिवत्।

तथापि ज्ञानस्य ज्ञेयव्याप्तत्वात् ज्ञेयं बोधयति

विशेषो ज्ञप्त्या भास्यते इति स च ज्ञाने विशेषो व्यावृत्तिरूपो-न विषयकृत इति न तत् ज्ञप्तिर्विषयमपेक्षते इत्यभिप्रेत्य परि-हरति तत् तुच्छमिति कुतस्तर्हि ज्ञानान्तरेभ्यो घटज्ञानस्य व्यावृत्तात्मकविशेषसिद्धिरिति शङ्कां परिहरन् तुच्छत्वप्रति-ज्ञायां हेतुमाह ज्ञानस्येति। विषयो ज्ञाने किं ज्ञानव्यावृत्ति-हेतुः? उत ज्ञाने व्यावृत्तिप्रतीतिहेतुः? नाद्यः व्यावृत्तेरन्योन्या-भावत्वेन अजन्यत्वात् जन्यत्वे वा तदुत्पत्तेः प्राक् ज्ञानं सर्वाभिन्न-स्वभावमुत्पन्नमिति कथं न विषयात् व्याप्युत्पत्तौ स्वभावं जह्यात् अतीतानागतविषयकज्ञानस्य अव्यावृत्तत्वप्रसङ्गाच्च अथ विषयः स्वज्ञाने व्यावृत्तिं प्रत्याययति तर्हि असतीं तां प्रत्या-ययेत् सतीं वा? न तावदाद्यः असतोऽप्रकाशनात् द्वितीये ज्ञान-व्यावृत्तिसत्त्वं न विषयाधीनमिति स्वतएव व्यावृत्तं ज्ञानमिति यथा परेषां वैशेषिकादीनां पटत्वादिभ्यो व्यावृत्ता घटत्वादि जातिः स्वत एव न तु व्यक्त्या व्यावर्त्यते अन्योन्याश्रयात् अन्त्य-विशेषाश्च स्वतएव व्यावृत्ताः तथा ज्ञानमपि स्वत एव व्यावृत्तम् इति ज्ञानस्य परप्रकाशत्वपक्षेऽपि तत्प्रतीतिर्न विषयनिरू-प्येति न ज्ञानज्ञप्त्यनुपपत्ति स्तत्र प्रमाणमित्यर्थः।

ननु यद्यपि विषयो न ज्ञानोत्पत्तिहेतुर्नापि तत्स्थिति हेतु-र्नापि तज्ज्ञप्तिहेतुः तथापि यथा दाह्यव्याप्तो वह्निर्दाह्यं दहति तथा ज्ञेयव्याप्तं ज्ञानं ज्ञेयंभासयति इति अस्ति ज्ञेयमिति शङ्कते। तथापि इति। बोधयति ज्ञानमिति शेषः यत्र यदा वह्निस्तत्र

इति चेत्? न, व्याप्त्यसिद्धेः ज्ञानज्ञेययोर्विभिन्न-देशत्वेन सामानाधिकरण्याभावात्। अतीतानागतार्थज्ञानदर्शनेनैककालत्वस्य अपि असिद्धेः।

तस्मात्।

प्रत्येतव्यप्रतीत्योश्च भेदः प्रामाणिकः कुतः?
प्रतीतिमात्रमेवैतद्भाति विश्वं चराचरम्॥१८॥
ज्ञानज्ञेयप्रभेदेन यथा स्वाप्नं प्रतीयते।
विज्ञानमात्रमेवैतत् तथा जाग्रच्चराचरम्॥१९॥

तदा दाह्यमिति युक्तं वह्निर्दाह्यं दहति इति ज्ञानं पुनर्न ज्ञेयेन व्याप्तं विभिन्नदेशत्वात् क्वचित् विभिन्नकालत्वाच्चेति दृष्टान्तदार्ष्टान्तिकवैषम्येण परिहरति नेत्यादिना। तद्भेदे वद का प्रमिति चतुर्थपादसंगृहीतं विवृतम् एतावता ग्रन्थेन यत्तदिदानीमुपसंहरन् श्लोकेन संगृह्णाति तस्मादिति।

ननु ज्ञानज्ञेययोरभेदे किं ज्ञानमेव अवतिष्ठते ज्ञेयमेव वेति विनिगमकाभावात् विषये किं प्रतीतिरेव सत्यमित्यादि विकल्पाङ्गीकारेण आह प्रतीतिमात्रमेवेति।

यदेतद्विश्वं भाति तत्प्रतीतिमात्रमेवेति यत् तत् अध्याहृत्य योज्यम् अथवा यत्प्रतीतिमात्रं स्वप्रकाशमहिम्ना भाति एतदेव विश्वं न ततोऽतिरिच्यते इत्यर्थः। जड़प्रपञ्चस्य स्वसिद्धये ज्ञानापेक्षाया अवश्यं वक्तव्यत्वात् ज्ञानस्य च विषयानपेक्षाया उपपादितत्वात् ज्ञाने एव विषयोऽन्तर्भवितुमर्हति इत्यर्थः। ननु यदि प्रतीतिरूपमेव जगत्प्रतीतितो न अतिरिच्यते कथं तर्हि चराचररूपेऽपि अभेदेन नानात्वेन च प्रतीतिस्तत्राह ज्ञानज्ञेयेति।

तन्तोर्भेदे पटो यद्वच्छून्य एव स्वरूपतः।
आत्मनोऽपि तथैवेदं भानमात्रं चराचरम् ॥२०॥
रज्जुर्यथा भ्रान्तदृष्ट्या सर्परूपा प्रकाशते।
आत्मा तथा मूढबुद्ध्या जगद्रूपः प्रकाशते ॥२१॥
आत्मन्येव जगत्सर्वं दृष्टिमात्रं सतत्त्वकम्।
उद्भूय स्थितिमास्थाय विनश्यति मुहुर्मुहुः॥२२
पूर्णानन्दाऽद्वये शुद्धे पाप्मदोषादिवर्जिते।
प्रतिविम्बमिवाभाति दृष्टिमात्रं जगत्त्रयम्।२३॥

तदुक्तं भगवता वशिष्ठेन

तस्मिंश्चिद्दर्पणे स्फारे समस्ता वस्तुदृष्टयः।

वस्तुतो विज्ञानस्वरूपमेव स्वाप्नं स्वप्नावस्थासम्बन्धि जगत् ज्ञानादिभेदेन च प्रतीयते तथा च स्वप्ने विज्ञानमेव ज्ञेयात्मना नानात्वेन च भाति यथा तथा विज्ञानमात्रमेव एतज्जगज्जाग्रत्कालीनं चराचरात्मना नानात्वेन भाति इति तज्ज्ञानं भेदेन च भानं न अनुपपन्नमित्यर्थः।

ननु किमिति विज्ञानमेव जगद्रूपेण भाति इति कल्प्यते विज्ञानाद्भेदेन स्वातन्त्र्येणैव जगद्भासतामिति तत्राह तन्तोर्भेदे इति। पटः स्वरूपतो वस्तुतः तन्तोर्भेदे शून्य एव इति अन्वयः। कारणसत्तैव कार्य्यसत्ता न स्वातन्त्र्येण कार्य्यं सत् तथा सति तन्त्वभावेऽपि पटः स्यात्। ननु पटं प्रति तन्तोः समवायिकारणत्वेन आश्रयत्वात् तदभावे पटो न तिष्ठति। ननु तन्तुसत्तैव पटसत्तेति चेत्? न हिमवद्विन्ध्ययोरिव भेदे कार्य्यकारणभावस्य अदर्शनात् तथा च

द्रुमास्ताः प्रतिबिम्बन्ति सरसीव तटद्रुमाः ॥
तथा—यस्य चित्तमयी लीला जगदेतच्चराचरम्।
तस्य विश्वात्मकत्वेऽपि खण्ड्यते नैकपिण्डता।

तन्तुपटयोरन्यतरावशेषे पटस्य तन्तुसापेक्षत्वात् तन्तोश्च पट-निरपेक्षत्वात् तन्तुरेव अवशिष्यत इति तन्तुभेदे पटः शून्यएव इत्यर्थः। इदं प्रतीतिसिद्धं चराचरं जगत् आत्मनो यदि स्वरूपतो भिन्नं तर्हि तथैव शून्यमेव तत्र हेतुः भानमात्रमिति। भानं प्रकाशश्चैतन्यं तद्रूपता वस्तुत आत्मन्येव पर्यवस्यतीति युक्तमात्मभेदे जगदसदिति। ननु चिदात्मनो जगद्रूपेण भाने विकारित्वप्रसङ्ग इति विवर्त्तवादाश्रयान्नेति सदृष्टान्तमाह रज्जुरिति। ननु अज्ञाता रज्जुः सर्पादिरूपेण भासत इति युज्यते तस्याः सर्पाधिष्ठानत्वात् नतु तद्वदात्मा अज्ञानवशादपि जगद्रूपेण भासत इति कल्पयितुं युक्तं तस्य निमित्वमात्रत्वेन जगदधिष्ठानत्वानुपपत्तेरिति तत्राह आत्मन्येवेति। जगदुत्पत्ति-स्थितिनिवृत्तिहेतुत्वादात्मनो न निमित्तमात्रता किन्तु उपा-दानतेति जगदधिष्ठानत्वमेव अज्ञातस्य आत्मनो युक्तमिति। ननु आत्मनो जगद्रूपत्वे अनात्मतापरिच्छिन्नजगद्रूपत्वात् तथा दुःखत्वापत्तिः दुःखरूपजगदात्मत्वात् तथा नानात्वञ्च आत्मनो-ऽनिष्टमापद्यते नानात्मकजगदात्मत्वात् अशुद्धिरपि आत्मनि दुर्निवारा तथाविधजगन्मयत्वात् तथाच धर्मादिमत्त्वप्रसक्तिश्च। नहि धर्माद्यनपेक्ष्यात्मा जगत् जनयति वैषम्यादिदोषप्रसङ्गात्। नच जीवादृष्टमुपजीव्यते न स्वादृष्टमिति वाच्यम्? जीव-ब्रह्मणोरभेदात् किञ्च यथा दुग्धं दध्याकारतामापन्नं दध्येव शिष्यते न दुग्धं तथा आत्मापि जगद्रूपतामापन्न

**तदेवं दृष्टिमात्रात्मकं जगत् आत्माश्रयविषयेण अज्ञानेन कृतमिति आत्मनोऽज्ञानविषयत्वं साधु**

इति जगदेव स्यात् न तु आत्मेत्येवं शङ्कितदोषान् पराचष्टे पूर्णेत्यादिना। अज्ञानवशादेव परिच्छिन्नाद्यात्मकजगद्रूपता आत्मनो न वस्तुत इति न एकोऽपि दोष इति यथा दर्पणं विम्बसन्निधौ प्रतिविम्बात्मना भासमानमपि प्रतिविम्बाकारताया मिथ्यात्वात् न स्वरूपं जहाति एवम् आत्मनोऽपि जगदाकारताया मिथ्यात्वात् जगद्रूपेण भासमानोऽपि आत्मा न स्वरूपं जहाति इत्यत्र दृष्टान्तमाह प्रतिविम्बमिति। उक्तेऽर्थे साक्षित्वेन आप्तवाक्ये आह उक्तमिति।

अत्र वदन्ति इत्यादिना ग्रन्थेन एकदेशिनिराकरणव्याजेन निरूपितं प्रमेयमुपसंहरति तदेवमिति। यतो ज्ञानज्ञेयविभागो न प्रामाणिकः तत् तस्मात् एवं सति दृष्टिदृश्ययोरन्यतरावशेषे प्राप्ते दृश्यस्य सापेक्षत्वात् दृष्टेश्च निरपेक्षत्वात् दृष्टिरेव अवशिष्यते न दृश्यमित्येवं सति इत्यर्थः। अतएव आह दृष्टिमात्रात्मकमिति। जगत्प्रतीतिमुपपादयितुं रज्जुर्यथेत्यादिना स्वाज्ञानादात्मा जगद्रूपः प्रकाशत इत्यादिना निरूपितमुपसंहरति आत्माश्रयेति। ननु एकदेशिनिराकरणव्याजेन चिदात्मनः स्वाश्रयविषयाज्ञानेन जगदात्मत्वं तद्रूपेण प्रतिभासनञ्च निरूपयता आत्मनो ज्ञानविषयत्वमङ्गीकृतमिति तादृगज्ञाननिवर्त्तकापरोक्षसाक्षात्कारजनकत्वेन उपनिषदात्मनि प्रामाण्यं त्वयैव उपपादितमिति सिद्धान्तिमतसिद्धिरित्याशङ्क्य नेत्याह। इति आत्मन इतिशब्दः पूर्वोक्तयुक्तिपरामर्शार्थः। ततश्चात्मनो ज्ञानविषयत्वं यत् कल्पितं तत् साधु काकूक्तिरियं तत् किं साधु? अपि तु नैव साधु यतो

विकल्पितम्। तथाच आत्मनि लौकिकवैदिक-प्रमाणासम्भवेन शशविषाणादिवदसत्त्वे प्राप्ते कुतस्तत् साक्षात्काराय शास्त्राभ्यर्थना कुतस्तरां युक्त्यपेक्षा इति सङ्क्षेपः।

एवं प्राप्ते अभिधीयते।

यत्तत्त्वं वेदगुप्तं परमसुखतमं नित्यमुक्तस्वभावं
सत्यं सूक्ष्मात् सुसूक्ष्मं महदिदममृतं मुक्तमात्रैक-
गम्यम्।

विकल्पितं ननु प्रमाणसिद्धं स्वयंप्रकाशमानस्य अज्ञानविषयत्वानुपपत्तेरुक्तत्वादिति। तथा न सिद्धान्तिमतसिद्धिरित्याह तथा चेति। वैदिकेऽर्थे युक्त्यनपेक्षितत्वात् तदपेक्षत्वे वेदस्य निरपेक्षत्वक्षतेरित्यादि संगृहीतुमाह इति संक्षेप इति।

आत्मासन्नप्रमाणत्वात् तत्साक्षात्कृतये पुमान्।
उपासीत श्रुतिं कस्माद्युक्तिं वापेक्षते कथम्॥

पूर्वपक्षमनूद्य सिद्धान्तमुपक्रमते एवं प्राप्ते इति ननु आत्मनि प्रमाणमस्ति न वा इत्यत्र आत्मशब्देन विशिष्टोऽव्याकृतजीवादिशब्दवाच्यो वा गृह्यते? किं वा शुद्ध चिदानन्दात्मकमिति? आद्ये प्रमाणप्रवृत्तावपि न दोषस्तस्य अस्वप्रकाशत्वेन भास्यत्वाविरोधात् प्रमाणाप्रवृत्तावपि न दोषस्तस्य अत्र अप्रतिपाद्यत्वात् तत्र प्रमाणप्रवृत्त्यप्रवृत्तिचिन्तावैयर्थ्यात् किं तर्हि अत्र प्रतिपाद्यमित्यपेक्षायां तत्र उक्तचतुष्टयविशिष्ट आत्मनि इत्यत्र उक्तं निरूपणीयं वस्तु श्लोकेन संगृह्णाति यत्तत्त्वमिति। यत्तत्त्व मिदमत्र कथ्यते इत्य-

यस्यांशि लेशमात्रं जगदिदमखिलं भ्रान्तिमात्रैकदेहं
प्रत्यग्ज्योतिः स्वरूपं शिवमिदमधुना कथ्यते
युक्तितोऽत्र ॥२४॥

न्वयः तत्त्वमनारोपितस्वरूपम् । ननु नैतत्तत्त्वं निरूपणमर्हति प्रमाणप्रवृत्तेरसत्वादिति तत्राह वेदगुप्तमिति । ननु नैतद्वे॰ गम्यं निष्प्रयोजनत्वात् इति तत्राह परमिति । अविद्या-तत्कार्य्यरहितत्वाच्च तत्त्वं पुरुषार्थ इत्याह नित्येति । ननु सप्र-योजनत्वात् वेदप्रमाणकत्वसम्भवेऽपि तस्य दृश्यत्वात् मिथ्यात्व-प्रसक्तिरिति नेत्याह सत्यमिति । तर्हि सिद्धत्वात् तस्य तत्र प्रमाणान्तरसंवादविसंवादाभ्यां भेदाप्रामाण्य मित्या-शङ्काह सूक्ष्मादिति । प्रमाणान्तरायोग्यत्वात् न तत्र वेदा-प्रामाण्य मित्यर्थः । तर्हि परिच्छिन्नत्वात् घटवदनात्म-तेति नेत्याह महदिति । निरुपचरितमहद्रूपत्वात् नानात्मत इत्यर्थः । ननु मुक्तस्वभावत्वे मुक्तितद्वतोर्भेदप्रतीतेर्न तत् मह-दिति तत्राह इदममृत मिति । इदं पूर्वोक्ततत्त्वम् अमृतं मुक्तिरित्यर्थः । तत्र विद्वत्प्रत्यक्षं प्रमाणयति मुक्तमात्रेति । एवं तत्पदलक्ष्यं निरूप्य वाच्यमाह शिवमिति । ईश्वराभिधान-मित्यर्थः । ईश्वरत्व मुपपादयति यस्यांशि इति । तर्हि जग-दुपादानत्वे विकारित्व मिति नेत्याह भ्रान्ति इति । भ्रान्तिः अज्ञानमेव देहः स्वरूपं यस्य तत् भ्रान्तिमात्रैकदेहम् अव्याकृतं हि जगदुपादानं न स्वरूपमक्षरं तेन अज्ञानप्राधान्येन जग-दुपादानत्वान्न विकारितेत्यर्थः यद्वा भ्रान्तिमात्रेति जगतः विशे-षणं तेन जगत् न वस्तुत आत्मोपादानं भ्रान्त्या आत्मनो जगत-स्तत्वे सत्यत्वप्रसक्तेः तर्हि कथमात्मनः कारणत्वव्यपदेशः जग-

किं तत्र प्रमाणाभावेन आत्मनः स्वरूपानुपपत्तिः प्रतीत्यनुपपत्तिर्वा ? नाद्यः आत्मस्वरूपस्य नित्यतया इतरनिरपेक्षत्वात् प्रमाणस्य स्वप्र-

दुपादानाज्ञानाधिष्ठानत्वादिति नात्मनो विकारितेति तटस्थत्वं तस्य व्यावर्त्तयति प्रत्यगिति। जड़त्वानात्मत्वादिना वाह्यत्वादिरूपमापाद्यमानजगदपेक्षया प्रतिकूलं वैपरीत्येन जड़विरुद्धत्वादिरूपेण अन्तरादिभावेन चाञ्चतीवोपलक्ष्यत इति प्रत्यक् प्रत्यक्त्वे हेतुमाह ज्योतिरिति। तत् कथनस्य अप्रस्तुतत्वं पराचष्टे अधुनेति। शिष्यजिज्ञासोत्तरकालमित्यर्थः। ननु किं भवत्कथनेन वेदेनैव तत्कथनादिति तत्राह युक्तित इति। अप्रतिपत्तिविप्रतिपत्तिनिरासेन वेदार्थप्रकटनाय योग्यतासम्पत्तये युक्तितो निरूप्यत इति अतएव आह वेदगुप्तमिति।

अथ पूर्वपक्षोपक्रमे आत्मशब्देन विशिष्ट ईश्वरो वा जीवो वा न विवक्षितः किं तर्हि शुद्धं चिदानन्दघनं प्रत्यक् ब्रह्मैक्यमात्मशब्देन विवक्षितं तर्हि तत्र न पूर्वोक्तदूषणावकाश इति वक्तुं सिद्धान्ती विकल्पयति किं तत्रेति। तत्र पूर्वोक्ते निरूपणीये सति उक्ते आत्मनि प्रमाणस्य अपेक्षा किमात्मनः स्वरूपलाभाय ? उत अहो आत्मप्रतीतये ? इति विकल्पार्थः। आद्यं दूषयति नाद्य इति। किमेतदात्मा कार्य्यत्ववादिनश्चोद्यं ततकार्य्यत्ववादिनो वा ? आद्यं पराचष्टे आत्मस्वरूपस्य नित्यतयेति। अकार्य्यतयेत्यर्थः। भावस्य हि नित्यकार्य्यत्वेन उपपद्यते इति आत्माकार्य्य इति न स्वरूपलाभाय आत्मा प्रमाणम् अपेक्षत इत्यर्थः। द्वितीयं प्रत्याचष्टे प्रमाणस्येति। प्रमाणस्य प्रमेयानुत्पादकत्वमसिद्धं प्रहत्यादेरपि प्रमेयत्वादिति तत्राह स्वेति। न

मेयानुत्पादकत्वाच्च। द्वितीये प्रमाणेऽपि तर्हि प्रमाणान्तरं वाच्यं तदभावे नरशृङ्गवदसत्त्वेन स्वप्रमेयसाधकत्वासम्भवात्।

तथा च प्रमाणे प्रमाणान्तरानुसरणे अनवस्थितेः प्रमाणेनैव वस्तुसिद्धिः इति अभिमानमा-

हि प्रवृत्तिज्ञानं प्रवृत्तिं प्रसूते ? किं तर्हि प्रवृत्तिविषयकेष्टसाधनताज्ञानमिति न व्यभिचारः। अथ आत्मा स्वप्रतीतये प्रमाणम् अपेक्षते इति द्वितीयविकल्पेऽपि इदं विचारणीयं, किं प्रतीतिमात्रं प्रमाणाधीनम् ? उत जड़स्य प्रतीतिः प्रमाणाधीना ? इति तत्र आद्येऽतिप्रसङ्गमाह प्रमाणेऽपि इत्यादिना। ननु विषयसाधनार्थं प्रमाणमपेक्षितं नतु प्रमाणे प्रमाणमपि अनुपयोगादिति तत्राह तदभावे इति। लब्धसत्ताकं हि प्रमाणं विषयं साधयतीति विना प्रमाणं तु न प्रमाणसत्तासत्वाभावे च प्रमाणस्य न स्वविषयसाधकत्वम् इत्यर्थः।

अपेक्षतां तर्हि प्रमाणं स्वसिद्धये प्रमाणान्तरं न अनवस्थाप्रसक्तेरिति इत्याह तथा चेति। कथं तर्हि प्रमाणेनैव वस्तुसिद्धिरिति महताम् उद्घोष इति सत्यमुद्घोष इति। परन्तु पूर्वोक्तानवस्थादोषात् भ्रममूलोऽयम् उद्घोष इत्याह इति अभिमानमात्रमिति। ननु जड़वस्तु स्वप्रतीतये प्रमाणम् अपेक्षतां नाम प्रमाणं पुनः स्वप्रकाशरूपत्वात् स्वयमेव सिद्ध्यति न मानान्तरमपेक्षते। तथाच नानवस्थेति द्वितीयमाशङ्कते अथेति। ननु स्वसाधकत्वं प्रमाणस्य स्वविषयप्रतीतिजनकत्वं नच एतत् युक्तं वृत्तिविरोधादिति चेत् ? न, स्वव्यवहारे परानपेक्षत्वस्यैव स्वसाधकशब्दार्थत्वात्

क्षम्। अथ प्रमाणं प्रमाणान्तरनिरपेक्षमेव स्वं स्वप्रमेयं च साधयति स्वप्रकाशस्वभावस्य तस्य स्वपरव्यवहारे प्रकाशान्तरनिरपेक्षत्वात् प्रदीपप्रकाशवत्। न हि सर्वस्य साधकं प्रमाणं स्वसिद्ध्यर्थमन्यदपेक्षत इति युक्तिमत्। हन्त तर्हि सर्वस्य प्रमाणप्रमेयभेदभिन्नस्य जगतः साधक आत्मा कथं स्वाधीनसिद्धिकेन प्रमाणेन सिद्धः स्यात् प्रमाणात् पूर्वमेव सिद्धत्वात्।

परानपेक्षत्वमेव प्रमाणस्य साधयति न हीति। प्रमाणं स्वसिद्धयै यदपेक्षते तत्र तावत् प्रमेयं तस्य अप्रत्यायकत्वात् प्रमाणं चेत् न अनवस्थितेरित्यर्थः। प्रमाणं प्रकाशकं सत् स्वपरसिद्धये न अन्यत् प्रमाणम् अपेक्षत इति न अनवस्थेति पूर्वपक्षिणा निरूपिते सिद्धान्ती आह हन्त तर्हीति। आत्मा कथं प्रमाणेन सिद्धः स्यात् इत्यन्वयः। ननु का अत्र अनुपपत्तिः तत्राह स्वाधीनेति। प्रमाणस्वरूपं तज्ज्ञानं च आत्माधीनम् आत्मसिद्धिश्च प्रमाणाधीना इति अन्योन्याश्रयप्रसक्तेर्न आत्मा प्रमाणात् सिद्ध्यतीति आत्माधीनसिद्धिकत्वं प्रमाणस्य कैमुत्येन साधयति सर्वस्येति। स्वाज्ञानवशात् जगदुत्पाद्य भासयतीति जगत्साधक आत्मा इत्यर्थः। किञ्च प्रमाणादात्मा सिद्ध्यतीति कोऽर्थः? किम् उत्पद्यते? उत ज्ञायते? न आद्य इत्यत्र हेतुमाह प्रमाणादिति। पूर्वसिद्धत्वञ्च आत्मनः प्रमाणं प्रति कारणत्वादिति। ननु प्रमाणं प्रति आत्मा कारणं तत् किं प्रमातृत्वेन वा करणत्वेन वा विषयत्वेन वा? नाद्यः, बुद्धेरेव प्रमातृत्वात् ह्रीर्धीर्भीः इत्येतत् सर्वं मन एवेति श्रुतेः।

अन्यथा असिद्धप्रमातृकं प्रमाणमेवात्मानं न लभेत कथं वा सर्वस्य प्रमातारमात्मानं विषयीकुर्य्यात् प्रमाणं कर्मकर्तृविरोधप्रसङ्गात्

न अपि इतरो अनङ्गीकृतेरिति तत्राह अन्यथा इति। आत्मानं स्वरूपं तत्र हेतुः असिद्धप्रमातृकमिति। नहि चैतन्यतादात्म्यमनापन्नाया बुद्धेः प्रमातृत्वं युज्यते जड़त्वात् अन्यथा अतिप्रसङ्गात् आत्मनः प्रमातृत्वे वृत्तिमद्बुद्धेः उपाधित्वात् बुद्धिः प्रमात्री इति लोके व्यवहार इति आत्मा प्रमाता प्रमाणानां कारणमिति तदभावे प्रमाणं स्वरूपमेव न लभेत् कारणाभावे कार्य्यस्य अपि अभावादित्यर्थः। प्रमाणात् आत्मा उत्पद्यत इति न ब्रूमः किं तर्हि ज्ञायते न इत्याह कथं वेति। आत्मनः प्रमाणात् ज्ञेयत्वे ज्ञाता किं स एव तदन्यो वा ? नाद्य इत्याह सर्वस्येति। प्रमेयमात्रं प्रति आत्मनो ज्ञात्रैकरूपत्वात् ज्ञेयत्वं न युक्तमित्यर्थः। प्रमाणं प्रति आत्मनो ज्ञातृत्वात् ज्ञेयत्वं न युक्तमिति भावः। प्रमाणादिप्रमातापि तद्विषयः किं न स्यादिति न इत्याह कर्मेति। ज्ञानं हि क्रिया कर्त्तारं कर्म च अपेक्ष्य भवति। तत्र कर्त्ता क्रियासाधनत्वात् क्रियां प्रति गुणत्वं प्रतिपद्यते। कर्म तु स्वरूपतो वा धर्मतो वा क्रियासाध्यत्वात् क्रियां प्रति प्रधानं ततश्चात्मनः स्वज्ञानं प्रति एकदैव उभयरूपत्वं ज्ञानं प्रति आश्रयत्वेन साधनत्वात् प्रमेयत्वेन प्रधानत्वादिति विरुद्धरूपत्वप्रसक्तेर्न प्रमाणमात्मानं विषयीकर्त्तुमर्हति इत्यर्थः। द्वितीयं विकल्पं दूषयति। तदन्यस्य चेति। विषयादात्मनो अन्यत् प्रमातृ भवत् जड़म् अजडं वा ? नाद्यः तस्य अनात्मत्वेन अप्रमातृत्वात् इत्याह अनात्मत्वेनेति। न

तदन्यस्य च सर्वस्य अनात्मत्वेन अप्रमातृत्वात्। तथा च श्रुतिः विज्ञातारमरे केन विजानीयात् इति। तथा च प्रमातुरात्मनः स्वत एव सिद्ध-त्वात् प्रमाणाभावात् न असत्त्वप्राप्तिः। किञ्चे-दमात्मनोऽसत्त्वमापाद्यमानं प्रमाणसिद्धम-सिद्धस्वभावं स्वतो वा सिद्धम्। आद्ये अस-त्त्वग्राहकप्रमाणस्य प्रतियोगिविषयत्वनियमेन

द्वितीयस्तस्यैव आत्मत्वप्रसक्तेर्ज्ञेयस्य घटवदनात्मत्वप्रसक्तेश्चेति विज्ञातुः प्रमाणागोचरत्वे मैत्रेयीब्राह्मणशेषमुदाहरति तथा चेति। केन करणेन को वा अन्यो जानीयात् तत्त्वावस्थायाम् आत्मव्यतिरिक्तस्य सर्वस्यैव अभावादित्यर्थः। प्रमाणव्यतिरेकेण आत्मसिद्धौ फलितमाह तथा चेति। किञ्च न चेदस्ति प्रमाणम् आत्मनि तर्हि तस्य असत्वापत्तिरिति वदता आत्मनि प्रमाणासत्वेन असत्वमापाद्यत इति प्रतिभाति तदयुक्तमिति निरूपयितुं सिद्धान्ती विकल्पयति किञ्चेदमिति। प्रमाणासत्वेन आपादकेन आत्मनि आपाद्यमानमसत्वं ज्ञातं वा न वा आद्ये किं प्रमाणात् ज्ञातं भ्रमाद्वा स्वतो वा? इति विकल्पार्थः। प्रथमे प्रथममनूद्य दूषयति आद्य इति। असत्वग्राहकं प्रमाणमसत्वमात्रं गृह्णाति आत्मप्रतियोगिकमसत्वं वा? नाद्यः तस्य प्रतियोगिनिरूप्यत्वेन प्रतियोगिनम् अविषयीकृत्य तन्मात्रस्य प्रमाणेन विषयीकर्त्तुम् अशक्यत्वात्। अथ प्रतियोगिनं विषयीकृत्य प्रमाणमसत्वं प्रत्याययति तर्हि दूषयति असत्वग्राहकेति। आत्मनः प्रमाण-विषयत्वेन आपादकाभावात् न आपाद्यमसत्वं सम्भवति नहि

आत्मनोऽपि प्रामाणसिद्धत्वेन असत्त्वानुपपत्तिः। न द्वितीयः असिद्धस्य आपादनानुपपत्तेः। न हि बुद्धौ अनारूढ़स्वभावमापादयितुं शक्यम्। तृतीये तु आत्मैव स्वतःसिद्धो ऽस्तु

वह्निमति वह्न्यभावेन निर्धूमतापादयितुं शक्येत्यर्थः। ननु असत्वस्य प्रतियोगिसत्वं न आत्मेति कथं तस्य प्रमाणविषयतेति मैवं सत्वं प्रतियोगि भवत्पदार्थस्य स्वरूपं धर्मो वा ? आद्येऽपि आत्मात्मकं पदार्थान्तरात्मकं वा ? आद्ये उत्तरमुक्तम्। आत्मनः प्रामाणिकत्वात् न असत्वमिति द्वितीये तु इष्टासिद्धिः पदार्थान्तरस्यैव असत्वं सिद्ध्येत् न आत्मन इति सत्वं धर्मश्चेत् तर्हि आत्मनो वा अन्यस्य वा आद्ये आत्मसत्वं प्रतियोगि तस्य प्रमाणसिद्धत्वे कथम् आत्मनि असत्वमापादनम्। अन्यधर्मश्चेत् तर्हि तस्यैव असत्वं न आत्मन इति कथमात्मनो सत्वम् आपादनीयमिति। अज्ञातरूपासिद्धस्वभावपक्षं दूषयति न द्वितीय इति।

असिद्धस्य आपादनं प्रसञ्जनं कुतो न इत्यपेक्षायामाह न हीति। परं प्रति शब्देन अनिष्टप्रसञ्जनम् आपादनमत्र आपादनशब्दार्थः। नच अर्थमज्ञात्वा शब्दरचनमिति बुद्धौ अनारूढ़म् आपादयितुमशक्यम् इत्यर्थः। ज्ञातं प्रमाणात् भ्रमाद्वा स्वतो वा ? इत्यत्र आद्यो निराकृतः द्वितीयोऽपि न सम्भवति असत्वस्य भ्रमसिद्धत्वे भ्रमविषयस्य बाध्यत्वेन आत्मनि सत्वमेव वास्तवं स्यात्। तृतीयं दूषयति तृतीये तु इति। असत्वमात्रं स्वतःसिद्धम् आत्मविशेषितं वा ? नाद्यः निर्विशेषिता सत्वानिरूपणात् द्वितीये तु आत्मनोऽपि स्वतःसिद्धत्वं विशि-

असत्त्वस्य च स्वतःसिद्ध्यनुपपत्तेः। अन्यथा आत्मनो नामान्तरकरणप्रसङ्गात्।

किञ्च आत्मनोऽसत्त्वं कि मात्मना ज्ञायते अनात्मना वा? नान्त्यः अनात्मनो ज्ञातृत्वाभावात्। नाद्यः व्याघातात्।

तथा हि किमात्मा स्वसत्ताकाले स्वासत्तां जानाति स्वासत्ताकाले वा? आद्ये स्वसत्ता-

ष्टस्य स्वतःसिद्धत्वे विशेषणस्य अपि तथात्वात् ततश्च द्वयोरपि स्वतःसिद्धत्वे प्राप्ते आह आत्मैव इति। सापेक्षनिरपेक्षयोर्मध्ये निरपेक्षस्यैव स्वतःसिद्धत्वं युज्यते न प्रतियोग्यधीनासत्वस्य सापेक्षत्वव्याघातापत्तेः इत्यर्थः। अत्रैव हेत्वन्तरमाह असत्वस्य चेति। चकारो भिन्नक्रमः पञ्चम्यन्तानुपपत्तिपदेन सम्बध्यते। अयमर्थः असत्वं जड़मजड़ं वा? नाद्यः जड़त्वादेव घटवत् स्वतःसिद्ध्ययोगादिति यदि अजड़ं तदा दूषयति अन्यथेति। अजड़स्य स्वतःसिद्धस्यैव आत्मत्वादित्यर्थः। तथाच प्रमाणासत्वेन आत्मनि असत्वापादनं न अनिष्टमिति भावः।

सिंहावलोकनन्यायेन प्रमाणादसत्वस्य सिद्धिपक्षे दोषान्तरमाह किञ्चेति। आद्ये बहुवक्तव्यत्वात् तमुपेक्ष्य अन्त्यं प्रथमतो दूषयति नान्त्य इति। तत्र हेतुः अनात्मन इति। ज्ञेयैकरूपत्वात् तस्य इत्यर्थः। आद्यं दूषयति नाद्य इति। व्याघातादिति।

प्रतिज्ञातं हेतु मुपपादयति तथाहि इति। आद्य इति परस्परविरोधेन प्रकारान्तरस्थितिः इति न्यायात् इत्यर्थः।

काले स्वासत्ता कुतः? तथा च किं जानीयात् विषयस्यैव अभावात्। द्वितीये कथं जानीयात् स्वस्यैव अभावात्। स्वसत्ताकाले आत्मैव कालान्तरभाविनीं स्वासत्तां जानाति इति चेत्? तर्हि सन्नेव आत्मा ऽनित्यः परं तच्च कृतहान्यकृताभ्यागमप्रसङ्गेन परिहृतम्। किञ्च आत्मनोऽसत्त्ववादी स्वात्मानं निराकरोति परात्मानं वा? आद्ये निराकर्त्तुरसत्त्वान्निराकार्य्य एव आत्मा परमार्थः सन्। द्वितीये निरा-

भवतु असती स्वसत्ताकाले स्वासत्ता तथापि सा ज्ञायतामिति नेत्याह तथा चेति। आत्मा स्वासत्ताकाले स्वासत्तां जानाति इति द्वितीयमनूद्य तत् दूषयति द्वितीय इति। स्वस्य ज्ञातुरात्मन इत्यर्थः। ननु आत्मा स्वसत्ताकाले एव स्वासत्तां जानाति न चैवं व्याघातः तत्कालीनासत्ताया अज्ञानात् किं कालीनां तर्हि तां वेदभाविनीम् इति शङ्कते स्वसत्ताकाल इति। तर्हि ना निष्टापत्तिरित्याह तर्हि इति। ननु कथं सन्नेवात्मा भाविनो ऽसत्वस्य अनुभवादिति तत्राह अनित्य इति। प्रमाणासत्वेन अत्यन्तासत्वमापाद्यमनित्यत्वं वा? नाद्यः विनाशात् प्राक्सत्वात् न द्वितीय इत्याह तच्चेति। अप्यर्थे चः तदपि नित्यत्वमात्मनः परिहृतं अन्त्ये कृतस्य हानिः स्यादकृताभ्यागमस्तथेत्यत्र इत्यर्थः किं चेति स्पष्टार्थः। आद्ये आत्मनो ऽसत्ववादी स्वात्मानं निराकरोति इति पक्षे द्वितीय इति परात्मानं निराकरोति इति पक्षे स्थित इति पदादिति शब्दं हेत्वर्थं मध्याहृत्य यतः स्थित इत्यतो

कर्त्ता परमार्थ एव स्थितः कुतस्तेनात्मनो ऽसत्त्वम्। तथा च श्रुतिः 'असन्नेव स भवति असद्ब्रह्मेति वेद चेत् अस्ति ब्रह्मेति चेद्वेद सन्तमेनं ततो विदु"रिति।

किञ्च प्रमाणं सति विषये प्रवर्त्तते असति वा? असति चेत्? तर्हि शशविषाणमपि

हेतोः कुत आत्मनोऽसत्वमित्यर्थः। ननु आत्मान्तरनिराकर्त्तुरन्यो निराकर्त्तेति कथं निराकर्त्ता परमार्थ एव स्थित इति चेत्? सत्यं तृतीयस्यापि निराकर्त्तुः कोऽपि निराकर्त्ता अस्ति न वा? आद्ये अनवस्था द्वितीये यत्रैव विश्रान्तिस्तस्यैव परमार्थतः स्थितत्वात् कुतः आत्मनो ऽसत्त्वमित्युक्तमावर्त्तते इति उक्ते अर्थे संवादाय श्रौतमन्त्र मुदाहरति तथा चेति। वेदितृत्वं तावत् चेतनधर्मः घटादेरचेतनस्य अप्रमातृत्वात् ब्रह्मापि चेतनं विज्ञानघनश्रुतेः तच्च विज्ञातुर्न भिद्यते अभेदश्रुतेः। एवं सति वेदिता ब्रह्मात्मानमसत् वेद चेद्यदि तर्हि असन् एव स भवति आत्मनो निराकृतत्वात् इत्यर्थः। निराकर्त्ता यदि स्वात्मानं निराकरोति सोऽसन्निति हेतुत्वेन उपन्यस्तं निराकर्त्तुरसत्वं संवादितं यदि परात्मानं निराकुर्य्यादिति पक्षे निराकर्त्तुः सत्वं संवादयति। अस्ति ब्रह्मेति ब्रह्मात्मा अस्ति इति यदि वेद जानाति तर्हि सद्रूपब्रह्मात्मानमेनमृषयः सन्तं विदुरिति स परमार्थतः सत् स्यादित्यर्थः। किं च आत्मनि प्रमाणासत्वे असत्त्वापत्तिं वदता प्रमाणसत्वे एव वस्तुसत्तेति वक्तव्यं तत्र प्रमाणे एव सति वस्तुसत्तेति कोऽर्थः। किं सति प्रमाणे वस्तुसत्ता जायते? उत ज्ञायते? तत्राद्यं निराकर्त्तुं विकल्पयति किं च

साधयेत् असत्त्वाविशेषादसत् साधनसमर्थत्वाच्च प्रमाणानाम्। सति चेत्? न तर्हि प्रमाणाधीना वस्तुसत्ता प्रमाणप्रवृत्तेः पूर्वमेव प्रमेयसत्ताभ्युपगमात्। अन्यथा सति प्रमाणं प्रवर्त्तत इति स्ववचनव्याकोपः।

सत एव वस्तुनो भानं प्रमाणाधीनमिति चेत्? भवतु अभानस्वरूपे अनात्मनि अचेतने

प्रमाणमिति। अन्त्यमल्पत्वादादौ दूषयति असति चेत् इति। अत्र प्रमाणं प्रवर्त्तमानं सत्तामुत्पादयति इत्यर्थः। इमं पक्षमतिप्रसङ्गेन दूषयति शशविषाणमपि इति। तत्र हेतुः असदिति। साधनमुत्पादनम् एवमन्त्यं पक्षं परास्कृत्य आद्यं दूषयितुमनुवदति सति चेदिति। तर्हि प्रमाणं वस्तुसत्तोपपादकमिति पक्षं दूषयति न तर्हीति। प्रवर्त्ततां प्रमाणं सति तावता कथं न प्रमाणाधीना वस्तुसत्तेति तत्राह प्रमाणप्रवृत्तेरिति। यदपेक्षायाः पूर्वं यदस्ति तत्तस्य कार्य्यं न भवति नियतपश्चाद्भाविन एव कार्य्यत्वात् इत्यर्थः। तर्हि प्रमाणप्रवृत्तेरूर्द्धमेव वस्तुसत्ता जायतामिति न प्रतिज्ञाविरोधादित्याह अन्यथेति।

प्रमाणे सति सत् प्रमेयं ज्ञायत इति पक्षमुत्थापयति सत एवेति। वस्तुसत्ताया ज्ञापकं प्रमाणमित्यर्थः। अयं भावः प्रमाणाभावे वस्तुसत्वाभावमापादयता प्रमाणसत्वं वस्तुसत्ताया व्यापकं वक्तव्यं व्यापकाभावस्यैव व्याप्याभावं प्रति आपादकत्वात् तथा च सत एव वस्तुनो भानमित्यत्र इदं सिद्ध्यति।

तथा। स्वयमेव भानस्वरूपे आत्मनि कथमेवं भविष्यति। तथा च श्रुतिः, "तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाति" इति। किञ्च आत्मनि किं प्रमाणमित्यभिनिविशमानं प्रति सर्वाणि प्रमाणानि इति एव

विमत आत्मा प्रमाणगम्यः सत्वात् घटवदिति तदेतदनुमानं जड़त्वेन उपाधिना दूषयति भवतु इति। अनात्मनि घटादौ दृष्टान्ते प्रमाणाधीनभानं भवतु इति योजना। एवं घटादौ साध्यसत्तामुक्तोपाधिसत्तामप्याह अचेतन इति। जड़े इत्यर्थः। घटादौ जड़त्वमुपपादयितुं विशिनष्टि अभानस्वरूप इति। जड़त्वोपाधेः पक्षे साधनाव्याप्तिमाह स्वयमेवेति। एवं प्रमाणाधीनभानं हि स्वव्यवहाराय मृग्यते स्वरूपात्मकभानेनैव स्वव्यवहारोपपत्तौ किं प्रमाणाधीनभानेन निष्प्रयोजनत्वादितिभावः। ननु भानस्वरूपत्वमजड़त्वे प्रयोजकं नचात्माभानस्वरूपः भानाश्रयत्वात् तथा च जड़त्वमुपाधिः कथं साधनाव्यापक इत्याशङ्क्य आत्मनो भानस्वरूपत्वे प्रमाणं श्रुतिमाह तथाच इति। तं प्रसिद्धमात्मानं भान्तं भासमानमनुभाति सर्वमनात्मजातम्। ननु यथा गच्छन्तमनुगच्छति इत्यत्रोभयोरपि गमनं स्वगतमेवं भान्तमनुभाति इत्यत्रापि भानमुभयगतं वास्तवं किं न स्यादिति तत्राह तस्य भासेति। तस्य आत्मनः स्वरूपभूतया भासा इत्यर्थः। तथा च नानात्मा स्वगतभासा भास्यः किन्तु आत्मभासा इति आत्मभानरूप इत्युपाधिः साधनाव्यापक एव इत्यर्थः। एतावता प्रमाणासत्वे आत्मनि असत्त्वापत्तिरिति

उत्तरम् अज्ञातस्यैव प्रमाणविषयत्वात् आत्मन एव अज्ञातत्वात् जड़स्य च स्वत एव आवृतस्वभावस्य अज्ञानलक्षणावरणान्तरकल्पनाप्रयोजन-

परिहृतं सम्प्रति श्रुतेस्तत्र प्रामाण्य मुपपादयितुं कैमुतिकन्यायेन सर्वप्रमाणविषयत्वमात्मन आह।

किञ्चेति। प्रमाणानामात्ममात्रविषयत्वे हेतुमाह अज्ञातस्येति। ननु प्रमाणविषयत्वे अज्ञातत्वमप्रयोजकं ज्ञातस्यापि धारावाहिकप्रमाणविषयत्वदर्शनादिति शङ्कानिराकरणाय एवकारः। ज्ञाते वस्तुनि प्रमाणं किं वस्तुप्रकाशनाय किं वा तद्व्यवहाराय ? न उभयथापि आद्यप्रमाणेनैव उभयस्यापि निर्वाहात्। अन्यथा द्वितीयेऽपि तत् कथं स्यात् न चैवं धारावाहिकबुद्धेः अप्रामाण्यम् उत्तरोत्तरक्षणवैशिष्ट्यस्य तत्र अधिकस्य भानात्। नच कालस्य अतीन्द्रियत्वात् नच प्रत्यक्षज्ञानविषयत्वमिति वाच्यं तस्य सर्वप्रत्ययवेद्यत्वात् कथमन्यथा इदानीं गन्ध इत्यादिप्रत्यक्षप्रतीतिरिति। ननु अज्ञातो घट इति प्रतीतेस्तस्यापि अज्ञातत्वात् कथमात्मैव प्रमाणविषय इति न इत्याह आत्मन एवेति आत्मा तावत् परमप्रेमास्पदत्वात सुखात्मा तच्च सुखं नित्यं स्वप्रकाशञ्च परामर्शबलेन सुषुप्तौ सर्वेन्द्रियविषयाद्युपरमेऽपि भासमानत्वात् ततश्च जाग्रदवस्थायामपि तस्यास्ति भाति इति प्रतीतौ प्राप्तायामपि योऽयं नास्ति न भाति इति अन्यथा व्यवहारः सोऽधिष्ठानाज्ञानजन्य इति शुक्त्यज्ञानजन्यरजतव्यवहारे दृष्टत्वात् कल्प्यते। अधिष्ठानं च आत्मेति विपरीतव्यवहारयोग्यत्वलक्षणम् आवरणमज्ञानजन्यम् आत्मनि कल्प्यत इत्यात्माऽज्ञानविषयत्वात् अज्ञात

शून्यतया अज्ञानाविषयत्वेन प्रमाणाविषयत्वात् प्रमाणाधीनाऽविद्यानिवृत्तिविशिष्टात्मस्वरूपचैतन्येनैव जड़स्य सर्वस्य प्रतीत्युपपत्तेः।

इति एवकार व्यावर्त्यमाह जड़स्य चेति। अज्ञानाविषयत्वं तावत् जड़स्य स्वीकर्त्तव्यं कथं यो हि यत्र अतिशयमाधत्ते स तस्य विषयः अज्ञानञ्च नानात्मनि अतिशयमाधत्ते निष्प्रयोजनत्वादित्याह अज्ञानलक्षणेति। ननु किमिति आवरणं निष्प्रयोजनं विक्षेपप्रयोजनत्वात् तस्येति तत्राह अन्तरेति। विक्षेपार्थम् आवरणस्य विद्यमानत्वात् अज्ञानजन्यम् आवरणं निष्प्रयोजनं वृथा इत्यर्थः। किं प्रयुक्तं तर्हि आवरणं जड़े इति तत्राह स्वत एवेति। अनात्मत्वप्रयुक्तम् आवरणमिति तेन जड़स्य प्रमाणागोचरत्वादात्मैव प्रमाणगोचर इति सिद्धम्। नच तर्हि कथमज्ञातो घट इति प्रतीतिः अज्ञानेन सह साक्षिणि घटस्य अध्यासादिति। ननु जड़ं जड़त्वादेव न स्वतो भाति न अपि प्रमाणात्तस्य तदविषयत्वात् ततः कथं जड़स्य अनात्मनो भानमिति तत्राह प्रमाणाधीनमिति। यद्यपि जड़ं न स्वतः स्फुरति जडत्वादेव नापि प्रमाणात् तस्य अज्ञानाविषयत्वात् तथापि आत्मस्वरूपचैतन्येन जडं भाति नच आत्मस्वरूपचैतन्यस्य स्वप्रकाशत्वात् तत्संसर्गिजड़ं सर्वदैव भासेतेति वाच्यं साक्षिरूपस्य आत्मनोऽविद्यावृत्तत्वेन प्रपञ्चाभानोपपत्तेः तर्हि कदापि प्रपञ्चो न भायादिति चेत् तत्राह प्रमाणाधीनेति। घटावच्छिन्नचिदात्मा घटेन्द्रियसन्निकर्षसमुद्भूतघटाकारान्तःकरणवृत्तिनिरस्ताविद्यो घटावच्छिन्नवृत्तौ प्रतिबिम्बितो घटं भासयतीति घटप्रतीत्युपपत्तिरेवं पटादिप्रती-

तथा च सर्वप्रमाणसिद्धस्य आत्मनः प्रमाणा-भावात् असत्त्वमिति साहसमात्रम् । कथं तर्हि औपनिषदत्वम् आत्मनः सर्वप्रमाणविषयस्य

तिरपि ऊह्या । ननु एवं घटस्य प्रमाणविषयत्वापत्तिरिति चेत् ? न, प्रमाणनिवर्त्त्याज्ञानविषयस्य प्रमाणविषयत्वात् तादृक्तञ्च घटावच्छिन्नचिदात्मन एवेति चिदात्मैव सर्वत्र प्रमाणविषयः घटस्तु अनावृत्तस्वावच्छिन्नचिदात्मना युक्तो भातीति कथं तस्य प्रमाणविषयत्वमिति तथाच आत्मनि प्रमाणाभावेन असत्वा-पत्तिचोद्यं परिहृतमिति ।

चिदात्मनि सर्वप्रमाणविषयत्वनिरूपणस्य फलमाह तथा चेति । आपादकप्रमाणासत्वस्य अभावान्नापाद्या सत्वस्य आत्मनि सम्भवोऽस्ति इत्यर्थः । आत्मनः सर्वप्रमाणविषयत्वे श्रौतौपनिषदत्वविशेषणव्याहतिं शङ्कते कथमिति । ननु प्रमेयो घट इतिवद्विशेषणोपपत्तिरिति न इत्याह सर्वेति । सर्वं विशेषणं सावधारणमिति न्यायादुपरञ्जकत्वमात्रकल्प-नायां फललाभो न अध्ययनविधिविरोधादन्यप्रमाणव्याव-र्त्तकत्वमेव आत्मनि औपनिषदत्वविशेषणस्य वक्तव्यं तच्च सर्व-प्रमाणविषयस्य आत्मनो न सम्भवति इति औपनिष-दत्वविशेषणमात्मनः कथं युज्यते ? अपि तु न कथमपि इत्यर्थः । तदेतत् दूषयति परिपूर्णेति । यद्यपि प्रपञ्चावच्छेदेन आत्मनः सर्वप्रमाणविषयत्वं तथापि परिपूर्णादिरूपेण मानान्तरायोग्यत्वात्तेन रूपेण आत्मनः श्रुतिमात्रगम्यत्वात् औपनिषदत्वविशेषणं न विरुध्यते इत्यर्थः । परितः सर्वतः पूर्णं न क्वचिदपि न्यूनं तथाच निरवग्रहं महदिति । ननु

उपनिषन्मात्रगम्यत्वाभावात् इति चेत्? न, परिपूर्णसच्चिदानन्दप्रत्यग्रूपेण मानान्तराविषयत्वात् औपनिषदत्वमिति वदामः। ननु स्वयम्प्रकाशस्य अज्ञानविषयत्वानुपपत्तिः इत्युक्तम्।

सत्यं वस्तुतस्तथैव। तथापि यथा मध्य-

तादृशस्य औपनिषदत्वे दृश्यत्वात् मिथ्यात्वमिति न इत्याह सदिति। श्रुतिभास्यत्वासम्प्रतिपत्तेर्न मिथ्या इत्यर्थः। कथं तर्हि तद्भासत इति स्वप्रकाशचिदात्मकत्वादिति आह चिदिति। ननु परिपूर्णस्य सर्वात्मत्वात् दुःखात्मकत्वमपि वक्तव्यं तथाच कथं तदुपनिषद्विषयोऽपुरुषार्थत्वादिति न इत्याह आनन्देति। नहि परिपूर्णविशेषणेन आत्मानमुद्दिश्य सर्वत्वं विधीयते येन दुःखात्मकता आत्मनि स्यात् किन्तु सर्वोद्देशेन आत्मत्वं ततश्च सर्वस्य आत्मैव रूपं न अन्यद्रूपमस्तीति दुःखत्वादिरूपस्य मिथ्यात्वेन बाधादानन्दो ब्रह्मेति श्रुतेः आत्मानन्दमय इति पुरुषार्थत्वात् उक्तम् औपनिषदत्वमिति। तथापि न पूर्णता परमात्मनो जीवाद्भेदेन परिच्छिन्नत्वादिति तत्राह प्रत्यग्रूपेण इति। प्रत्यक् भिन्नस्य अब्रह्मत्वात् तद्भेदः कल्पित इति प्रत्यक् ब्रह्मणोरैक्यमुपनिषन्मात्रविषय इत्यर्थः। ननु उपनिषज्जन्यज्ञाननिवर्त्याज्ञानविषयत्वम् उपनिषद्विषयत्वं नच स्वप्रकाशचिदात्मनि अज्ञानविषयत्वं सम्भवति भासमानत्वाभासमानत्वयोरेकदा एकत्र विरोधादिति पूर्वपक्षोक्तं दोषम् उद्धृत्य अनुवदति ननु इति।

पूर्वपक्षम् अङ्गीकरोति सत्यमिति। तर्हि कथम् अज्ञानविषयत्वम् इत्याशङ्क्य आनन्दादिरूपेण अज्ञानविषयत्वं न चिद्रू-

न्दिनवर्तिनि अपि सवितरि स्वयम्प्रकाशे दिवान्धाः पेचकादयः तमसा आवृतोऽयं सवितेति कल्पयन्ति तथा अत्यन्तमूढ़बुद्धयोऽज्ञानेन आवृतोऽयमात्मेति कल्पयन्ति। अत एवम्भूतस्य आत्माज्ञानस्य कल्पितस्य पूर्वमेव आत्ममाहात्म्यादेव वस्तुतो निवृत्तस्य असतो निवृत्तये

पेण अन्यथा ज्ञानस्य अपि असिद्धिप्रसङ्गादिति परिहारस्य पूर्वोक्तत्वेऽपि प्रकारान्तरेण परिहरति वस्तुत इति।

अयमर्थः स्वप्रकाशे अज्ञानमुक्तदोषात् वस्तुतो न अस्ति इति उच्यते उत भ्रमादपि नास्ति इति यदि आद्य स्तत्राह वस्तुत इति। इष्टापत्तेर्न इदमनिष्टम् इत्यर्थः। द्वितीयं दूषयति तथापि इति। तमस आदित्ये अत्यन्तासम्भवप्रदर्शनाय स्वयम्प्रकाश इति विशेषणकल्पने हेतुः दिवान्धा इति यथादोषवशात् अविद्यमानमपि रजतं शुक्तौ कल्पयन्ति तथेदमपि नच अन्धत्वदोषात् अदर्शनमेव उलूकानां न तु आदित्येऽपि तमसः कल्पनमिति वाच्यं ? तमोमयोऽयं सवितेति तत्प्रतीतिविरोधात् यथाहुः घनच्छन्नदृष्टिर्घनच्छन्नम् अर्कमिति मूढ़ा अज्ञा इत्यर्थः। नच आत्मनः अज्ञानावृतत्वकल्पने अज्ञानस्य एव दोषत्वे आत्माश्रयापत्तिरिति वाच्यम् ? आवरणस्य अज्ञानकार्य्यत्वेन अज्ञानजन्यत्वेऽपि आत्माश्रयाभावात्। अथ वा आवरणम् अज्ञानमेव तथाच आत्माश्रय इति एवमपि न आत्माश्रयः समवायवद्भेदवदुपपत्तेः। ननु आत्मनि वेदान्तप्रवृत्तिः भानाय अज्ञाननिवृत्तये वा ? नाद्यः मिथ्यात्वापत्तेः न द्वितीयः तस्य अनादित्वेन आत्मवत् निवृत्त्यनर्हत्वादिति तत्राह अत इति।

सर्वे वेदान्ताः प्रवृत्ताः स्वयम्प्रकाशस्वरूपे आत्मनि अज्ञाननिवृत्तिव्यतिरेकेण फलान्तराऽनिरूपणात् तदाकारवृत्त्युत्पादनेनैव वेदान्तानां तद्विषयत्वोपपत्तेः। न च आत्मनः स्वयम्प्रकाशत्वे विप्रतिपत्तिः।

एवम्भूतस्य इत्यस्य व्याख्या कल्पितस्येति। अथवा आवरणरूपस्य तस्य ज्ञाननिवृत्तियोग्यतासम्पादनाय कल्पितस्येति विशेषणं कल्पितत्वं सम्पादयति आत्मेति। निवृत्तस्य असत इति यथाशुक्तिस्वरूपपर्य्यालोचनया रजतं तत्र नास्ति तथा आत्मस्वरूपपर्य्यालोचनया ज्ञानं तत्र असदित्यर्थः। नानादित्वमात्रं निवृत्त्यनर्हत्वप्रयोजकं प्रागभावे व्यभिचारात् भावत्वे सति अनादित्वं नित्यत्वे प्रयोजकमिति चेत्? न भावत्वानङ्गीकारात् असद्विलक्षणवत् सद्विलक्षणस्य अपि स्वीकारात्। अतएव अज्ञानं विशिनष्टि कल्पितस्येति। ननु किमिति एवं कल्पते प्रमेयप्रकाशस्यैव प्रमाणफलत्वादिति तत्राह स्वयम्प्रकाशरूप इति। आत्मप्रकाशस्य प्रमाणव्यतिरेकेऽपि स्वप्रकाशमाहात्म्यादेव सिद्धत्वात् तन्निमित्तप्रमाणादानवैयर्थ्यात् अज्ञाननिवृत्त्यर्थमेव प्रमाणोपादानम् इत्येव युज्यत इत्यर्थः। ननु आत्मनिष्ठाज्ञाननिवर्त्तकवेदान्तानां न आत्मविषयता मन्निष्ठघटादिनिवर्त्तकपाषाणादेरपि मद्विषयत्वापत्तेरिति तत्राह तदाकारेति। आत्माकारवृत्त्युत्पादकत्वेन वेदान्तानाम् आत्मविषयत्वम् इत्यर्थः। ननु स्वयम्प्रकाशे प्रमाणफलत्यम् अज्ञाननिवृत्तिं विना न इत्युक्तं तदयुक्तम् आत्मनः स्वप्रकाशत्वे प्रमाणाभावात् विप्रतिपत्तेरिति तत्राह न चेति।

तथा हि आत्मा इतरानपेक्षप्रकाशः स्वसत्तायां प्रकाशाव्यभिचारित्वात् संविद्वदालोकवत् वा।

प्रमाणसत्वात् न विप्रतिपत्तिरिति आह तथा हीति। इतरं नापेक्षत इति इतरानपेक्षः स च असौ प्रकाशश्चेति इतरानपेक्षप्रकाश आत्मा इत्यर्थः। प्रकाशाव्यभिचारित्वं प्रकाशव्याप्तत्वं ज्ञानस्वप्रकाशवादिनं प्रति दृष्टान्तः संविद्वदिति नैयायिकादीन् प्रति दृष्टान्तमाह आलोकवदिति। ननु क आत्मा पक्षः किमशनायाद्यतीतः उत कर्त्ता भोक्ता? नाद्यः, परं प्रत्याश्रयासिद्धेः, न इतरः वादिनं प्रत्यभावात् नहि कर्त्तारं भोक्तारम् आत्मानं वेदान्तिनो मन्यन्ते किञ्च पक्षीकृत आत्मा प्रमाणसिद्धो वा भ्रमसिद्धो वा स्वप्रकाशतया सिद्धो वा असिद्ध एव वा? न अन्त्यः असिद्धस्य पक्षत्वादर्शनात्। नाद्यः, प्रमाणसिद्धस्य स्वप्रकाशत्वसाधने बाधात्। न द्वितीयः, भ्रमसिद्धस्य आभासतया तदङ्गिनोऽप्याभासत्वप्रसङ्गात् न तृतीयः स्वप्रकाशतया इदानीं साध्यमानत्वात् किञ्चेदमितरानपेक्षप्रकाशत्वं साध्यमानम् इतरं नापेक्षते यः प्रकाशस्तदात्मकत्वं तद्वत्वं वा साध्यम्। उभयत्रापि इतरानपेक्षत्वं प्रकाशस्य किम् उत्पत्तौ प्रकाशने वा? आद्ये उत्पत्तौ इतरानपेक्षप्रकाशात्मकत्वे साध्ये न स्वप्रकाशत्वम् आत्मनः सिद्ध्यति द्वितीये दृष्टान्त आलोके साध्यवैकल्यं प्रकाशने इतरानपेक्षप्रकाशो वाह्यालोके भास्वरं रूपं न तदात्मकत्वम् दृष्टान्तालोकस्य रूपरूपिणोरैक्यायोगात् द्वितीये इतरानपेक्षप्रकाशवत्वेन आत्मनः स्वप्रकाशत्वसिद्धिः स्वप्रकाशवत्वस्य एव सिद्धेः

संविद्वदिति आद्यदृष्टान्ते साध्यवैकल्पञ्च न हि संवित्ताद्दृक् संविद्वती प्रकाशाव्यभिचारित्वञ्च हेतुरात्मनि कथं वर्त्तत इति वाच्यं प्रकाशाव्यभिचारित्वं हि प्रकाशव्याप्तत्वं व्याप्तिश्च यत्र देशे आत्मा तत्र प्रकाश इति वा यदा आत्मा तदा प्रकाश इति वा न उभयथापि आत्मनोऽवृत्तित्वात् कालानवच्छिन्नत्वाच्च स्वसत्तायामिति हेतुविशेषणं व्यर्थं परप्रकाशे घटादौ प्रकाशाव्यभिचारित्वाभावात् नच ध्वस्ते प्रदीपे प्रकाशरहिते साधनवैकल्पपरिहाराय स्वसत्तायामिति विशेषणमिति वाच्यं ? तत्र हेतोरवृत्तावपि अविरोधात् साधनैकदेशवृत्तेरपि सद्धेतुत्वदर्शनात् सुखादावनैकान्तश्च अयं हेतुः तस्य स्वसत्तायां प्रकाशाव्यभिचारित्वात् तमोविरुद्धत्वञ्च अत्रोपाधिः नच आत्मनि साधनव्याप्तिः तस्य तमःसाधकत्वेन तमोविरोधित्वाभावात्। निदर्शनद्वयञ्च साधनविकलं नहि देशतः कालतो वा प्रकाशसामानाधिकरण्यं संविदालोकयोः सम्भवति संवित् स्वप्रकाशत्वे संविदतिरिक्तप्रकाशाभावे न संविदः प्रकाशसामानाधिकरण्यायोगात् आलोकस्यापि भास्वररूपाख्यप्रकाशसामानाधिकरण्याभावात् तस्य आलोकधर्मित्वादिति नच यदा लोकस्तदा प्रकाश इति कालकृतसामानाधिकरण्यम् आलोकप्रकाशयोरस्त्येवेति वाच्यं ? चणमगुणं द्रव्यं तिष्ठतीति न्यायविरोधात् तस्मादसदेतदनुमानमिति। तदसत् तथाहि यत्तु, कः आत्मेत्यादि तदसत्। आत्मशब्दार्हस्य पचत्वात् यदपि प्रमाणसिद्ध इत्यादि तदपि असत् सिद्धस्यैव पचत्वात् प्रमाणादिविशेषणस्य असमर्थत्वात्। यदपि साध्यविकल्पनं किञ्चेदमित्यादिना तदपि असत् प्रकाशने इतरानपेक्षो यः प्रकाशस्तदात्मकत्वस्यैव साध्यत्वात् नच दृष्टान्त आलोके साध्यवैकल्पं तत्रापि प्रकाशस्य आलोकातिरिक्तस्य अनङ्गी-

कारात् नहि प्रकृष्टप्रकाशश्चन्द्र इत्यत्र चन्द्रप्रातिपदिकार्थान्तरं प्रकाशः तथात्वे प्रश्नोत्तरवैयधिकरण्यप्रसङ्गात्। न च भास्वरं रूपं प्रकाश इति, तत्राऽपि रूपरूपिणोस्तादात्म्यस्यैव स्वीकारेण साध्यवैकल्याभावात् समवायस्य निर्वक्तुमशक्यतया नैयायिकैरपि तथैव स्वीकरणीयत्वात् यत्तु हेतुदूषणं प्रकाशाव्यभिचारित्वञ्च हेतुरित्यादि तदपि असत् यावत् प्रकाशकालं विद्यमानत्वस्यैव हेत्वर्थत्वात् न च आत्मनि कालानवच्छेद इति वाच्यं ? अज्ञानवशात् तदवच्छेदस्य अपि उपपत्तेः न च सुखादावनैकान्तः यावत् प्रकाशकालं सुखादेरसत्वात् नहि मुक्तिकाले दुःखादिरस्ति सुखस्य आत्मत्वे न पक्षत्वात् न च तत्र अनैकान्तिकत्वमपि अत एव ज्ञातसत्वपक्षे घटादौ अनैकान्तिकत्वं हेतोः परास्तं साक्षिभास्यघटादेर्यावत् साक्षिस्थित्यनङ्गीकारात् न च तमोविरुद्धत्वमुपाधिः। साधनव्यापकत्वात् न च तमः साधकेन तमोविरुद्धत्वं स्वरूपेण तमोविरुद्धस्याऽपि कल्पनया तत् साधकत्वोपपत्तेः नहि एकत्र वास्तवकाल्पनिके रूपे नस्तः तथा सति भ्रमोच्छेदापत्तेः न च निदर्शनं साधनविकलं यावत् प्रकाशकालं विद्यमानत्वस्य उभयत्रापि विद्यमानत्वात् न हि संवित् अपरोक्षा भाति। अथ च नास्तीति सम्भवति। नचालोकः प्रकाशते अथ नास्तीति युक्तिमत् ।न च भास्वररूपमालोकप्रकाशः। न च तस्य यावती स्थितिः तावत् कालमालोकोऽपि तिष्ठति। निराश्रयो गुणः क्षणं तिष्ठति इति स्वीकारात् गुणिनाशस्य गुणनाशं प्रति हेतुत्वात् इति वाच्यं उपादाननाशस्यैव उपादेयनाशं प्रति हेतुत्वात् नच आलोको भास्वरं रूपं प्रति उपादानं तयोस्तुल्यकालत्वात् तादृशयोश्च सव्येतरविषाणवत् उपादानोपादेयभावानभ्युपगमात् किं तर्हि तदुपादानमालोकावयवास्तर्हि

तस्मात् स्वयम्प्रकाश आत्मेत्यभिप्रेत्य उक्तं ज्योतिरिति। सैन्धवघनवत् विज्ञानघनैकस्वभावतया स्वयंज्योतिःस्वरूपमित्यर्थः। तथा च श्रुतिः अत्रायं पुरुषः स्वयंज्योतिर्भवति इति। ननु कदाचित् आत्मानमहं जानामि इति अनुभवः कदाचित् आत्मानमहं न जानामि इति अनुभवः तथा च एतदनुभवद्वयोप-

कथमालोको रूपवान् इति उपादानरूपेणैव उपादेयस्य रूपवत्त्वोपपत्तेस्तयोरभेदादिति। ननु एतदनुमानविषयत्वम् आत्मनोऽस्ति न वा? न चेत् कथं तस्य स्वप्रकाशत्वं अस्ति चेत् तथापि कथं स्वप्रकाशत्वं एतत् ज्ञानविषयत्वात् एव इति चेत्? न एतदनुमितिवस्थं ज्ञानविषयत्वस्यैव तदनुमानविषयत्वं न एतदनुमानभाव्यत्वमिति न स्वप्रकाशत्वव्यतिरिति।

एवं निरवद्यानुमानसिद्धमात्मनः स्वप्रकाशत्वमुपसंहरति तस्मात् इति। उक्तेऽर्थे अदृष्टद्वयमित्यादि आद्यपद्यस्थं ज्योतिरिति विशेषणं निवेशयति इत्यभिप्रेत्येति। ननु मतुब्लोपादभेदोपचारात् वा शुक्लः पट इति वत् ज्योतिरात्मानमिति प्रयोगो ननु अभेदादिति तत्राह सैन्धवघनवदिति। अयमर्थः विज्ञानं तावत् प्रकाशत्वात्तमोविरोधित्वात् ज्योतिःपदवाच्यं विज्ञानम् च आत्मैव विज्ञानघनश्रुतेः घटज्ञानयोः सम्बन्ध आत्मनिष्ठः ज्ञाननिष्ठत्वात् सत्तावत् इति अनुमानाच्च तथा च विज्ञानैकस्वभावत्वात् स्वयं ज्योतिःस्वरूप एवात्मा तत्

स्थापितज्ञातत्वाज्ञातत्वाभ्यां स्वयंज्योतिष्ट्वमात्मनो विरुद्ध्यते। तथा हि यदि आत्मानमहं जानामि इति अनुभवानुरोधेन ज्ञातत्वं ज्ञानकर्मत्वमात्मनः स्वीक्रियते तदा अनात्मवत् स्वयम्प्रकाशत्वानुपपत्तिः।

स्वरूपं विनिश्चित्येति पूर्वश्लोकेन अन्वयः। ननु स्वयं ज्योतिःस्वरूपश्चेदात्मा तर्हि तत्र अनुमानोपन्यासोऽनुचितः उपनिषन्मात्रगम्यत्वात् इति चेत्? तत्राह तथा चेति। अनुमानेन सम्भाविते सति श्रुतिः वक्ष्यमाणा तत्र प्रमाणम् इत्यर्थः। श्रुतिमुदाहरति अत्रेति। अत्र स्वप्नावस्थायां स्वप्ने तावत् आत्मा प्रकाशत इति। संप्रतिपन्नं तत् प्रकाशनं न तावत् वाह्येन्द्रियात् तस्य आत्मनि अप्रवृत्तेः उपरमाच्च नापि मनसस्तस्य रथादिरूपेण परिणतत्वात् परिशेषात् स्वयं ज्योतिरात्मेत्यर्थः। ननु पूर्वोक्तानुमानं श्रुतिर्वा न आत्मस्वप्रकाशताप्रतिपादनाय अलं सत्प्रतिपक्षत्वात् अनुमानविरोधेन अयोग्यत्वादिति शङ्कते नन्विति। आत्मा न स्वप्रकाशो ज्ञातत्वात् अनात्मवत् तथात्मा न स्वयंप्रकाश अज्ञातत्वात् घटवदिति। अत्र अनुमानद्वये हेत्वोः स्वरूपासिद्धिमाशङ्क्य प्रमाणाभ्यां पक्षे हेतू साधयति कदाचित् इत्यादिना। पूर्वोक्तहेत्वनुमानाभ्यां आत्मनि प्रसाध्य तदनुवादेन ताभ्यामात्मनि स्वयं प्रकाशनिषेधं प्रतिजानीते तथा च इति। ननु आत्मनि ज्ञातत्वमात्मानमहं जानामि इति अनुभवसिद्धमपि न स्वप्रकाशत्वनिषेधाय अलं ज्ञाननिवर्त्त्याज्ञानविषयत्वरूपस्य ज्ञातत्वस्य आत्मनि स्वप्रकाश-

तत् एव हि स्वयम्प्रकाशं नाम यत् केनाऽपि रूपेण कस्यापि ज्ञानस्य कदाचित् अपि कर्मतां न भजते। अन्यथा पारिभाषिकमेव स्वयम्प्रकाशत्वं स्यात्। यदि च मामहं न जानामि

त्वेऽपि अविरोधादित्याशङ्क्य प्रथमानुमानसंग्रहवाक्यं विवृणोति तथाहि इति। ज्ञातत्वं तावदात्मनि पूर्वोक्तानुभवबलेन अवश्यं स्वीक्रियते यदि इत्यन्वयः। तर्हि ज्ञातत्वमस्मदुक्तमस्तु तथा च न स्वप्रकाशत्वनिषेधसिद्धिरिति तत्राह ज्ञानकर्मत्वमिति। अयमत्राशयः ज्ञात आत्माज्ञातो घट इत्यनुभवाभ्यामुभयत्रापि ज्ञातत्वमविशिष्टं संप्रतिपन्नं नच वेदान्तिमते घटे ज्ञाननिवर्त्याज्ञानविषयत्वरूपं ज्ञातत्वं सम्भवति। घटादेः जड़स्य अज्ञानावृतत्वानङ्गीकारात् ज्ञानभास्यत्वे विरोधाभावाच्च। नच ज्ञातत्वमात्मनि अन्यदन्यच्च घटादाविति युक्तं ज्ञातशब्दस्य अनेकार्थत्वप्रसङ्गात् तस्य च अन्याय्यत्वात् तस्मात् ज्ञानभास्यत्वमेव ज्ञातत्वमिति। भवतु एवं किं ततस्तत्र आह तदेति। तथाच पूर्वोक्तस्वप्रकाशत्वनिवृत्तिसाधकमनुमानं सुस्थमित्यर्थः।

ननु ज्ञानकर्मत्वमस्तु अस्तु च स्वप्रकाशत्वं को दोषस्तत्राह तत् एवहि इति। स्वप्रकाशत्वज्ञानकर्मत्वयोः एकत्रादर्शनात् स्वप्रकाशत्वे ज्ञानकर्मत्वमेव न स्यादित्यर्थः। ननु ज्ञानकर्मैव स्वप्रकाशगिरोच्यतेइति तत्राह अन्यथा इति। परिभाषामात्रसिद्धं न यौक्तिकं विरोधादित्यर्थः। ननु अप्रमेयमिति श्रुतेः कथं तस्य ज्ञानकर्मत्वमित्याशङ्क्य द्वितीयहेतुसंग्रहवाक्यं विवृणोति। यदि च मामित्यादिना श्रुतिविरोधान्मामहं जानामि इत्यनु-

इति अनुभवानुरोधेन अज्ञातत्वमेव स्वीक्रियते तथापि स्वयं ज्योतिष्ट्वक्षतिः न हि एकस्मिन् एव वस्तुनि युगपत् भाति न भाति च इति अनुभवितुं शक्यं विरोधात् । न हि यदा भाति तदानीमेव

भवस्य अनात्मविषयत्वेनापि उपपत्तेः अनीशया शोचति मुह्यमान इति श्रुतेर्मामहं न जानामि इत्यनुभवाच्च यदि अज्ञातत्वमेव स्वीक्रियतामित्यर्थः । अस्तु अज्ञातत्वं तदपि न स्वप्रकाशत्वविरोधि घटादौ अस्वप्रकाशे जड़त्वात् स्वत एव आवृत्तैकरूपे अज्ञानविषयत्वलक्षणाज्ञातत्वाभावादिति तत्राह तथापि इति । आत्मनि अज्ञातत्वस्य स्वीकृतावपि इत्यर्थः । माम् अहं न जानामि इतिवत् घटमहं न जानामि इति अनुभवाविशेषादवश्यं घटादावपि अज्ञातत्वं स्वीकर्त्तव्यं घटादौ अस्वप्रकाशत्वमुभयसिद्धं तथाच अज्ञातत्वमस्वप्रकाशत्वेन व्याप्तमात्मनि दृश्यमानस्वप्रकाशत्वस्य क्षतिमावहति इत्यर्थः । ननु स्वयं प्रकाशत्वं नाम स्वयमितरनिरपेक्षतया भासमानत्वम् अज्ञातत्वञ्च अभासमानत्वं तच्च न भासमानत्वविरोधि- घटादौ कदाचित् भासमानत्वस्यापि दर्शनादिति तत्राह न हीति । यद्यपि घटादावुभयमस्ति तथापि न युगपत् भासमानत्वस्य कार्य्यत्वेन कादाचित्कत्वात् । आत्मनि तु युगपदुभयं स्वरूपप्रकाशस्य अनादिभावतया नित्यत्वादज्ञानस्य अनादितया कार्य्यत्वात् ततश्च युगपदुभयं विरुद्धम् आत्मनि न सम्भवति अज्ञातत्वञ्च आत्मनि उभयवादिसिद्धं ततश्च आत्मनि अज्ञानकाले भाति इत्येवंरूपप्रकाशमानत्वं विरोधात्

न भाति इति अनुभवः यदा न भाति तदानीं च भाति इति। तत् कथं स्वयं ज्योतिष्ट्वम् आत्मन उपपद्यत इति नैष दोषः ज्ञाताज्ञात-विलक्षणस्यैव आत्मत्वात् तथा च श्रुतिः अन्य-देव तद्विदितात् अथोऽविदितात् अधि इति। आत्मानमहं जानामि इति अनुभवस्य का गतिरिति चेत्? विशिष्टविषयत्वमेव न हि एक-

न अनुभवितुं शक्यमित्यर्थः। विरोधं स्पष्टयति न हीति। पूर्वपक्षम् उपसंहरति तत्कथमिति। तदिति अव्ययं पूर्वोपपादितज्ञातत्वा-ज्ञातत्वलक्षणहेतुद्वयं परामृशति तत्तस्मादित्यर्थे तदेतत् दूषयति नैष दोष इति। अनुमाने सत्प्रतिपक्षत्वं श्रुतौ अयो-ग्यता अनुमानविरोधात् इत्येवंलक्षणो दोष एतत् शब्दार्थः अनुमानस्य आभासत्वादिति भावः। आभासत्वम् उपादयितुं न इति प्रतिज्ञायां हेतुमाह ज्ञातेति। अनुमाने पक्षीभूत आत्मनि ज्ञाताज्ञातत्वं न वर्त्तते आत्मनस्तद्विलक्षणत्वात् इत्यर्थः। परस्परविरोधेन प्रकारान्तरस्थितिरिति न्यायात् कथमुभयविलक्षणत्वम् आत्मन इति तत्राह तथा चेति। अधि उपरि अन्यदित्यर्थः। श्रुतिविरोधे न्यायस्य आभासत्वादित्यर्थः। ननु प्रमाणं विना कुतो न्याय आभासतां भजते। अयं तु न्याय आत्मानं जानामि इति प्रमाणसहकृत इति कथम् आभास इत्यभिप्रेत्य पृच्छति आत्मानमिति। अनात्मविषयोऽयमनुभवो न निरूपणीयात्मज्ञातत्वम् अनुभावयति इति परिहरति विशिष्टेति। ननु अयम् अनुभवः किं विशिष्टम् आत्मानं

स्मिन् अनुभवे निर्विकल्पकमज्ञानानन्दव्यावृत्तं वस्तुस्वरूपमात्रं भाति इति अनुभवः येन आत्मनो ज्ञानकर्मत्वं भवेत् अपि तु उपाधिविशिष्टमेव तस्य च ज्ञानकर्मत्वेऽपि अविरोधः।

विषयीकरोति किम् अज्ञानविशिष्टम् अहङ्कारविशिष्टं वा? नाद्यः, आत्मानम् अहं जानामि इत्यत्र अज्ञानास्फुरणात् न द्वितीयः आत्मानम् अहं जानामि इति अहङ्कारस्य कर्तृत्वेन पृथक् अवभासनात् तस्मात् आत्मानं जानामि इति अनुभवो न विशिष्टविषय इति तत्राह न हीति। अयमर्थः न तावदयं निर्विकल्पकप्रत्ययः किञ्चित् इत्येव हि निर्विकल्पकाकारः शब्देन व्युत्पाद्यते नच अत्र तथा व्युत्पादनम् आत्मानम् इति आत्मशब्देन ज्ञानाकारव्युत्पादनात् मानसं चैतत् ज्ञानं परैः इष्यते। मनसश्च इन्द्रियस्य द्रव्ये प्रवृत्तिर्गुणोपरागेण गुणश्च अत्र दुःखादिरेव दुःखाद्युपरागश्च न नैयायिकादिवत् आत्मनः स्वतोऽस्माकमपि तु दुःखाद्युपादानान्तःकरणतादात्म्यात् तत्तादात्म्यञ्च न अज्ञानं विना तथाच आत्मानमहं जानामि इति अनुभवबलादेव अज्ञानानन्दादिवैशिष्ट्यं भाति न शुद्धं स्वरूपं निर्विकल्पकत्वापत्तेः ततो विशिष्टमेव ज्ञानकर्म न शुद्धं स्वरूपमिति। ननु भवतु तादृक् अनुभवविषयो विशिष्टः तथापि तस्यापि ज्ञानकर्मत्वं न युज्यते आत्मत्वात् न हि कुण्डली देवदत्तो न देवदत्त इति तत्राह तस्य इति। तस्य विशिष्टस्य स्वप्रकाशत्वे विशेषणस्यापि स्वप्रकाशत्वापत्तिः विशिष्टवृत्तेर्धर्मस्य विशेषणवृत्तित्वनियमात् ततो विशिष्टं ज्ञानकर्म न स्वप्रकाशम् अविरोधात् इत्यर्थः।

न हि तस्य स्वयम्प्रकाशत्वमस्ति। शुद्धस्यैव आत्मनः स्वयम्प्रकाशत्वाङ्गीकारात् माम् अहं न जानामि इति अनुभवः आत्मनः स्वयम्प्रकाश-

ननु विशेषणस्यापि देहाद्यपेक्षयान्तरत्वेन आत्मत्वात् तदपि स्वप्रकाशमिति तत्राह न हीति। आन्तरत्वम् आत्मत्वेन प्रयोजकं किं तर्हि जड़विरुद्धत्वेन चिद्रूपत्वम् अज्ञानादि न चिद्रूपं विरुद्धत्वात् तथाच अनात्मत्वम् अज्ञानादेः ततो न स्वप्रकाशं तदिति। ननु विशिष्टस्य अस्वप्रकाशत्वे विशेष्यस्यापि ज्ञानकर्मत्वं ततश्च आत्मांशेऽपि परप्रकाश्यत्वमिति तत्राह। शुद्धस्य एवेति। सविशेषणे हीति न्यायेन विशेषणतिरस्कारेण शुद्धं विशेष्यमात्रं स्वप्रकाशम् आत्मत्वात् न विशिष्टं तस्य कल्पितत्वेन अनात्मत्वात् इत्यर्थः। ननु ज्ञातत्वानुभवो विशिष्ट-विषयो न शुद्धस्य ज्ञानकर्मत्वसम्पादक इति पूर्वानुमाने स्वरूपासिद्धिरिति स्थितेऽपि अज्ञातत्वानुभवो न विशिष्ट-विषयः सम्भवति विशेषणस्य अज्ञानस्य तत्प्रभवत्वेन तद्वि-शिष्टस्य अज्ञातत्वाभावात्। अज्ञानविशिष्टस्य अज्ञातत्वे आत्माश्रयप्रसङ्गात् अज्ञानविषयस्यैव अज्ञातत्वादिति युक्तेः अनीशया शोचति मुह्यमानः नीहारेण प्रावृत्ता इत्यादि-श्रुतेश्च शुद्धात्मनि एव अज्ञातत्वं ततश्च कथं तत्स्वरूपासिद्धम् इत्याशङ्क्याह माम् अहं नेति। यद्यपि अयमनुभवो ज्ञातत्वं शुद्ध आत्मनि व्यवस्थापयति तथापि विना स्वप्रकाशत्वम् आत्मनि अज्ञातत्वं बोधयितुं न शक्नोति इति अज्ञातत्वं न स्वप्रकाशत्वविरोधि किन्तु तदुपपादकमिति अप्रयोजकम् इत्यर्थः। ननु अज्ञातत्वं नाम स्वप्रकाशत्वाभावरूपमभास-

त्वसाधक एव तथा हि अयं हि अनुभवः आत्मविषयमज्ञानं विषयीकरोति।

तथा च एतस्मिन् अनुभवे अज्ञानवदात्माऽपि भातीति वाच्यम् अन्यथा न जानामि इत्येव तदाकारः स्यात् अत

मानत्वं तत् ग्राहकञ्च प्रमाणं कथं स्वप्रकाशत्वसाधकम् अतिप्रसङ्गादित्याशङ्क्याह तथा हीति। विशिष्टज्ञानञ्चैतत् तत्र विशेष्यम् अज्ञातत्वं तच्च विषयनिरूप्यमिति विषय आत्मा ज्ञातत्वव्यावर्त्तकत्वाद्विशेषणम् अत आत्मापि विशिष्टज्ञाने भाति।

विशिष्टज्ञानस्य विशेषणविषयत्वनियमात् इत्याह तथाच इति। ननु अज्ञातत्वमात्मविषयमवभासयदपि प्रमाणमात्मानं न विषयीकरिष्यति। आत्मनस्तत्र उपलक्षणत्वादिति तत्राह अन्यथेति। काकवन्तो देवदत्तगृहा इत्यत्र कश्चिदतिशयमुत्तृणाख्यं देवदत्तगृहे परिचायकं द्वारीकृत्य काको देवदत्तगृहव्यावर्त्तकस्तत्रोपलक्षणमिष्यते न चात्र अज्ञाने कश्चित् अतिशय आत्मजन्यो घटादिविषयाद्व्यावर्त्तको धर्मोऽस्ति अप्रतीतेः अत आत्मैव अज्ञानव्यावर्त्तकोऽज्ञाने विशेषणं वाच्यं अन्यथा आत्मविषयत्वमज्ञानस्य न सिद्ध्येदित्यभिप्रेत्याह न जानामि इति। ननु आत्मविशेषणकम् अज्ञातत्वं प्रमाणं भासयतु नाम तथापि न आत्मनः स्वप्रकाशत्वं विशेषणविशेष्योभयेन्द्रियसन्निकर्षस्यैव विशिष्टज्ञानहेतुत्वादिति तत्राह अत इति। अतो विशेषणत्वाद्भासमानम् आत्मानम् उल्लिख्य विषयीकरोति इति अन्वयः न विशेषणेन्द्रियसन्निकर्षो विशिष्टप्रतीतिहेतुः

आत्मानमहं जानामि इति स्वयम्प्रकाशतया भासमानम् आत्मानमुल्लिख्य न इति अज्ञान-लक्षणम् आवरणं तच्च विषयीकरोति इति युगपद्भासनत्वाभासमानत्वे स्वयम्प्रकाशस्य अवि-रुद्धे इति मामहं न जानामि इति अनुभव-बलादेव स्वयम्प्रकाशत्वमात्मनः सिद्धम्।

अतीतानागतविशेषणेषु इन्द्रियसन्निकर्षासम्भवात् ततो विशेषणज्ञानमेव अन्वयिविशिष्टप्रतीतौ कारणं न सन्निकर्ष इति अभिप्रेत्याह भासमानमिति। सा च आत्मनो भासमानता प्रमा-णात् वा भ्रमात् वा स्वप्रकाशत्वात् वा ? नाद्यः, प्रमाणप्रवृत्तौ अज्ञातत्वविरोधात्। न द्वितीयः, आत्मनः कल्पितत्वापत्तेः भ्रम-मात्रप्रसिद्धस्य तत्वात् ततः पारिशेष्यात् स्वप्रकाशतया एव आत्मनो भासमानता इति आह स्वयम्प्रकाशतयेति। उल्लिख्य विषयीकृत्वे-त्यर्थः। ननु भासमानत्वाभावोऽज्ञातत्वं तत् सति भासमानत्वे न सम्भवतीति तत्राह अज्ञानलक्षणमिति। लक्षणस्वरूपं तस्य अभावत्वं व्यावर्त्तयति आवरणमिति। अज्ञानं तावदावरकं नीहा-रेण प्रावृत्ता इति श्रुतेः आवरकं च वस्त्रादि भावरूपमेव दृष्टं तेन भासमानेऽपि आत्मनि अज्ञातत्वं सम्भवति भावयोः एकत्र रूपस्पर्शवत् स्थित्यविरोधादिति। ननु एवं घटादावपि तर्हि उभयं स्यात् तत्राप्यविरोधादिति तत्राह इति युपपदिति। अनात्मनि भासमानता प्रमाणाद्वाच्या प्रकाशस्वरूपत्वाभावात् प्रमाणप्रवृत्तौ च तद्विरोध्यज्ञातत्वाभावात् ततो भासमानत्वा-भासमानत्वे ये परप्रकाशे घटादौ ते विरुद्ध्येते न आत्मनि

ननु घटं न जानामि इति अनात्मनि अपि ईदृशोऽनुभवोऽस्ति इति तस्याऽपि स्वयम्प्रकाशत्वप्रसङ्ग इति चेत्? अथ कोऽयं घटो नाम यस्य स्वयम्प्रकाशत्वमापाद्यते घटत्वादयो धर्मा यत्र प्रतीयन्ते अयमेव इति चेत्? किमस्य स्वरूपं तत् सम्यगनुभूय इतरविविक्ततया प्रदर्श्यतां

इत्यर्थः। आत्मनि अज्ञातत्वसाधकप्रमाणस्य स्वप्रकाशत्वसाधकत्वम् उपसंहरति माम् अहमिति।

ननु अज्ञातत्वसाधकं प्रमाणं न अज्ञानविषयस्य स्वप्रकाशत्वसाधकं घटादावपि स्वप्रकाशत्वप्रसङ्गादिति शङ्कते ननु इति। घटं न जानामि इति अनुभवस्तावत् आत्मनि इव घटादौ अविशिष्टः घटादिः अज्ञाने विशेषणज्ञानसाध्या च विशिष्टा प्रतीतिः विशेषणज्ञानञ्च न प्रमाणात् तस्मिन् सति अज्ञातत्वाभावात्। भावे वा तस्य अनुच्छेदप्रसङ्गात् न स्वतो जड़त्वात् भ्रमात् चेत् तर्हि तस्य कल्पितत्वमिति वक्तुमात्मभेदेन घटं प्रत्याचष्टे अथ इति। घटस्वरूपप्रश्नस्य अप्राप्तकालत्वं प्रत्याचष्टे यस्येति। स्पष्टं मत्वोत्तरं शङ्कते घटत्वादय इति कम्बुग्रीवाकारवत्त्वं व्यक्तिपदार्थपक्षे घटशब्दवाच्यत्वमादिशब्दार्थः। अयमेव इत्यत्र घट इति शेषः। यत्रेति सर्वनाम्नां प्रसिद्धमात्रवाचकत्वात् तद्विशेषस्य उपस्थितौ नियामकाभावात् त्वया एव विशेषो वक्तव्य इत्याह किमस्येति। शब्देन प्रतिपादनञ्च न शुकवत् किं तर्हि अर्थं बुध्वा इत्याह अनुभूयेति। अनुभवोऽपि न भ्रमः कल्पितत्वप्रसक्तेरित्यभिप्रेत्याह सम्यक् इति। तदनुभवोऽपि न प्रमेय-

कपालाद्यारब्धावयविविशेष इति चेत् ? न अवयवावयवित्वादयो हि घटसंबद्धा अन्ये नतु एते एव घटस्वरूपाः।

एतदन्यत् स्वरूपं वाच्यम् एतदन्यत् स्वरूपं विशिष्य वक्तुं न शक्नोमि इति चेत् ? कथमशक्तिः अननुभूयमानत्वात् वा निर्विशेषत्वात् वा ? न आद्यः घटस्वरूपस्य सर्वजनीनानुभव-

त्वादिरूपेण किन्तु असाधारणरूपेणेत्याह इतरविविक्ततयेति। असाधारणघटस्वरूपं शङ्कते कपालेति। कपालेनारभ्यते स्वसमवेततया उत्पाद्यत इति कपालारब्धः आदिपदं मृदाद्याह-तावत्युक्ते कपालादिसमवेतरूपाद्यपि घटः स्यात् इति। तत् व्यावर्त्तयति अवयवि इति। शरावादिव्युदासाय आह विशेष इति। किमेतत् वाक्यं कपालघटयोः अवयवावयवित्व-सम्बन्धादिधर्मप्रतिपादनपरं किं वा घटस्वरूपप्रदर्शनपरम् ? आद्ये प्रश्नानुत्तरं घटस्वरूपस्यैव पृष्टत्वादित्याह न इति। द्वितीयं प्रत्याह नतु इति। अवयवित्वेन प्रतीतेः अवयवसापेक्षत्वेन स्वस्वरूपायोगात् इत्यर्थः।

ननु किं स्वरूपनिरूपणेन यादृक् तादृगस्तु घटस्वरूपमिति तत्राह एतदन्यदिति। अन्यथा अतिप्रसङ्गस्य त्वया दातुमशक्यत्वात् इति शेषः। वाच्यं स्वरूपं भवति एव परन्तु वक्तुं न शक्नोमीति परः शङ्कते एतदन्यदिति अशक्तौ कारणं पृच्छति कथमिति। लोकविरोधेन आद्यं दूषयति न आद्य इति।

सिद्धत्वात् द्वितीयेऽपि वक्तव्यं निर्विशेषम् अनुभूयमानं यत् स्वरूपं तत् किं स्वतोऽनुभूयते स्वभिन्नेन मानान्तरेण वा ? अन्त्ये निर्विशेषत्वव्याघातः न हि निर्विशेषं वस्तु मानान्तरविषय इति सम्भवति चक्षुरादेः सार्वलौकिकस्य प्रमाणस्य सविशेषवस्तुविषयत्वनियमात्। तस्मात्

निर्विशेषत्वात् निर्वचनाशक्तिः शब्दस्य विशेषपुरस्कारेणैव प्रवृत्तेरिति। द्वितीयमनुवदति द्वितीयेऽपि इति। निर्विशेषत्वं घटस्य त्वया एव स्वीकृतं तच्च अनुभूयमानं विश्वसिद्धम् एवं स्थिते विमृशति तत् किमिति। स्वतः स्वमहिम्ना स्वप्रकाशतया निर्विशेषत्वरूपापेक्षया भिन्नं यन्मानं तेन मानान्तरेण इत्युक्ते अन्यापेक्षया स्वस्यापि मानान्तरत्वात् न परप्रकाशत्वसिद्धिरिति विशिनष्टि स्वभिन्नेन इति। अन्तरपदं भिन्नपदव्याख्यानाय आद्यमङ्गीकर्तुमन्त्यं दूषयति अन्त्य इति। मानान्तरविषयत्वेऽपि निर्विशेषता किं न स्यात् इति तत्र आह नहि इति। तत्र हेतुः चक्षुरादेरिति। अयमर्थः चक्षुरादीनाम् इन्द्रियाणां तावत् रूपादिगुणवत्येव प्रवृत्तिः तत् पुरस्कारेणैव तेषां प्रवृत्तेः अनुमानमपि सामान्यादिपुरस्कारेणैव प्रवर्त्तते। अनुमितेर्व्यापकतावच्छेदकप्रकारत्वनियमात् शब्दोऽपि विशेषवत्येव प्रवर्त्तते। आनन्त्यव्यभिचारपरिहाराय सामान्यादिविशेषस्यापि अपेक्षत्वात् उपमानस्यापि सादृश्यादिधर्मविशेषापेक्षत्वात् सर्वं प्रमाणं विशेषमनियतमिति। ननु एवं तर्हि आत्मन औपनिषदत्वव्याघातः निर्विशेषे आत्मनि वेदशिरसां प्रवृत्त्ययोगादिति

निर्विशेषं सकलवाङ्मनसाद्यविषयं स्वभासमानं वस्तु घटस्वरूपमिति अवशिष्यते।

तत् किमात्मनो भिद्यते। न वा इति विचारणीयं भिद्यते चेत्? न भेदकधर्माभावात् निर्विशेषत्वात् धर्मिप्रतियोगिनोरुभयोरपि स्वयम्प्रकाशत्वेन तद्विशेषितस्य भेदस्य

तत्राह लौकिकेति। लक्षणया निर्विशेषाकारवस्तु प्रस्थापकत्वात् वेदशिरसां तत्र प्रामाण्यं युज्यत इति भावः। यतः प्रमाणानि सर्वाणि विशेषवत्येव नियतानि अनुभूयते च निर्विशेषं स्वरूपं तस्मात् परिशेषात् स्वप्रकाशं निर्विशेषं घटस्वरूपं सिद्धम् इति आद्यपक्षाङ्गीकारेण उपसंहरति तस्मादिति।

ननु तथापि स्वप्रकाशं निर्विशेषं वस्तु घटरूपं न भवितुम् अर्हति अनात्मत्वात् पटवदित्याशङ्क्य स्वरूपासिद्धया दूषयितुं विचारयति तत् किमिति। ननु भेदको धर्मो घटत्वादिरस्ति इति न इत्याह निर्विशेषत्वादिति घटत्वादि घटे भेदकम् अस्ति इति कोऽर्थः? किं तत् व्यक्तिमात्रे वर्त्तते? घटव्यक्तिषु वा? नाद्यः, सर्वव्यक्तीनां घटरूपताप्रसङ्गात् घटव्यक्तिषु इति चेत्? का घटव्यक्तयो घटत्वादिमत्य इति चेत्? न, आत्माश्रयात् धर्मान्तरवत्य इति चेत्? न, तत्रापि एवं पर्य्यनुयोगे आत्माश्रयादिदोषात् ततो निर्विशेष इत्येव घट इति न भेदको धर्मोऽस्ति इति निर्विशेषस्य च भासमानस्य स्वप्रकाशमक्षतम् इति अभिप्रेत्य दूषणान्तरमाह धर्मीति। भेदाववोधि मानं न भेदमात्रम्

प्रमाणेन ग्रहीतुमशक्यत्वात् च तस्मात् स्वयम्प्रकाशात्मस्वरूपमेव घट इति स्थितम्।

एवं पदार्थान्तरमपि आत्मस्वरूपमेव इति अनात्मा आत्मभिन्नो न अस्ति एव। कस्य स्वयम्प्रकाशत्वमापाद्यते तुल्यन्यायादिति अतः स्वयं-

अवबोधयितुम् अलं तस्य धर्मिप्रतियोगिविशिष्टैकरूपत्वात् तावत् मात्रगोचरत्वे वा आत्मप्रतियोगिको घटधर्मिको भेदो न मानसिद्ध इति घट आत्मनः प्रमाणतो भिन्नो न स्यात्। अथ भेदावबोधकं मानं प्रतियोगिनमात्मानं धर्मिणञ्च घटमपि भासयतीति तत् कथं स्यात् उभयोरपि स्वप्रकाशत्वाङ्गीकारात् इत्यर्थः। ननु एवं घटात्मनोरभेदे किम् अवशिष्यतां नियामकाभावात् इत्याशङ्क्य इदं सर्वं यदयम् आत्मेति श्रुतौ प्रमाणसिद्धस्य सर्वस्य प्रथमोद्दिष्टस्य अनुवादेन आत्मस्वरूपत्वस्य विधेयत्वप्रतीतेः आत्मैव अवशिष्यते न घट इत्यभिप्रेत्य उपसंहरति तस्मादिति। आत्मनि अज्ञातत्वानुभवो यदि तत्र स्वप्रकाशसाधकस्तर्हि घटस्यापि स्वप्रकाशत्वं स्यात् घटविषयाज्ञातत्वानुभवस्य अविशिष्टत्वादिति निरस्तम्।

घटस्य आत्मव्यतिरिक्तस्य अनिरूपणादिति इममर्थं पदार्थान्तरेऽपि अतिदिशति एवमिति। अनात्मत्वेन प्रतिपन्नस्य स्तम्भादेः आत्मत्वप्रतिपादनफलमाह कस्येति। यत्र अनात्मनि स्वप्रकाशत्वम् आपाद्यते स एव आत्मभिन्नो न अस्ति आत्मनि तदापादनमिति। ननु स्तम्भादिः अनात्मत्वेन सर्वतन्त्रसिद्धः कथं तस्य आत्मरूपत्वमिति तत्राह तुल्येति। स्तम्भत्वाद्याश्रयः स्तम्भादिः?

ज्योतिःस्वभाव आनन्दघनः असङ्गोदासीन एव आत्मा अनाद्यनिर्वचनीयाविद्यासम्बन्धात् द्वैताकारेण भाति रज्जुरिव सर्पदण्डाद्यात्मना पर-

उत स्तम्भाद्यवयवारब्धोऽवयविविशेषो वा? इत्यादि न्यायस्य तुल्यत्वात् इत्यर्थः। ननु यदि घटादि विश्वम् आत्मैव न ततोऽन्यत् तर्हि आत्माकारेणैव भानं स्यात् न आकारान्तरेण तस्य असत्वादिति शङ्कां पराकरिष्यन् ज्योतिरिति विशेषणम् उपपादितुम् उपसंहरति अत इति। तस्य पुरुषार्थत्वनिरूपणाय आह आनन्देति। आनन्दो ब्रह्मेति व्यजानादिति श्रुतिः इत्यर्थः। ननु चन्दनं स्वर्ग इतिवदुपाधिसंसर्गादानन्दत्वं न स्वत इति न इत्याह असङ्ग इति। असङ्गो ह्ययं पुरुष इति श्रुतिः उपाधिसंसर्गो न अस्ति आनन्दैकमूर्त्तिरिति। ननु कर्त्तुः आत्मनो दुःखमपि सम्भाव्यते तत् कथं सुखैकमूर्त्तिरिति तत्राह उदासीन इति। अविकारित्वात् आत्मनो न कर्त्तृत्वं किन्तु उदासीन एव स इति। अनात्मकारप्रतीतिम् उपपादयति अनाद्येति। ननु एकस्मिन् शुक्तिशकले एक एव शुक्त्याकारो रजतमिति अज्ञानवशात् प्रतीयते नतु अनेके आकारा इति तत् कथम् आत्मनः अनेकाकारतया भानमित्याशङ्क्य एकाधिष्ठानस्य अनेकभ्रमविषयत्वे दृष्टान्तमाह रज्जुरिव इति। प्रपञ्चस्य अज्ञानसिद्धत्वे फलितमाह परमार्थत इति। ननु परस्परविरोधेन प्रकारान्तरस्थितिरिति न्यायात् द्वैतस्यैव च वस्तुतो सत्वे अद्वैतमेव आत्मस्वभाव इति वाच्यं? तदपि न सम्भवति। आत्मनः अभावात्मकत्वापत्तेर्द्वैतनिरूप्यत्वेन स्वभावत्वानुपपत्तेश्चेत्याशङ्क्य अद्वैतमपि आत्मनो न स्वरूपम् इत्याह

मार्थतस्तु न द्वैतं न अद्वैतमात्मैव केवलो विज्ञानघन इति सिद्धम्।

आत्माऽयं सर्वसंबद्धो भानुभासक उच्यते।
नित्योऽयमविनाशित्वात् उपादेयः कथं भवेत्२५

ननु ऐहिकामुष्मिकसकलसांसारिकसुखतत्साधनकलापात् विमुखस्य अनादिभवसञ्चित-

न अद्वैतमिति। किं तर्हि स्वरूपमित्याशङ्क्याह विज्ञानेति। द्वैताद्वैतविनिर्मुक्तत्वं केवलशब्दार्थः। आत्मनि घटादिजगदज्ञानं च एकस्मिन् अध्यस्तमिति एकाधिकरणसम्बन्धात् अज्ञाततया घटोऽनुभूयते न घटादौ वस्तुतः अज्ञानविषयत्वम् अस्ति इति घटादावपि न स्वप्रकाशत्वं तदनुभवस्य अन्यथा उपपन्नत्वात् इत्यभिप्रेत्य उपसंहरति इति सिद्धमिति।

यस्य भासा सर्वमिदं भाति स्थावरजङ्गमम्।
तदहं ब्रह्म पूर्णं स्यां पुरुषार्थसुखात्मकम्॥

आत्मनि प्रमाणसत्वेऽपि न दृश्यत्वेनानात्मत्वं प्रमाणाभावे नरशृङ्गवत् न असत्वं स्वप्रकाशत्वादिति एतावत् ज्योतिःपदेन स्थापितम् इदानीम् आनन्दमिति विशेषणेन आत्मनि सूचितं पुरुषार्थरूपत्वं निरूपयितुं सिद्धान्तिमतसिद्धात्मस्वरूपानुवादेन तस्य पुरुषार्थत्वमाक्षिपति आत्मेति। साधनचतुष्टयसम्पन्नस्य अधिकारिणोऽयमुपादेयः पुरुषार्थः कथं भवेत् न कथञ्चित् इत्यर्थः। उपादेयत्वे हि साध्यत्वं प्रयोजकं नचायं साध्यः सत्त्वे सति नित्यत्वात् इत्याह नित्य इति। नित्यत्वासिद्धिमाशङ्क्याह अविनाशित्वात् इति। एतत्

पुण्यनिचयक्षयितकल्मषस्य अशेषविषयदोष-दर्शनासादितोद्वेगस्य परमपुरुषार्थकामिनो मुमुक्षोः कथमयमुपादेयः स्यात्। तत्र यद्यपि अयमात्मा नित्यः विनाशसामग्रीरहितत्वात्

च उपपादयिष्यति मूलकारः। घटवत् परिच्छिन्नत्वात् न नित्य इत्याशङ्क्य स्वरूपासिद्ध्या दूषयति आत्मेति। ननु आप्लृ व्याप्ताविति स्मृतेराप्नोति व्याप्नोति इति आत्मा व्यापक इत्यर्थः। तावतापि कथम् अनित्यत्वपरिहारो व्यापकेऽपि आकाशे तव मते अनित्यत्वदर्शनात् इति न इत्याह सर्वेति। सर्वेषु सर्वात्मना संबद्धो जगदधिष्ठानमिति यावत् नच आकाशे जगदधिष्ठानत्वं स्वात्मानं प्रत्येव तदभावात्। ततश्च सर्वोपा-दानत्वात् न अनित्यो न वा कार्य्यश्चेत्यर्थः। ननु आत्मा जड़त्वात् घटवत् न सर्वोपादानमिति न इत्याह भानु इति। भानुवद्भा-सकः तथाच योग्यानपि भासयति तस्य स्वयं भासनेऽन्यापेक्षा न युज्यते इति न तस्य जाड्यमित्यर्थः। तत्र प्रमाणमाह उच्यत इति श्रुत्येतिशेषः। अपेक्षितपूर्णेन श्लोकं व्याकुर्वन् आत्मनः पुरुषार्थत्वम् आक्षिपति ननु इति। विमुखो विरक्तः वैराग्ये हेतुमाह अशेषेति। विषयदोषदर्शने हेतुमाह अनादि इति। ननु एतादृशस्य अधिकारिणः किमिति आत्मा नोपादेय-स्तत्र आह परमपुरुषार्थेति। एतदेव स्पष्टयति मुमुक्षोरिति। वक्ष्यमाणयुक्तेरात्मा न पुरुषार्थ इति भावः। ननु अनित्यं सांसा-रिकं सुखं क्षयित्वात् भवतु तावदुपेक्षणीयम् आत्मनो नित्यत्वेन क्षयित्वादिदोषानाकलितत्वात् कथं न उपादेयतेत्याशङ्क्य नित्यत्वं तावदङ्गीकृत्यापि उपादेयत्वं निराकरोति तत्र

आत्मविनाशस्य ग्रहीतुमशक्यत्वात् च स्वसत्ता-कालि ग्राह्याभावात् ग्राह्यकाले ग्राहकाभावात्। न च परिच्छिन्नत्वात् अस्य अनित्यत्वमनुमेयम् आत्मत्वात् आत्मा हि अपरिच्छन्नः।

यत आहुः।

इत्यादिना। तत्र यद्यपि आत्मा नित्यस्तथापि तस्य अनुपादेयत्वम् एव इति व्यवहितेन अन्वयः। नित्य आत्मा अविनाशित्वात् आकाशवत् न च स्वरूपासिद्धिः आत्मविनाशस्य तत् सामग्र्याभावेन दुर्निरूपत्वात् इत्यभिप्रेत्य हेतुमाह विनाशेति। समवायिकारणनाशो वा असमवायिकारणनाशो वा द्रव्यनाशसामग्रीपरैरिष्यते नच अकार्य्यस्य आत्मन उभयमस्ति अकार्य्यत्वञ्च अनाद्यदृष्टप्रवाहाधारत्वात् इति प्रागेव उक्तमिति। ननु कार्य्यदर्शनञ्चेदस्ति तर्हि सामग्र्यपि कल्प्यतामिति न इत्याह आत्मविनाशस्येति। अशक्यत्वम् उपपादयति स्वसत्तेति। स्वमात्मा आत्माभावो ग्राह्यः ग्राह्यकाले आत्मविनाशकाले ग्राहकस्य आत्मनो भावादिति न च अन्येन आत्मना अन्यस्य आत्मनो भावो ग्रहीष्यते इति साम्प्रतं ग्राह्यस्य आत्मत्वाभात् आत्मीयाभावस्य ग्रहीतुम् अशक्यत्वात् किं च तद्ग्रहणं प्रत्यक्षम् अनुमानं वा ? नाद्यः अन्यात्मनः अन्यात्मानं प्रति अतीन्द्रियत्वेन तत्प्रतियोगिकसंसर्गाभावस्य ग्रहीतुम् अशक्यत्वात् संसर्गाभावप्रत्यक्षत्वे प्रतियोगिप्रत्यक्षत्वस्य तन्त्रत्वात्।

नापि द्वितीय इत्याह न चेति। परिच्छिन्नत्वहेतोरपक्षवृत्तित्वात् इत्याह आत्मत्वादिति। परिच्छिन्नत्वेऽपि

यच्चाप्नोति यदादत्ते यच्चात्ति विषयानिह।
यच्चास्य सन्ततो भावस्तस्मात् आत्मेति कथ्यते॥

व्यापकस्य अपि गगनादेरनित्यत्वं दृष्टमिति चेत् ? न, व्यापकत्वापरिज्ञानात् सर्वसम्बद्धत्वं हि व्यापकत्वं सर्वस्मिन् सर्वात्मना सम्बद्धत्वम्

आत्मत्वं किं न स्यादिति आशङ्क्य आत्मशब्दार्थम् आह आत्माहि इति। वस्तुकालदेशैः अपरिच्छिन्नत्वात् आत्मा इत्यर्थः। उक्तमर्थं वेदव्यासोक्त्या द्रढ़यति यत आहुरिति। यस्मात् अर्थे यच्छब्दः च समुच्चये यस्मात् कृत्स्नादनात्मनो निरवशेषतया व्याप्नोति इति आत्मा यस्मात् सुषुप्त्यादौ अज्ञान-कार्य्यादनात्मनोऽज्ञानवशादेव आत्मनि उपसंहरति इति वा तस्मात् आत्मा इत्याह यदादत्ते इति। यस्मात् च विषया न विषयाभिमुखा वृत्तिरतिप्रकाशयति तस्मात् च आत्मा इत्याह यच्चात्ति इति। यस्मात् च अस्य निरूपणीयत्वेन प्रकृतस्य सन्ततो नैरन्तर्य्येण भावोऽवस्थितिः स्वस्मिन्नेव न अन्यत्र अन्यस्य अनात्मनोऽभावात् तस्मात् सातत्येन अतति इति आत्मगमनफलं हि तत्तद्देशावस्थितिः। नच आत्मव्यतिरिक्तं वस्त्विति तस्मात् आत्मनि एव स्वरूपे पूर्णतया अवस्थितिरेव सन्ततो भाव इत्याह यच्च अस्य इति। तथाच परिच्छिन्नत्वं स्वरूपासिद्धं ततश्च आत्मा नित्यः अपरिच्छिन्नत्वात् व्यतिरेके घटादिवदिति स्थितम्।

अत्र अनुमाने व्यभिचारं शङ्कते व्यापकस्य अपि इति। गगनादौ साध्याभाववद्वृत्तित्वाभावेन परिहरति न इति। गगनादौ

अननुगतानामधिष्ठानमिति यावत् न हि अन्येनान्यत्सर्वात्मना व्याप्यते व्याप्यस्वरूपासत्त्वप्रसङ्गात् व्यापकस्वरूपविनिर्मुक्तस्वस्वरूपाभावात् अन्यथा सर्वात्मना व्याप्त्यसम्भवात् । न च

व्यापकत्वाभावं वक्तुं व्यापकस्वरूपमाह सर्वेति । ननु सर्वसम्बद्धत्वं नाम सर्वसंयोगित्वं तच्च गगनादावस्त्येव इति तत्राह सर्वस्मिन्निति । ननु आकाशादयोऽपि सर्वस्मिन् सर्वात्मना सम्बद्धा एव तेषां निरवयवत्वेन एकदेशेन सम्बद्धत्वाभावादिति तत्राह अननुगतानामिति । अननुगता हि परस्परव्यभिचारिणः अधिष्ठानं सत्ताप्रदम् । ननु व्यभिचार्य्येव व्यभिचार्य्यन्तरस्य अधिष्ठानं किं न स्यादिति न इत्याह नहि इति । अन्यत् घटादि अन्येन अनात्मना पटादिना सर्वात्मना निःशेषतया व्याप्यते सत्क्रियते इति नहि इति योजना सर्वात्मना व्याप्त्यभावे हेतुमाह व्याप्येति । व्याप्यं स्वरूपतो सत् स्यात् इत्यर्थः । सत्ताद्वयस्य एकत्रायोगात् इत्याह व्यापकेति । व्यापकस्य स्वरूपं सद्रूपतादवस्थ्यविनिर्मुक्तस्य व्याप्याननुगतस्य घटादेः स्वरूपस्य अभावात् तथाच यत् प्रयुक्तसत्तया घटादिव्याप्यं सत्तदेव वस्तु सत् स्यात् न व्याप्यमिति । ननु व्याप्यस्य व्यापकप्रयुक्तसत्वेऽपि स्वरूपसत्ता न विरुद्ध्यते देशान्तरे व्यापकसत्वम् एकदेशान्तरे स्वसत्तेति व्यवस्थोपपत्तेरिति न इत्याह अन्यथा इति । यस्मिन् एकदेशे व्याप्यं स्वरूपं सत् तस्मिन् अपि देशे व्यापकव्याप्तिरस्ति न वा? अस्ति चेत् किं व्याप्यसत्तया व्यापकसत्तया एव तत्र सद्व्यवहारोपपत्तेः

कालदेशवस्त्वपरिच्छिन्नेऽपि आत्मनि प्रमाणान्तरापेक्षा भानुवत् स्वयम्प्रतिभातत्वात् सर्वजगदवभासकत्वेन श्रुतौ प्रसिद्धत्वात्।

"तमेव भान्तमनुभाति सर्वम्।

तस्य भासा सर्वमिदं विभाति॥

इति श्रुतेः। तथापि सुखदुःखाभावेतरत्वात् अनुपादेयत्वमेव।

ननु किमिदम् अनुपादेयत्वम्? आदानक्रियाऽविषयत्वं वा? इच्छाविषयत्वविरहो वा?

नास्ति चेत्? तर्हि सर्वात्मना न व्याप्तिसिद्धिरिति नान्यदन्यस्य अधिष्ठानमिति। सर्वाधिष्ठानमात्मैव न गगनादिः इत्यर्थः। एतावता आत्मा अयं सर्वसंबद्ध इति चरणो व्याख्यातः। ननु तथापि आत्मनो न सर्वाधिष्ठानत्वं जड़त्वेन अज्ञातत्वायोगात् जड़त्वं च सर्वप्रत्ययवेद्यत्वात् इति तत्र आह नच इति। स्वयं प्रतिभातत्वं साधयति सर्वेति। सर्वं हि आत्मभास्यं तेन च कथम् आत्मा भासयितुम् शक्यते न हि घटः प्रदीपं भासयति इति शक्यते वक्तुं तस्मात् स्वयम्प्रतिभात एव आत्मेत्यर्थः। यद्यपि नित्य आत्मा क्षयित्वदोषानास्कन्दितत्वात् उपादेय इति युज्यते तथापि तस्य उपादेयत्वं न सम्भवति इत्याक्षिपति तथापि इत्यादिना। आत्मा अनुपादेयः सुखदुःखाभावेतरत्वात् घटादिवत् इत्यर्थः।

सिद्धान्ती साध्यमाक्षिपति ननु इति। अनुपादेयत्वं विकल्पग्रपराकर्त्तुं विकल्पयति आदानेत्यादिना। अविषयत्वमिति

स्वकृतिसाध्यत्वविरहो वा? एतत् विशेषितसुख-दुःखाभावेतरत्वं वा? विशेष्यमेव वा? अन्यद्वा? न आद्यः, इष्टापत्तेः सुखदुःखाभावयोः अनुपादेयत्वापत्तेश्च न हि सुखं वा दुःखाभावो वा आदानक्रियया विषयीक्रियते, न द्वितीयः? इच्छातद्विषयत्वयोरपि उपादेयत्वापत्तेः।

छेदः। एतत् इति एतेन स्वकृतिसाध्यत्वविरहेणेति विशेष्यमेव इति सुखदुःखाभावेतरत्वमात्रमित्यर्थः। सम्भावितपक्षान्तरसंग्रहायाह अन्यदिति। आदानक्रियाया अविषयत्वम् आत्मनि परैः सिद्धान्तिभिरपि स्वीक्रियते यतः स्पर्शवत् क्रियावत् एव हस्तादिभिरानयनं न अक्रियस्यात्मन इति इष्टापत्त्या आद्यं दूषयति न आद्य इत्यादिना। तथा च अनुमानेन सिद्धसाधनमिति भावः। किञ्च न इदम् अनुपादेयत्वलक्षणम् अलक्ष्ये सुखादौ गतत्वादिति दूषणान्तरमाह सुखेति। लक्षणं तत्र उपपादयति नहि इति। इच्छाविषयत्वस्य विरहो यत्र सः अनुपादेय इति द्वितीयं पक्षं दूषयति न द्वितीय इति। परस्परविरोधेन प्रकारान्तरस्थितिरिति न्यायादिच्छाविषयत्वानधिकरणत्वस्य अनुपादेयत्वे इच्छाविषयत्वम् उपादेयत्वं पर्य्यवस्यति। तत्र इच्छातद्विषयत्वाभ्यां विशिष्टो यो विषयः स उपादेय इति उच्यते ताभ्याम् उपलक्षितं विषयस्वरूपमात्रं वा आद्यं पराकुर्वन् हेतुमाह इच्छेति। द्वितीयम् उत्थापयति ताभ्यामिति। तत्रापि इदं विवेचनीयं यावानिच्छाविषयस्तावान् सर्वोऽपि उपादेयः उत इच्छाविषयैकदेशः अथवा

ताभ्याम् उपलक्षितं विषयस्वरूपमिति चेत्? न, दुःखस्य अपि उपादेयत्वापत्तेः ज्ञानविषयस्य एव इच्छाविषयत्वात् इच्छाजनकस्य च ज्ञानस्य सविकल्पकत्वेन दुःखाभावविशेषणदुःखविषयत्वात्। विषयैकदेश इति चेत्? न, सुखे तदभावात् इच्छाविषयविशेष्य-

इच्छाविषयविशेष्यमात्रमिति तत्र आद्यं निराचष्टे न इति। हेतुमाह दुःखेति। ननु दुःखं कोऽपि न इच्छति इति शङ्कापाकरणाय आह ज्ञानेति। दुःखाभावं तावत् पुरुषार्थतया सर्वे विदन्ति तादृक्वेदनेन यावानर्थो विषयीक्रियते तावन्तमर्थमिच्छापि विषयीकरोति ज्ञानेच्छाकृतीनां समानविषयत्वनियमात्। ननु दुःखाभावज्ञानेऽपि दुःखं विशेषणतया प्रतियोगित्वेन न विषयः तस्य निर्विकल्पकत्वेन वैशिष्ट्यानवगाहित्वात् इति तत्र आह इच्छाजनकस्येति।

नहि किञ्चित् इदमिति निर्विकल्पकमिच्छां जनयितुम् अलं विषयसौन्दर्य्यानवभासकत्वात् विषयसौन्दर्य्यज्ञानजन्या हि इच्छेति न्यायविदां स्थितिः। न हि विषयसौन्दर्य्याद्यवगाहि तत् ज्ञानं निर्विकल्पकं युक्तं वैशिष्ट्यावगाहित्वात् अतएव आह सविकल्पकत्वेन इति। अस्तु दुःखाभावज्ञानं सविकल्पकं तथापि कथं तस्य दुःखविषयतेति तत्राह दुःखेति। अभावज्ञानस्य विशिष्टविषयत्वेन प्रतियोगिदुःखविशेषणविषयत्वात् इत्यर्थः। ततो यावानिच्छाविषयस्तावान् सर्वोऽपि उपादेयश्चेत् कथं न दुःखम् उपादेयमिति स्थितम्। द्वितीयं शङ्कते विषय

स्वरूपमात्रम् उपादेयमिति चेत्? न, अहं स्वर्गी स्यामित्यत्र आत्मनोऽपि तथात्वापत्तेः। न तृतीयः, स्वकृतिसाध्ययोरपि दुःखतत्साधनयोः अनुपादेयत्वात्। न चतुर्थः, विशेषणवैयर्थ्यात्।

इति। अव्याप्त्या दूषयति न इत्यादिना। नहि सुखविषयिण्या इच्छायाः सुखम् एकदेशो विषयान्तराभावात् इत्यर्थः। ननु न सुखमात्रं पुरुषार्थः किन्तु आत्मीयं तथाच इच्छापि आत्मीयसुखविषयिणी इति कथं सुखे इच्छाविषयैकदेशत्वाभाव इति चेत्? न, सुखे पुरुषार्थत्वस्य आत्मोपाधिकत्वापत्तेरिति तृतीयं शङ्कते इच्छेति। तथाच न दुःखे उपादेयत्वम् इच्छाविषत्वेऽपि विशेष्यत्वाभावात् इत्यर्थः। अहं स्वर्गी स्यामिति इच्छायाः स्वर्गविशेषणविशिष्टात्मविषयाविषयविशेष्यस्य आत्मनोऽपि पूर्वपक्ष्यनभिमतोपादेयत्वापत्त्या द्वितीयपक्षे तृतीयं पक्षं दूषयति न अहमिति। अनुमाने च बाधापत्तिरिति भावः। स्वकृतिसाध्यत्वस्य विरहो यस्मिन् अर्थे सोऽनुपादेय इति तृतीयं पक्षं पराचष्टे न इत्यादिना। ततश्च अव्याप्तिरिति भावः। एतद्विशेषितसुखदुःखाभावेतरत्वम् अनुपादेयत्वमिति चतुर्थः पक्षः विशेष्यमात्र उक्ते सुखसाधने यागादावनुपादेयता स्यात् तन्निवृत्तये विशेषणं तत् तत्र न अस्ति इति नातिव्याप्तिरिति तमेतं पक्षं दूषयति न इति। हेतुमाह विशेषणेति। सुखसाधनस्य यागादेर्न स्वप्राधान्येन उपादेयता किन्तु सुखोपाधिकीति विशेष्यमात्रे लक्षणत्वेन स्वीकृतेऽपि नातिव्याप्तिः परमपुरुषार्थत्वाभावस्य सुखसाधनेऽपि इष्टत्वादिति विशेषणं व्यर्थमित्यर्थः।

न पञ्चमः, साध्याऽवैशिष्ट्यात्। अन्यस्य निर्वक्तुमशक्यत्वात् दुःखतत्साधनतादात्म्यस्य अनभ्युपगमपराहतत्वात्। न च सर्वात्मकत्वव्याघातः सर्वाधिष्ठानत्वस्यैव सर्वात्मकत्वस्यार्थत्वात् न हि सत्यस्य मिथ्यातादात्म्यमस्ति सत्यत्वविरोधात्। तथा च अनुपादेयत्वस्यैव निर्वक्तुमशक्यत्वात् किमिदम् अनुपादेयत्वम् आत्मनः अनिष्टम् आपाद्यते इति चेत्?

न, इतरानुपसर्जनत्वस्यैव उपादेयार्थत्वात् तच्च सुखदुःखाभावयोः एव अन्येषां तदुपस-

सुखदुःखाभावेतरत्वम् अनुपादेयत्वमिति पञ्चमं पक्षं पराचष्टे न पञ्चम इति। साध्येति तथाच सन्दिग्धासिद्धो हेतुरनुमाने दोष इति भावः। सम्भावितं षष्ठं पराचष्टे अन्यस्येति।

ननु किमिति निर्वचनाशक्तिर्दुःखाद्यात्मकस्यैव अनुपादेयार्थत्वादिति न इत्याह दुःखेति। आत्मनो दुःखाद्यनात्मकत्वेऽपसिद्धान्तं शङ्कित्वा पराचष्टे नच इत्यादिना। आत्मनः सर्वाधिष्ठानत्वं नाम अध्यस्तस्य सत्तास्फुर्त्तिप्रदत्वम् नतु मिथ्याकार्य्यात्मकत्वमपि कुत इत्यत आह नहि इति। मिथ्यानिर्वचनीयं दुःखादिमिथ्यात्मकदुःखादितादात्म्ये सत्यत्वक्षतेरिति हेतुमाह सत्येति। सिद्धान्ती स्वपूर्वपक्षम् उपसंहरति तथाच इति। आपाद्यते साध्यते इत्यर्थः।

तमेवं सिद्धान्तिशङ्कितदोषं पूर्वपक्षी पराचष्टे न इति। तत्र

र्जनत्वात् सुखदुःखाभावेतरश्चात्मा भावरूपत्वेन दुःखाभावानात्मकत्वात्। सर्वशून्यात्मकत्वे दुःखाभावात्मकत्वमपि अस्ति इति चेत्? न, विज्ञातुरात्मत्वात् न च शून्यं विज्ञातृ न च विज्ञानं शून्याश्रयम् अभावस्य भावधर्मकत्वानुपपत्तेः।

हेतुमाह इतरेति। अनुपादेयत्वम् हि उपादेयत्वेन प्रतियोगिना निरूप्यते तेन विना दुर्ज्ञानमिति तदर्थं प्रतियोग्युपादेयत्वम् अन्यानुपसर्जनत्वरूपं विज्ञेयम् इत्यर्थः। अन्यानुपसर्जनत्वं तर्हि आत्मनि वर्त्ततां न इत्याह तच्चेति। एवकारव्यावर्त्त्यमाह अन्येषामिति। आत्मादीनां तदुपसर्जनत्वात् सुखदुःखाभावौ प्रति उपसर्जनत्वात् आत्मा तावत् सुखादीन् प्रति अधिकरणतया उपसर्जनमेवमन्यदपि ऊह्यम्। ननु सुखं वा दुःखाभावो वा? आत्मैव ततः कथं तस्य उपसर्जनत्वमिति तत्राह सुखेति। आत्मनो दुःखाभावरूपतां पराचष्टे भावेति। नच दुःखाभाववादिनं प्रति भावरूपत्वेन इति स्वरूपासिद्धो हेतुरिति साम्प्रतम् अहमिति हि आत्मप्रतीतिरिति अविवादम्। नच इयं प्रतीतिः दुःखनिरूप्या दुःखाप्रतीतावपि जायमानत्वात् ततो दुःखानिरूप्यत्वाद्भाव एव आत्मेति। ननु अव्यभिचार्य्यात्मा अव्यभिचारि च शून्यं ततश्च सर्वेषां तत्त्वं यत् शून्यं स एव आत्मा न भावः ततो दुःखाभावात्मकत्वमपि अस्ति इति कश्चित् शङ्कते सर्वेति।

आरोपितो धर्मधर्मिभाव इति चेत्? तर्हि आरोप्यस्य अधिष्ठानं वाच्यम् न हि निरधिष्ठानो भ्रमोऽस्ति। शून्यमेव इति चेत्? तर्हि शून्यव्यामिश्रमेव सर्वः सर्वं प्रतीयात् न च तथा अस्थि सत्त्वेनैव सर्वस्य प्रतीतेः। किं च सर्वस्य आरोपितत्वे आरोपाधिष्ठानस्य पूर्वमेव सिद्धिर्वाच्या सा च स्वत एव इति कथं शून्यं स्यात् न हि शून्यं स्वतः सिद्ध्यति अन्यथा परि-

शून्यं ज्ञेयं वा? ज्ञातृ वा? आद्यं निषेधति नेति। ज्ञेयत्वे आत्मत्वं न स्यात् विज्ञातुरेव आत्मत्वात् अन्यथा घटादीनामपि आत्मत्वापत्तेरिति द्वितीयं निरस्यति नच इति। ज्ञानानाश्रयत्वात् इत्यर्थः। नच ज्ञानानाश्रयत्वं शून्यस्य अयुक्तमिति आह नच इति। शून्यं खलु सर्वाभावः नच स भावस्य आश्रयो भवितुम् अर्हति। अभावस्य भावधर्माश्रयत्वादर्शनादिति हेतुमाह अभावस्येति। ननु यद्यपि अभावो न भावाश्रयः प्रमाणात् तथापि भ्रमात् कल्पनया तथा अस्तु।

नहि भ्रमस्य किञ्चित् अशक्यमस्ति इति शङ्कते आरोपित इति। तर्हि यदन्विततया आरोपितं प्रतीयते स आरोपविषयाधिष्ठानं प्रकृतारोपे अस्ति न वा? अस्ति चेत्? तर्हि तद्वाच्यमित्याह तर्हि इति। द्वितीयं प्रत्याचष्टे नहि इति। सर्वत्र भ्रमे हि आकारस्य अनुभवादितिशेषः। अधिष्ठानसत्वपक्षे तद्वाच्यम् इति उक्तं तत्र किं शून्याधिष्ठानम्? उत शून्यमेव इति?

भाषामात्रत्वापत्तेः तस्मात् भावरूपत्वादेव दुःखा-भावानात्मकत्वम्। न च सुखात्मकत्वं स्रगादि-विषयज्ञानाऽजन्यत्वात् सुखस्य च तज्जन्यत्वात् अन्यथा तदर्थितया तदुपादानानुपपत्तेः। जन्याजन्ययोश्च अभेदानुपपत्तेः।

न च सुखसंबद्ध एव तेन जन्यः सुखं मे जातमिति प्रतीतेः सुखात्मनोः संबन्धस्य सम-वायस्य अजन्यत्वाच्च। न च स्वात्माऽसंबद्धे स्वतन्त्वे

नाद्यः, शून्यतायाः कल्पितत्वप्रसङ्गात् अधिष्ठानभिन्नस्य कल्पित-त्वात् द्वितीयं शङ्कते शून्यमेव इति। अध्यस्तं हि अधिष्ठानानु-गततया तत्तादात्म्येन प्रतीयते नच आरोपिते शून्यानु-गतिरस्ति। आरोपितस्य सत्तेनैव प्रतीतेरिति दूषयति तर्हि इत्यादिना। किञ्च तत् शून्यं सर्वभ्रमाधिष्ठानम्? उत क्वचिदेव? आद्ये तस्य प्रतीतिर्वाच्या ज्ञानस्यैव अधिष्ठानत्वात् सा च प्रतीतिः स्वतः परतो वा? परतश्चेत्? न परस्य सर्वस्य कल्प-नातः प्रागसिद्धेः सिद्धौ वा कल्पितत्वक्षतेः। स्वतश्चेत्? तर्हि शून्यत्वक्षतिरित्याह किञ्च इत्यादिना। ननु शून्यं स्वत एव सिद्ध्यतु को दोषस्तत्राह न होति। ज्ञानानात्मकत्वादित्यर्थः। अस्तु तर्हि स्वप्रकाशत्वाय तस्य ज्ञानात्मकतापि सर्वतो बलवती हि अन्यथानुपपत्तिरिति चेत्? तत्राह अन्यथेति। स्वप्रकाशज्ञानस्य जगदधिष्ठानस्य शून्यमिति नामकरणे परिभाषामात्रं तन्न वस्तुतः शून्यं भावरूपत्वात् इत्यर्थः। यदि क्वचिदेव भ्रमे शून्यमधिष्ठानं न सर्वत्र तर्हि व्यभिचारित्वात् न स आत्मेति।

सुखे प्रमाणमस्ति त्वया च अङ्गीक्रियते त्वयापि आत्मतादात्म्यापन्नस्य नित्यसुखस्यैव स्वीकारात्। किं च सुखात्मनोस्तादात्म्ये अहं सुखमिति प्रतीतिप्रसङ्गः न च तदस्ति तस्मात् सुख-

सिद्धो भावरूप आत्मेति उपसंहरति तस्मादिति। भावत्वव्यवस्थापनस्य फलमाह दुःखाभावेति। आत्मनि दुःखाभावतां पराकृत्य सुखान्यत्वं प्रतिज्ञातम् उपपादयितुम् उपक्रमते न चेति। आत्मा न सुखरूपः अकार्य्यत्वादाकाशवत् इत्यर्थः। यद्वा आत्मा न सुखरूपः विषयज्ञानाजन्यत्वात् यत् सुखं तत् विषयज्ञानजन्यं यथा सम्प्रतिपन्नं सुखमित्यर्थः। आत्मनो विषयप्रतीत्यजन्यत्वेऽपि सुखता किं न स्यादिति तत्राह सुखस्येति। तज्जन्यत्वात् स्रगादिविषयज्ञानजन्यत्वनियमादित्यर्थः अन्यथेति। तदजन्यत्वे इत्यर्थः। तदर्थितया सुखार्थितया तदुपादानं स्रगादिविषयोपादानं तत् न स्यात् इत्यर्थः। नहि अकार्य्यार्थी कारणमुपादत्ते पिपासोपशान्त्यर्थमपि कठिनद्रव्योपादानप्रसङ्गादिति जन्याजन्येति। जन्याजन्यत्वरूपविरुद्धधर्माध्यासात् सुखात्मनोरभेदस्तादात्म्यं न युक्तमित्यर्थः। ननु सुखे जन्यत्वमसिद्धं तस्य अकार्य्यत्वात् कथं तर्हि सुखार्थी स्रगादि उपादत्ते।

आत्मनि नित्याकार्य्यसुखसम्बन्धायेति न इत्याह नच इति। तेन उपात्तस्रगादिना इत्यर्थः। तत्र प्रतीतिपराहतिं हेतुत्वेन आह सुखमिति। सुखस्वरूपोत्पत्तिप्रतीतेर्न तत्सम्बन्धांशे साधनोपादानमन्यथा सिद्धमित्यर्थः। किञ्च सुखात्मनोः

दुःखाभावान्यत्वात् अनुपादेय एव आत्मा। न च ताभ्यामन्यः पुरुषार्थोऽस्ति येन आत्मा मुमुक्षूणाम् उपादेयः स्यात्।

सम्बन्धः समवायो वा संयोगो वा? आद्ये तदंशे साधनोपादानं न क्षीणं तस्य सत्त्वे सति नित्यत्वेन अजन्यत्वादित्याह सुखात्मनोरिति। द्वितीयं प्रत्याचष्टे नच इति। अप्राप्तयोः स्वतन्त्रयोः प्राप्तिर्हि संयोगः स्वात्मासम्बद्धेऽप्राप्ते अतएव आह स्वतन्त्र इति। प्रमाणं नास्ति इति न सुखात्मसंयोगे साधनोपादानमन्यथासिद्धमित्यर्थः। ननु स्वतन्त्रे नित्ये सुखे अस्ति प्रमाणं नित्यमानन्दमिति श्रुतौ सामानाधिकरण्यप्रतीतिः मयापि च श्रुतिमात्रप्रमाणकेन अयमेव अर्थः स्वीक्रियत इति कथं न तत्र प्रमाणास्तित्वं कथं वा न मम अङ्गीकार इति तत्राह त्वयापि इति। स्वातन्त्र्यं नाम न नित्यत्वं किन्तु आत्मभिन्नतया ताटस्थ्येन अवस्थितिः नच सुखं तादृक् त्वया स्वीक्रियते ब्रह्मपदसामानाधिकरण्येन आत्मतादात्म्यापन्नस्यैव सुखस्य स्वीकारादात्मन एव च ब्रह्मत्वादित्यर्थः। ननु तर्हि श्रुतिबलादेव सिद्धमात्मसुखयोस्तादात्म्यं त्वां मां च प्रति श्रुतेरविशेषादिति चेत्? न, भेदग्राहकप्रत्यक्षविरोधेन श्रुतेरयोग्यतया उपचारपरत्वादन्यथा अहं सुखमिति कोऽपि प्रतीयादिति हेत्वन्तरमाह किञ्चेति। यस्मात् पूर्वोक्तयुक्तिभिरात्मनः सुखदुःखाभावान्यत्वं सिद्धं तस्मात् उपसर्जनरूपानुपादेय एव आत्मेति सिद्धमित्यनुपादेयत्वसाधनमनुमानं निगमयति तस्मादिति। आत्मानुपादेयः सुखदुःखाभावेतरत्वात् घटादिवत् व्यतिरेके सुखादिवत् इत्यर्थः।

न च आत्मत्वमेव परमपुरुषार्थताप्रयोजकं तथा लोके व्यवहाराभावात्। सुखं मे स्यात् दुःखं माभूदिति आत्मसम्बन्धिसुखदुःखाभावयो-

ननु हेतुरस्तु मास्तु च अनुपादेयत्वरूपं साध्यम् आत्मनि किं विपक्षे बाधकमिति तत्राह न चेति। हेत्वभावे साध्यमेव न स्यात् न हि सुखदुःखाभावाभ्याम् अन्यः कश्चित् अर्थः पुरुषार्थोऽस्ति येन तत्र व्यभिचारेण उक्तहेतोः साध्यागमकत्वात् उक्तहेतुमति अपि आत्मनि पूर्वोक्तं साध्यं न सिद्ध्येदिति आत्मनः सुमुक्षूपादेयता स्यात् न च एवम् अस्ति इत्यर्थः। ततः साध्याभावे हेतुरेव न स्यादिति हेत्वभावापत्तिः विपक्षे बाधिकेति भावः। अस्तु तर्हि आत्मनि अनुपादेयत्वसाध्ये आत्मेतरत्वम् उपाधिः नच साध्याव्याप्तिः उपाध्यभावस्य आत्मत्वस्य साध्यानुपादेयत्वाभावेन पुरुषार्थेन व्याप्तत्वात् ततो न भवदीयो हेतुः साधुरिति न इत्याह न चेति। प्रयोजकं बोधकमित्यर्थः। न पक्षेतरत्वं उपाधिः अनुमानमात्रोच्छेदापत्तेः कथं तर्हि तेजोऽनुष्णतानुमाने तेजोभिन्नत्वमुपाधिः तस्य बाधोन्नीतत्वात् न च तथा प्रकृते बाधोऽस्ति लोके आत्मनः पुरुषार्थत्वेन उपादेयतया व्यवह्रियमाणादित्याह तथेति। ननु अगत्या आत्मन एव उपादेयत्वं लोके वाच्यम्? अन्येषाम् आत्मभिन्नानाम् अपुरुषार्थत्वात् न च सुखादिकं पुरुषार्थः परसुखादेरपि तथात्वापत्तेः आत्मीयं तथेति चेत् तर्हि आत्मैव पुरुषार्थतया व्यवहर्त्तव्य इति चेत्? न इत्याह सुखं मे स्यादिति। अयम् अत्र आशयः निरुपाधीच्छाविषयो हि पुरुषार्थत्वात् उपा-

रेव काम्यमानत्वात्। न च आत्मा मम स्यादिति कामना अस्ति न च अकाम्यमानः पुरुषार्थः।

न च अयमलौकिकः पुषार्थः। लोक-

देयः स एव च तथा व्यवहारयोग्यः सुखं दुःखाभावश्च तथा न च आत्मसम्बन्धिनौ एव तौ तथा न शुद्धौ इति वाच्यम् आत्मनः सुखदुःखाभावौ प्रत्यधिकरणतया कारकत्वात् कारकस्य च उपसर्जनत्वेन वस्तुतोऽनुपादेयत्वादिति। ननु सुखं मे स्यादिति कामना आत्मसुखविषयिणी तत्र सुखवत् आत्मापि विषयोऽस्तु किमिति औपाधिकस्तत्र काम इति तत्राह न चेति। सुखानुपहिते केवले आत्मनि कामनाया अदर्शनात् तदुपहिते च तस्मिन् दर्शनात् सुखादिकमेव काम्यं न आत्मा ततो न आत्मा पुरुषार्थ उपादेय इत्यर्थः। ननु आत्मलाभात् न परं विद्यते। आत्मकाम इत्यादि श्रुतिबलात् मनः काम्यमानत्वावगतेः पुरुषार्थता इति चेत्? इति न इत्याह न चेति। सत्यं श्रुतिरस्ति इति सापि किं स्वस्या अविरोधसिद्धये लोकव्यवहारम् अपेक्षते न वा? अपेक्षते चेत्? तर्हि तदभावे कथम् आत्मनः काम्यमानतया पुरुषार्थतां प्रतिपादयेदिति न चेति प्रतिज्ञायां हेतुमाह लोकेति। तथाच मञ्चाः क्रोशन्तीतिवत् लोकविरोधे श्रुतिः उपचरितेति भावः। ननु श्रुतिः किमिति स्वार्थबोधने लोकव्यवहारम् अपेक्षते विरोधपरिहारायेति चेत्? न, लोकव्यवहारस्य बाधेनापि विरोधपरिहारोपपत्तेः।

नच श्रुतिरेव बाध्या तत्परत्वात् तथाच किं लोकव्यवहारा-

व्यवहारानुल्लङ्घनेनैव वेदेन पुरुषार्थप्रतिपादनात्। अन्यथा अलौकिकत्वात् स्वर्गस्यापि सुखरूपता न स्यात्। किं च किमयं लोकोत्तरः येन ऐहिकं पारत्रिकं च ससाधनं सर्वं पुरुषार्थं परित्यज्य आजन्मब्रह्मचर्य्याद्यशेषदुःखजातेन आत्मानमवसादयन् अलौकिकः पुरुषार्थोऽय-

पेक्षणेनेति तत्राह। अन्यथेति लोकव्यवहारानपेक्षणे ज्योतिष्टोमेन स्वर्गकामो यजेत इत्यत्र काम्यमानः स्वर्गस्तावत् पुरुषार्थ इति वस्तुस्थितिः तत्र वैदिकत्वमात्रेण स्वर्गस्य पुरुषार्थत्वे सुखरूपता न स्यात् सुखे स्वर्गपदस्य वेदे नासङ्केतितत्वात् यदा च लौकिकपुरुषार्थव्यवहारं वेदोऽनुसरति तदा लोके द्विविधस्यैव पुरुषार्थत्वात् स्वर्गस्य दुःखाभावरूपत्वे गौरवात् भावरूपसुखात्मकतैव युक्ता नच तत्परत्वात् श्रुतिर्बाधिका समुच्चयेन उभयप्रामाण्योपपत्तौ अन्यतरबाधकल्पनायोगादिति। ननु स्वर्गकामश्रुतौ श्रुतस्वर्गस्य सुखरूपता लोकानुसारात् इति अयुक्तं स्वर्गस्य सुखत्वग्राहकार्थवादस्य यत् न दुःखेन संभिन्नमित्यादेः विद्यमानत्वात् तत्र आत्मकामादिश्रुतिबलात् काम्यमान आत्मा पुरुषार्थत्वादुपादेय एवेति तत्राह किञ्चेति। ऐहिकं विषयजन्यं स्रगादिसम्बन्धिसुखं परत्र भवं पारत्रिकं स्वर्गादिसुखसाधनं स्रगादि यागादि च अवसादयन् क्लेशयन्। ननु परमपुरुषार्थकामनया सर्वमेव तत् युज्यते इति तत्राह अलौकिकेति। वेदमात्रसिद्धो ननु लोकतो वा स्वानुभवतो

मात्मेति वदन्नेव कृतार्थः स्यात्। तथाच रागिगीतं।

वरं वृन्दावने शून्ये शृगालत्वं य इच्छति।
न तु निर्विषयं मोक्षं मन्तुमर्हति गौतमः॥ इति।

किं च यदि अयम् आत्मा पुरुषार्थः स्यात् कथं तर्हि अप्रयत्नलब्धमात्मानम् उपेक्ष्य वैषयिकसुख-लोभात् तत्तत्काम्यतीर्थादौ म्रियन्ते प्राणिनः न च ते भ्रान्ताः शास्त्रेणापि तदनुमोदनात्।

वा प्रसिद्ध इति कृतार्थः सिद्धप्रयोजनः तथाच प्रसिद्धसुख-परित्यागेन लोकाप्रसिद्धपुरुषार्थमुद्दिश्य ब्रह्मचर्य्यादिक्लेशो न युक्त इति भावः।

निर्विषयमिति। विषयः स्रक्चन्दनवनितादिः निर्गतो यस्मात् मोक्षात् स तमित्यर्थः। किञ्च अर्के चेन्मधु विन्देत किमर्थं पर्वतं व्रजेत् इति न्यायात् अयत्नेन लब्धं प्राप्तमात्मानम् उपेक्ष्य परित्यज्य प्राणिनो वैषयिकसुखाय प्रयागादौ किमिति म्रियन्ते प्राणं त्यजन्ति तत् प्राणत्यागरूपाप्रवृत्तिरात्मनः पुरुषार्थ-त्वमावेदयति इत्याह किञ्चेति। ननु प्रवृत्तिमात्रं न प्रमाणं प्रमाणमूलाया एव प्रवृत्तेः प्रमाणत्वात् अन्यथा अतिप्रसङ्गात् नच अत्र प्रमाणमस्ति आत्महननिषेधविरोधाच्च तस्मादसदेतत् इत्याशङ्क्याह न चेति। न केवलं शास्त्रमेव अत्र अनुमोदकं किन्तु लोकानुमोदनमपि संग्रहीतुम् अपि शब्दः। न च आत्म-हननिषेधशास्त्रविरोधः तस्य उत्सर्गत्वात् एतस्य प्रयागादि-

न लोकवचनात् तात ! न वेदवचनादपि ।
मतिरुत्क्रमणीया ते प्रयागमरणं प्रति ॥

कुष्ठाद्युपहताश्च दुःखाभावमुद्दिश्य म्रियन्ते इति तु सर्वंजनीनम्। तत्किमनात्मैवोपादेयः। कः संशयः। सुखदुःखाभावयोः तत्साधनानां च पुत्रकलत्रगृहक्षेत्रगोहिरण्यादीनाम् उपादेयत्वस्य अविगीतत्वात्। ननु ऐहिकामुष्मिकसकलसुखतत्साधनजातम् उपेक्ष्य केवलमात्मानमेव उद्दिश्य श्रवणादावपि केचन

मरणशास्त्रस्य अपवादत्वात् न कश्चिद्विरोध इति भावः। तस्मात् आत्मा न पुरुषार्थः किन्तु वैषयिकं सुखमिति स्थितम्।

दुःखाभावस्यापि लोकप्रवृत्त्यैव आत्मापेक्षया पुरुषार्थतामाह कुष्ठेति। अनात्मा एव पुरुषार्थ इति निरूपयितुम् आकाङ्क्षामुत्थापयति तत् किमिति। तर्हि अनात्मकत्वाविशेषात् दुःखादिकमपि किं पुरुषार्थ इति न इत्याह सुखेत्यादिना। ननु ऐहिकामुष्मिकसुखतत्साधनस्य उपादेयत्वमविगीतमिति यदविगानं तत् पामराणां परीक्षकाणां वा ? नाद्यः, पामराविगीतस्य अकिञ्चित्करत्वात् परीक्षकाणामिति चेत् ? न, ऐहिकामुष्मिकसुखादि परित्यज्य आत्ममात्रोद्देशेन श्रवणादौ प्रवृत्तेरविगानायोगादिति चेत् ? इति शङ्कते ऐहिकेति। श्रवणादौ प्रवर्त्तमाना न परीक्षका इति परिहरति त इत्यादिना। ननु कथं ते भ्रान्तत्वात् न परीक्षकाः श्रुतिमूलत्वात् तदीयप्रवृत्तेरिति चेत् ?

प्रवर्त्तन्ते एव इति चेत् ते तर्हि भ्रान्ता भवन्तु बहूनाम् अनुग्रहो न्याय्य इति न्यायात् द्विता एव हि ते। विज्ञानमानन्दं ब्रह्मेति सुखरूपत्वमपि आत्मनः श्रुतौ श्रूयत इति चेत् ?

श्रूयतां नाम न हि एतावता आत्मा पुरुषार्थः न हि सुखम् इत्येव पुरुषार्थः स्वसम्बन्धितयैव तस्य पुरुषार्थत्वात् अन्यथा शत्रुसुखस्यापि पुरुषार्थत्वापत्तेः न हि सुखं

तर्हि आमुष्मिकसुखाद्यर्थप्रवृत्तिरपि श्रुतिमूला न भ्रममूलेति न विगीता तर्हि आत्मनः सुखादेश्च उभयोरपि पुरुषार्थता अस्तु न आमुष्मिकसुखाद्यर्थं साधनानुष्ठातॄणां बहुत्वेन तद्विरोधि श्रवणाद्यनुष्ठातॄणां भ्रान्तत्वात् तन्मूलश्रुतेः अन्यपरत्वादित्यभिप्रेत्य आह बहूनामिति। आत्मा न उपादेयः सुखदुःखाभावेतरत्वात् दुःखादिवत् इति अनुमाने पक्षेतरत्वस्य अनुपाधित्वं बाधानुन्नीतत्वात् इति एतावता सन्दर्भेण व्यवस्थापित आत्मा पुरुषार्थः सुखरूपत्वात् वैषयिकसुखवत् इति सत्प्रतिपक्षं दास्यामि इति अभिप्रेत्य सुखरूपत्वं हेतुं श्रुत्या तावत् समर्थयते विज्ञानमानन्दमिति।

आनन्दात्मकत्वमात्मनः श्रुत्या बोध्यत इति तावदङ्गीकरोति। श्रूयतामिति। तर्हि सत् प्रतिपक्षतासिद्धेति न इत्याह नहि इति। एतावता सुखरूपश्रवणेन अपि इत्यर्थः। सुखरूपत्वमुक्तयुक्त्या न सम्भवति इत्यर्थः। ननु सुखरूपत्वे किमिति न पुरुषार्थ-

सुखस्य पुरुषार्थः। सांसारिकमपि सुखं नाना-दुःखसंभिन्नम् अनुपादेयमेव इति चेत्? न, गत्यन्तराभावात् न हि भिक्षुकभिया स्थाल्यनधिश्रयणम्। आयाति चेत्? दुःखं परिहर्त्तव्यम्। सुखं तु उपादेयमेव।

तेति तत्राह नहि इति। आत्मनः सुखरूपत्वे किं स एव स्वतन्त्रः पुरुषार्थः किं वा सुखात्मनि समवेतं सुखान्तरं? नाद्यः नहि सुखमित्येव पुरुषार्थः अपि तु स्वसम्बन्धि तत् नचाभेदे स्वसम्बन्धिता सम्भवति। ततः सुखात्मा स्वतन्त्रो न पुरुषार्थः इति न प्रतिपद्यानुमानं साधु इत्यर्थः। न द्वितीय इत्याह नहि सुखमिति। सुखात्मनः स्वरूपसुखेनैव तृप्तत्वात् सुखान्तरे कामनायोगात् न सुखान्तरं सुखात्मनः पुरुषार्थः इत्यर्थः। ननु आत्मानुपादेय इति त्वया साधितं वैषयिकसुखं तु बहुदुःखानुविद्धत्वात् अपुरुषार्थत्वात् अनुपादेयमेव तथा च सुखोद्देशेन यागादौ प्रवृत्तिर्बाधितेति सिद्धान्ती शङ्कते सांसारिकमिति। सत्यं सांसारिकं सुखं दुःखानुविद्धमिति। तथापि आत्मा तावत् उक्तयुक्तेः अनुपादेय एव तथा च अगत्या सुखे यथा दुःखानुषङ्गो न भवति तथा यतनीयं न तत् दुःखसम्पर्कभिया सुखं त्यागमर्हति। नहि भिक्षवः सन्ति इति स्थाली नाधिश्रियते मरणप्रसङ्गात् तस्मात् दुःखपरिहाराय एव यतितव्यं न वैषयिकसुखत्याग इति परिहरति न इत्यादिना। ननु आत्मा द्रष्टव्यः श्रोतव्यो मन्तव्य इति वाक्ये

कथं तर्हि आत्मज्ञानार्थं श्रवणादिविधिः दुःखाभावार्थमेव। एवमात्मनोऽपुरुषार्थत्वे प्राप्ते ब्रूमः। य आत्मा सर्ववस्तूनां यदर्थं सकलं जगत्।

प्रथमोपात्तमात्मदर्शनमनूद्य श्रवणमननादि विधीयते तत्र न आत्मज्ञानमेव स्वतः फलं तस्यापुरुषार्थत्वात्। न च मुमुक्षोरधिकारित्वात् मोक्ष एव तत् फलं मोक्षस्य आत्मस्वरूपातिरिक्तस्य अभावात् आत्मभिन्नस्य जन्यत्वेन मोक्षस्य अनित्यत्वप्रसङ्गात् ततः श्रवणविध्यन्यथानुपपत्त्या आत्मैव पुरुषार्थ इति सिद्धान्ती चोदयति कथमिति। आत्मभिन्न एव पुरुषार्थः श्रवणाद्यनुष्ठानफलं न तु आत्मा तस्याजन्यत्वादनित्यत्वाभावरूपत्वानङ्गीकारात् आत्यन्तिकदुःखनिवृत्तेरेव मोक्षत्वादिति। पूर्वपक्षी परिहरति दुःखेति। तथा च श्रवणादिविधिरन्यथोपपन्न इति भावः। दुःखाभावो नायमात्मा सुखं न अपि स इष्यते मुमुक्षुभिरयं तस्मात् उपादेयः कथं भवेत् एवं पूर्वपक्षमनूद्य तन्निरासाय सिद्धान्तं प्रतिजानीते एवमिति। यदुक्तं पूर्वपक्षिणा आत्मा अनुपादेयः सुखदुःखाभावान्यत्वात् दुःखादिवत् इति तत्र अन्यानुपसर्जनत्वम् उपादेयत्वं तदन्यत्वम् अनुपादेयत्वं आत्मा च सुखादिशेषत्वात् उपसर्जनमिति अनुपादेय इति तदेतत् दूषयन् पूर्वपक्षनिरासप्रतिज्ञायां हेतुं संगृह्णाति। य आत्मेत्यादिना।

असौ आत्मा अनुपादेय इति यत् पूर्वपक्षिणा उच्यते तत् कथमिति वद इति अन्वयः। ननु का अनुपपत्तिरुक्तानुमानेन तत् सिद्धिरिति न इत्याह स्वतन्त्र इति। स्वतन्त्रोऽन्यानुपसर्जन इत्यर्थः। तथाच अनुमाने बाध इति भावः। ननु कथमात्मनो-

आनन्दाब्धिः स्वतन्त्रोऽसावनादेयः कथं वद ॥२६॥
यदन्यद्वस्तु तत्सर्वं यद्भेदे नरशृङ्गवत्।
सत्ता सर्वपदार्थानामनादेयः कथं वद॥ २७॥
यद्वशे प्राणिनः सर्वे ब्रह्माद्याः क्रमयस्तथा।
ईशानः सर्ववस्तूनामनादेयः कथं भवेत् ॥२८॥
यच्चक्षुः सर्वभूतानां मनसो यन्मनो विदुः।
यज्ज्योतिर्ज्योतिषां देवो नोपादेयः कथं विभुः॥२९
मोदप्रमोदपक्षाभ्यामानन्दात्मा तमो गतः।

ऽन्यानुपसर्जनत्वं सर्वस्य सुखदुःखाभावशेषत्वादिति तत्राह यदर्थमिति। यदा सर्वं जगदात्मार्थम् आत्मशेषस्तदा सुखादेः आत्मशेषत्वे किमु वक्तव्यमिति भावः। तदुक्तं सुखञ्च पुरुषार्थत्वादिति। आत्मव्यतिरिक्तानां सर्वेषां पदार्थानां परार्थत्वमिति वैशेषिकादयोऽपि च सङ्गिरन्ते तस्मात् आत्मार्थं सकलं जगदित्यर्थः।

किञ्च सुखदुःखाभावान्यत्वं हेतुःस्वरूपासिद्धः कथमिति चेत् तत्राह आनन्दाब्धिरिति। निरतिशयसुखात्मक इत्यर्थः। दुःखाभावत्वम् उपपादयति आत्मेति। घटादीनाम् आत्मा स्वरूपं तद्भेदे घटादेः दुर्निरूपत्वेन असत्वात् भिन्नस्य असतोऽभावः सदेव अभावाभावस्य भावत्वात् सतश्च आत्मत्वादिति युक्त्या आत्मैव दुःखाभाव इति कथं न अनुमाने स्वरूपासिद्धिरिति यच्छब्दोऽसौ इत्यनेन सम्बध्यते। प्रथमपादार्थम् उपपादयति यदन्यदिति। यस्मात् आत्मनोऽन्यत्वेन परैः सम्मतं वस्तु घटादि यद्भेदे आत्मनो भेदे अतएव आत्मा सर्वेषां

जीवयत्यखिलान् लोकाननादेयः स्वयं कुतः॥३०॥
यस्यानन्दसमुद्रस्य लेशमात्रं जगद्गतम् ।
प्रसृतं ब्रह्मलोकादौ सुखाब्धिं कः परित्यजेत्॥३१॥
हैरण्यगर्भमैश्वर्य्यं यस्मिन् दृष्टे तृणायते ।
सीमा सर्वपुमर्थानामपुमर्थः कथं भवेत् ॥३२॥
यत्कामा ब्रह्मचर्य्यन्त इन्द्राद्याः प्राप्तसम्पदः ।
स्वस्वभोगं त्यजन्त्येव न पुमर्थः कथं नृणाम् ॥३३॥

घटादीनां सत्तास्वरूपमित्यर्थः । तथाच स्वस्वरूपस्य सर्वैरिष्यमाणत्वात् स एव पुरुषार्थ इति भावः । द्वितीयपादं व्याचष्टे यद्वशे इति । अनादेयोऽनुपादेय इत्यर्थः । यद्वा ननु अधिष्ठानं सत्तास्फूर्त्तिप्रदं न अन्यत् ईश्वरस्याधिष्ठानं न आत्मा अतः कथं घटादीनां सत्तास्फूर्त्तिप्रद इत्याशङ्क्य अज्ञानवशात् आत्मैव ईश्वरो न अन्य इत्यभिप्रेत्याह यद्वशे इति । स्फूर्त्तिप्रदत्वं वक्तुं प्रकाशताम् आह यत् चक्षुरित्यादिना । आनन्दाब्धिपदं व्याचष्टे मोदेति । इष्टस्मृतौ हर्षो मोदः स एव अभ्यासात् प्रकृष्टः प्रमोदः सुखमात्रम् आनन्दः तस्य पद्मादिकल्पना अज्ञानवशात् इत्याह तमोगत इति । स्वसुखमात्रदानेन लोकान् सुखयति इत्याह जीवयतीति । उत्तरार्द्धार्थमेव स्पष्टयति यस्येति । प्रसृतं प्राप्तम् । आत्मनो निरतिशयसुखरूपत्वे हेत्वन्तरमाह हैरण्यगर्भेति । ननु आत्मा सर्वपुमर्थानां सीमेति कथम् इदि परमैश्वर्य्ये इति स्मृतेरिन्द्रादिसम्पद एव परमपुरुषार्थत्वादिति तत्राह यत् कामा इति । मघवा प्रजापतौ ब्रह्मचर्य्यम् उवासेति श्रुतेरित्यर्थः । ननु यदि आत्मैव पुरुषार्थः कथं तर्हि

यदिच्छाफलाः सर्वा वैदिक्यो विविधाः क्रियाः।
यागाद्या विहितास्तस्मिन् उपेक्षा वद ते कथम्॥३४
यद्दृष्टिमात्रतः सर्वाः कामाद्या दुःखभूमयः।
विनश्यन्ति क्षणेनासावुपादेयः कथं न ते॥३५॥
आह्लादरूपता यस्य सुषुप्ते सर्वसाक्षिकी।
तत्रोपेक्षा भवेद्यस्य तदन्यः स्यात्पशुः कथम्॥३६॥

तमुपेक्ष्य स्वर्गार्थं यागादिविधानमिति तत्राह यदिच्छेति। तमेतं वेदानुवचनेन इत्यादिश्रुतिवशात् अन्तःकरणशुद्धिद्वारा विहितयागादिक्रिया आत्मदिदृक्षाफला एव न वस्तुतः स्वर्गादिफलाः। कथं तर्हि स्वर्गादीनां फलत्वेन श्रवणम्? अज्ञप्ररोचनार्थत्वात् कथमन्यथा सर्वथाप्तः सर्वज्ञो वेदज्ञः क्षयित्वात् अपुरुषार्थं स्वर्गादिकम् उद्दिश्य यागादीन् विदध्यात् तस्मात् अज्ञप्ररोचनार्थमेव स्वर्गादिश्रवणं न फलायेति न कश्चिद्विरोध इति। ननु स्वर्गादिप्ररोचनार्थम् इति अयुक्तम् आत्मदिदृक्षाया अफलत्वात् यागादिफलं न तावदात्मा-जन्यत्वात् न तावदनुभवः तस्य अफलत्वात् न वा तद्दिदृक्षा तस्याः ज्ञानमात्रफलत्वेन स्वतोऽफलत्वात् तस्मात् स्वर्गादिरेव तात्पर्यतो वैधक्रियाफलमिति तत्राह यत् दृष्टीति। यतो ज्ञानमज्ञानस्य निवर्त्तकमिति ब्रह्मसाक्षात्कारात् अज्ञाने निरस्ते तत्यज्ञानमूलाः कामादिमयदुःखभूमयो निवर्त्तन्ते इति। तन्निवृत्तेः आत्मरूपत्वात् आत्मैव पुरुषार्थं इति प्ररोचनार्थमेव स्वर्गादिश्रवणमित्यर्थः। मोदप्रमोदपक्षाभ्याम्

सत्यमितरानुपसर्जनत्वमुपादेयत्वं तच्च आत्मन्येव विश्रान्तं सुखदुःखाभावयोरपि तदर्थत्वात् अन्यथा परसुखदुःखाभावयोरपि उपादेयता स्यात् तस्मात् आत्मैव परमपुरुषार्थः सुखदुःखाभावात्मकत्वाच्च।

इत्यत्र आत्मनः सुखरूपत्वे अर्थात् तस्य प्रियमेव शिर इत्यादिवाक्यानि प्रमाणत्वेन उपन्यस्तानि सम्प्रति सुप्तोत्थितस्य सुखमहमस्वाप्समिति परामर्शसिद्धसुषुप्तिकालीनसुखानुभवोऽपि आत्मनः सुखरूपत्वे प्रमाणमित्याह आह्लादेति। तत्र सुखाब्धावित्यर्थः।

पूर्वपक्षे अनुपादेयत्वस्य आत्मनि साधनाय तत्प्रतियोगित्वेन उपादेयत्वं यन्निरूपितं तत् तावदनुमोदते सत्यमिति। तर्हि आत्मनि उक्तमानेन अनुपादेयत्वसिद्धमिति न इत्याह तच्चेति। चः तु अर्थे तत् तु अन्यानुपसर्जनत्वं विश्रान्तं स्रगादिविषयसुखसाधनं तावत् सुखोपसर्जनम् अहिकण्टकादिपरिहारश्च दुःखाभावसाधनं सुखदुःखाभावयोश्च आत्मार्थत्वात् सर्वसुखादिसाधनजातम् आत्मनि एव विश्रान्तमित्यर्थः। कथं तर्हि सुखादौ पुरुषार्थत्वव्यपदेश इति शङ्कामुपसंहारव्याजेन परिहरति तस्मादिति। आत्मशेषत्वादेव सुखादौ पुरुषार्थत्वं न वस्तुत इति भावः। अतएव आह परम इति। एतेन अनुपादेयत्वानुमानं बाधितमिति भावो ध्वनितः। ननु सुखाद्यधिकरणतया आत्मनः सुखदुःखाभावौ प्रति कारकत्वात् सुखादिशेषत्वमेव आत्मनो युक्तं न वैपरीत्यमिति शङ्कित्वा

न च भावरूपस्य आत्मनो दुःखाभावात्मकत्वानुपपत्तिः। भवेदयं दोषो यदि आत्मनि दुःखं पारमार्थिकं स्यात् न तु एवमस्ति किं तु अज्ञानफणिफणासमुद्भूतदेहाद्यभिमानविषदंष्ट्राग्रवर्त्तिरागादिलक्षणहालाहलविषज्वालाप्रतिबद्धस्वात्मदृष्टिः सवितरि तमोवन्निर्दुःऽखेपि

अनुपादेयत्वानुमाने स्वरूपासिद्धिं दूषणान्तरमाह सुखदुःखेति। भेदे किल आधाराधेयभावः नच सुखाद्यात्मनो भिद्यत इति न आत्मा तदुपसर्जनं न वा सुखदुःखाभावान्यत्वं हेतुरात्मनि पक्षे वर्त्तत इत्यर्थः।

ननु आत्मा सर्वस्य सत्ताप्रदत्वात् स्वयमसद्रूपः कथं स्यात् इति शङ्कित्वा परिहरति न चेति। दुःखस्य आत्मनि कल्पितत्वात् दुःखाभावो न आत्मनः अतिरिच्यते इति परिहरति भवेदयमिति। ननु दुःखं गुणः तच्च अबाधितत्वात् न कल्पितं किञ्च आरोपे आरोप्याधिष्ठानयोः सादृश्यं कारणं दृष्टं नच अत्र तदस्ति उभयोरपि निरवयवत्वात् किञ्च आरोपसमयेऽधिष्ठानं विशेषतः अज्ञातं वाच्यं नच दुःखप्रतीतिसमये आत्मा विशेषतो न ज्ञायते। अहमित्येव तस्य विशेषप्रतीतित्वात् तस्याश्च ज्ञातत्वादिति कथं दुःखस्य आत्मनि समारोप इति शङ्कते किन्तु इति। परिहरति अज्ञानेति। स्वात्मनि दुःखौघम् आरोपयतीति सम्बन्धः। ननु उक्तं सादृश्यं नास्तीति सत्यं किं सादृश्येन आरोपव्यभिचारिणा

स्वात्मनि रौरवाद्यनेकभेदभिन्ननरकसमुदाय-समुद्भूतदुःखौघमारोपयत्येव केवलम्।

आरोपितस्य च अभावो न अधिष्ठानात् अतिरिच्यते अधिष्ठानादभेदेनैव आरोपितत्वात् भेदेन च तस्य असत्त्वात् असन्निषेधस्य च

कुतः तर्हि दोषादारोप इति अज्ञानादिति गृहाण। ननु अज्ञानमात्रं चेत् दुःखारोपे असाधारणं कारणं सुषुप्तेऽपि तर्हि दुःखारोपः स्यादिति चेत्? न, शरीरादिद्वारा तद्धेतुत्वादित्याह फणिफणेति। उदासीनावस्थां व्यावर्त्तयति रागेति। प्रतिबद्धस्वात्मादृष्टित्वेन विशेषादर्शनम् उपपादितम्। ननु यदि अत्र वस्तुतो न अस्ति तत् तत्र आरोपणीयं दुःखञ्च गुणत्वादात्मैकसमवेतमिति कथं तत्रैव तस्य आरोप इति न इत्याह निर्दुःखेऽपीति। दुःखात्यन्ताभावाधिकरणेऽपि इत्यर्थः। गुणीभवदपि दुःखं न आत्मनि समवेतं पादे मे दुःखमिति पादाद्याश्रयत्वेन प्रतीतेः अन्तःकरणधर्मत्वात् वा आत्मनि तदत्यन्ताभावः केवलो निर्गुणश्चेति श्रुतिविरुद्धश्च आत्मनि गुणसमवायः ततो निर्दुःखत्वात् आत्मनि अज्ञानादिवशात् दुःखारोप इति युक्तमुक्तमिति। अतएव आह आरोपयत्येव इति।

ननु भवतु दुःखमारोपितं तथापि आत्मा तदभाव इति कुतः तत्राह आरोपितस्य चेति। आरोपित-प्रतियोगिकाभावस्य अधिष्ठानानतिरेके हेतुमाह अधिष्ठानेति। अधिष्ठानात्मकत्वं न तावत् कल्प्यं तस्य स्वरूप-

सत्वात्। तस्मात् दुःखाभाव एव परम-पुरुषार्थ इति यो मन्यते तस्यापि आत्मैव परम-पुरुषार्थः तस्य अशेषसंसारदुःखनिवृत्तिरूप-त्वात्। असाध्यत्वात् आत्मनः अपुरुषार्थत्व-मिति चेत्? न। साध्यत्वेन पुरुषार्थत्वस्य निरस्तत्वात्।

त्वेन अकल्पितत्वात्। किं रूपेण तर्हि जगतः कल्पितत्व-मित्याशङ्क्य आत्मभिन्नमनात्मत्वं तद्रूपेण दुःखत्वादिना इत्यर्थः। अस्तु सद्रूपादात्मनो भेदेन दुःखाद्यारोपितं किं ततस्तत्राह भेदेनेति। सद्रूपात् आत्मनो भेदेऽसद्रूपत्वं स्यात् इत्यर्थः। अस्तु असत्दुःखादि ततोऽपि किं तत्राह असन्निषेधस्येति। अभावाभावस्य भावत्वादिति दुःखाभावः सद्रूप इति आत्मा स इति स्थितम्। ननु दुःखाभावात्मकत्वेन पुरुषार्थत्वसाधने तव अपसिद्धान्तः सुखात्मत्वरूपेणैव तस्य पुरुषार्थत्वादिति चेत्? मैवं, तुष्यतु दुर्जन इति न्यायादविरोधादिति शङ्कामुपसंहार-व्याजेन परिहरति तस्मादिति। ननु संसारनिवृत्तिः पुरुषार्थो न केवलं दुःखनिवृत्तिरिति तत्राह तस्येति। एकविंशति-प्रकारदुःखनिवृत्तिः पुरुषार्थः संसारेऽपि एतदात्मत्वविरोध इति। ननु आत्मैव चेत् दुःखाभावः तर्हि आत्मनोऽकार्य्यतया असाध्यत्वात् कथं पुरुषार्थता पुरुषेण तदेव अर्थ्यते यदसिद्ध-मिति शङ्कते असाध्यत्वादिति। साध्यत्वं न पुरुषार्थत्वे प्रयो-जकं चयित्वेन हेयत्वादिति परिहरति साध्यत्वेनेति। निरस्तत्वाद्भाष्यकारेण इति शेषः।

स्वतःसिद्धदुःखाभावम् उद्दिश्य मुमुक्षुप्रवृत्त्यनुपपत्तिरिति चेत्? न। ब्रह्मात्मसाक्षात्कारानन्तरं प्रवृत्त्यनुपपत्तेरिष्टत्वात्। तत्फलस्य जातत्वात्। पूर्वं तु अशेषदुःखाभावरूपब्रह्मात्मसाक्षात्कारेणैव सफलत्वात्। ज्ञानमपि न साध्यं वृत्तेरारोपितत्वात् चैतन्यस्य आत्मत्वात् इति चेत्? न, अस्य परामर्शस्य ज्ञानोत्तरकालीनत्वात्।

ननु आत्मरूपदुःखाभावस्य अनादित्वेन स्वतःसिद्धत्वात् तदुत्पत्तये तत्साधनाय मुमुक्षूणां प्रवृत्तिर्न स्यात् सिद्धस्य साधनायोगादिति शङ्कते स्वतःसिद्धेति। मोक्षोद्देशेन श्रवणादौ मुमुक्षुः प्रवर्तत इत्युच्यते किं वा ब्रह्मात्मसाक्षात्कारोद्देशेन वा? नाद्यः, श्रवणादेः साक्षात् मुक्तिहेतुत्वे प्रमाणाभावादित्याह नेति। द्वितीयेऽपि स साक्षात्कारः सिद्धो न वा? आद्ये आह ब्रह्मेति। द्वितीयं प्रत्याचष्टे पूर्वमिति। आत्मसाक्षात्कारेण मुमुक्षुप्रवृत्तिः फलवती इत्युक्तं तदसत् साक्षात्कारो वृत्तिर्वा स्वरूपचैतन्यं वा? नाद्यः वृत्तेः आरोपितत्वे मिथ्यात्वात् फलत्वानुपपत्तेः। सत्यत्वे द्वैतत्वापत्तेः। न द्वितीयः तस्य अजन्यत्वेन अफलत्वादिति शङ्कते ज्ञानमपि इति। आत्मस्वरूपवदित्यपेरर्थः। वृत्तेर्मिथ्यात्वज्ञानं बाधोत्तरकालं बाधात् प्रागेव वा? नान्त्य इत्याह न इति। अप्रामाण्यस्य परतस्त्वात् विना बाधं मिथ्यात्वस्य गृहीतुमशक्यत्वादित्यर्थः। द्वितीये न

दुःखाभावोऽपि न केवलः पुरुषार्थः दृष्टदुःखेऽपि विषये भोग्यसुखलोभेन प्रवृत्तिदर्शनात् इति चेत् ? न, आत्मन एव परमानन्दरूपत्वेन सुखस्य अपि सत्त्वात्।

न च अत्र विप्रतिपत्तिः परमप्रेमास्पदत्वेन सुखरूपत्वस्य सिद्धत्वात् असुखात्मनि प्रेमादर्श-

अनिष्टमित्याह अस्येति। नहि वृत्तिः स्वतः फलं किन्तु अज्ञाननिवर्त्तकतया तच्च अज्ञाननिवर्त्तकत्वं मिथ्यात्वग्रहात् प्रागेव सिद्धमिति पश्चात् मिथ्यात्वग्रहोऽनुपयोगी इत्यर्थः।

ननु दुःखाभावो न पुरुषार्थः असति अपि तस्मिन् सत्यपि दुःखे पाकादौ भोजनजन्यसुखलोभेन प्रवृत्तिदर्शनादिति शङ्कते दुःखाभावोऽपि इति। दुःखाभावत्वं न पुरुषार्थत्वप्रयोजकं सुखे व्यभिचारात् अन्यूनानतिरिक्तवृत्तेरेव प्रयोजकत्वादिति द्योतनाय केवलशब्दः। ननु दुःखाभावः किं पुरुषार्थ एव न भवतीति ब्रूषे उत सुखमपि पुरुषार्थ इति ? नाद्य इति परिहरति नेति। दुःखाभावमुद्दिश्य शिष्टप्रवृत्तेः सोऽपि पुरुषार्थ इत्यर्थः। अथ सुखमपि पुरुषार्थ इति तर्हि तद्रूपतापि आत्मनि सुखसम्पाद्येति सर्वथापि आत्मा पुरुषार्थ इत्याह आत्मन एवेति।

ननु सुखं गुण इति वैशेषिकादयः तत् कथं द्रव्यस्य आत्मनः स्वरूपमिति तत्राह न चेति। सुखरूपत्वं प्राक् निरूपितं स्मारयन् हेतुमाह परमेति। हेतुसाध्ययोर्व्यतिरेक-

नात्। न च सुखस्य जन्यत्वात् जन्याजन्ययोः आत्मसुखयोः अभेदानुपपत्तिः जन्यत्वासिद्धेः। न च सुखं मे जातमिति प्रतीत्या तत्सिद्धिः शुभादृष्टवशात् आत्मस्वरूपसुखाभिव्यञ्जनयोग्यान्तःकरणवृत्त्युदयेन अन्यथासिद्धेः। न च अहं सुखमिति प्रतीत्यापत्तिः विद्वांसं प्रतीष्टापादनात्। अविदुषस्त्वध्यस्ताहङ्कारदेहादावेव आत्माभिमानात् तत्र च आत्मन उपसर्जनतयैव स्फुरणात्।

व्याप्तिमाह असुखात्मनि इति। ननु आत्मा न सुखम् अजन्यत्वात् व्यतिरेके सुखवत् इति पूर्वोक्तं दूषयितुं स्मारयति न चेति। व्यतिरेकव्याप्तिभूमौ साध्याभावसत्त्वेऽपि हेत्वभावासत्त्वेन व्याप्यत्वासिद्ध्या दूषयति जन्यत्वेति। यत्तु पूर्वपक्षे सुखे जन्यत्वसिद्धयै प्रतीतिः उपन्यस्ता तामन्यथयितुमाह न चेति। प्रतीतेः सुखाभिव्यञ्जकोत्पत्तिविषयत्वेन अन्यथा सिद्धेर्न सुखस्य उत्पत्तिसिद्धिरिति। न चेति प्रतिज्ञायां हेतुमाह शुभेति। यच्च आत्मनः सुखाभेदेऽहं सुखमिति प्रतीतिः स्यात् नचेयमस्ति भेदप्रतीतेरेव विरोधिन्याः सत्त्वादिति पूर्वोक्तं दूषयति न चेति। सुखात्मनोस्तादात्म्ये प्रतीतिरपि तादात्म्यावगाहिनी स्यात् इति यदापादनं तत् किं विदुषः उत अविदुषः प्रतिज्ञा? आद्ये इष्टापत्ति रिति न चेति। प्रज्ञायां हेतुमाह विद्वांसमिति। द्वितीये अज्ञानावस्थायामात्मरूपस्य

अत एव ज्ञानसुखादिगुण आत्मेति तार्किका भ्रान्ताः। न च दुःखेऽपि इयं गतिः समा दुःखस्य सुषुप्त्यादौ व्यभिचारित्वेन आत्मस्वरूपत्वानुपपत्तेः। प्रमाणाभावात् च सुखात्मकत्वग्राहकश्रुतिविरोधाच्च। तथाच आत्मत्वमेव परमपुरुषार्थताप्रयोजकम्। न च लोकोत्तरत्वोपालम्भः महानुभावैरेव व्यासवशिष्ठादि-

अविद्यावृत्तत्वेनास्फुरणात् अज्ञानात् आत्मतादात्म्येन कल्पितदेहादेः सुखाधिकरणतया भेदेनैव प्रतीतेरभेदप्रतिपादनायोगादित्याह अविदुष इति। एतेन भेदप्रतीतिविरोधः परास्तः।

किञ्च येऽपि सुखं गुण आत्मा गुणीत्याहुस्तेऽपि अज्ञानवशादेवं वदन्ति न वस्तुतः निर्गुणत्वश्रुतिविरोधादित्याह अतएवेति। ननु उक्तयुक्त्या सुखे जन्यत्वादिप्रतीतेरन्यथोपपत्त्या आत्मनः सुखरूपत्वे दुःखरूपतापि स्यात् तज्जन्यत्वप्रतीतेरशुभादृष्टवशात् दुःखात्मस्वरूपाभिव्यञ्जकवृत्त्युत्पादनेन अन्यथा सिद्धेरित्यादि युक्तेः समत्वात् इति अतिप्रसङ्गं शङ्कित्वा दूषयति न चेति। दुःखस्य व्यभिचारित्वेन अव्यभिचार्यात्मस्वरूपत्वभावनायोग्यत्वात् इति हेतुमाह दुःखस्येति। किञ्च न युक्तिमात्रं वस्तुसाधकं किन्तु प्रमाणमूला सा नच अत्र प्रमाणमस्ति इति हेत्वन्तरमाह प्रमाणेति। न केवलं मूलप्रमाणाभावात् युक्तेराभासत्वं किन्तु प्रेयोवित्तादित्यादिश्रुतिविरोधादपि इत्याह सुखेति। ननु न सुखत्वं पुरुषार्थत्वप्रयोजकं दुःखाभावे व्यभिचारात् न अपि दुःखाभावत्वं सुखे व्यभिचारात् न उभयं गौरवात् पुरुषार्थ-

भिर्महाराजैश्च ऋषभादिभिः ऐहिकामुष्मिक-सकलसुखतत्साधनस्य आत्मलिप्सयैव अपेक्षित-त्वात्। न च बह्वनुग्रहो न्याय्यः देहात्माभि-माने तदभावात्। न च सुखरूपत्वे अपि आत्मनः स्वसम्बन्धिसुखाभावात् अपुरुषार्थत्वं सम्बन्धस्य आत्माऽभेदोद्देश्यकत्वात्।

शब्दस्य अनेकार्थत्वप्रसङ्गाच्च ततः कथमुभयं पुरुषार्थं इति चेत्? न, आत्मत्वस्यैव तत्त्वप्रयोजकत्वात् तस्य च उभयत्र अनुगतत्वादित्याह तथा चेति। सुखदुःखाभावात्मकत्वे सति इत्यर्थः। एवं च सति अनुपादेयत्वानुमाने बाधोन्नीतः पक्षेतर-त्वम् उपाधिरित्यपि सूचितमित्यपि बोद्धव्यम्। एवं च आत्मनि एव पुरुषार्थत्वे सांसारिकसुखपरित्यागेन आत्ममात्रोद्देशेन मुमुक्षूणां प्रवर्त्तमानानां लोकोत्तरत्वोपालम्भः परास्त इत्याह नच इति। लोकोत्तरत्वञ्च असिद्धं लौकिकैरेव व्यासादिभिः एतस्य अर्थस्य अनुष्ठितत्वादिति हेत्वन्तरमाह महानुभावैरिति। यच्च अल्पत्वात् मुमुक्षूणां श्रवणाद्यनुष्ठातॄणां भ्रान्तत्वं ज्योति-ष्टोमादिश्रुतिमूलाऽमुष्मिकसुखसाधनयागाद्यनुष्ठातॄणां बहुत्वेन तेषाम् अनुग्रहस्य न्याय्यत्वात् तद्विरोधे श्रवणादिश्रुतीनाम् उपचारार्थत्वात् इत्युक्तं तत् दूषयितुम् अनुवदति न चेति। ज्योतिष्टोमादिश्रुतितात्पर्य्याऽनभिज्ञतया तेषां यथार्थज्ञाना-भावेन भ्रान्तत्वात् श्रवणादिविधितात्पर्य्यज्ञानवतामल्पाना-मपि प्रामाणिकत्वात् मुमुक्षवो न भ्रान्ता इति दृष्टान्तमात्रेण

सुखं हि अत्यन्तम् उपादेयं कथं मे प्रियतमे आत्मनि अभेदेन प्रविशेदिति कामयमानो भेदभ्रमस्य प्राबल्यादभेदं कर्तुमशक्नुवानः सम्बन्धमात्रेण सन्तुष्यति। न च सम्बन्धः स्वतः पुरुषार्थः सुखदुःखाभावेतरत्वात्। यत्तु सुखस्य

आह देहात्मेति। तदभावात् बह्वनुग्रहन्यायाभावात् इत्यर्थः। यदपि पूर्वपक्षोक्तं सुखमात्रं स्वतन्त्रं न पुरुषार्थं इत्यादि तदनूद्य दूषयति न चेति। सत्यं स्वसम्बन्धिसुखमुपादेयमिति। तर्हि कथं स्वतन्त्रं सुखमुपादेयमिति आत्मनि सुखसम्बन्धमुद्दिशता सुखतादात्म्यस्यैवेष्यमाणत्वादिति हेतुमाह सम्बन्धस्येति।

इममेवार्थं स्पष्टयति सुखमिति। सम्बन्धापेक्षया तादात्म्यस्य अन्तरङ्गत्वद्योतनाय हि शब्दः। कथं तर्हि लोकः सम्बन्धमात्रेण तुष्यति। नहि अन्यदिच्छति अन्येन च तुष्यति अतिप्रसङ्गादित्याशङ्क्याह भेदभ्रमस्येति। मुख्यालाभे गौणेऽपि साध्यत्वदर्शनादिति भावः। ननु किमनया गुर्व्या कल्पनया सुखसम्बन्ध एव साक्षात्पुरुषार्थः किं न स्यात् इत्याशङ्क्य सुखादन्यत्वात् न स मुख्यः पुरुषार्थ इति परिहरति नच इत्यादिना। ननु आत्मा चेत् सुखैकमूर्त्तिस्तर्हि वैषयिकसुखं न पुरुषार्थः स्यात् नहि सुखस्य सुखं पुरुषार्थोऽकाम्यमानत्वादिति पूर्वोक्तं स्मारयति यत्त्विति। सत्यं सांसारिकं सुखमपुरुषार्थं इति। तर्हि आत्मसुखमपि पुरुषार्थो न भवेत् सुखत्वाविशेषादिति तत्र आह तस्य इति। यस्तु वादी सुखस्य सुखं पुरुषार्थो न भवति

सुखं न पुरुषार्थं इति तस्य सुखे अनात्मत्वारोपनिबन्धनत्वात्। न च कुष्ठाद्युपहतानां मरणानुपपत्तिः तत एव आत्मनः सुखरूपत्वसिद्धेः। ते हि परमप्रियतमे आत्मनि दुःखकारणं देह इति तम् उपेक्षन्ते न तु आत्मानम्। पारलौकिके सुखे कामनादर्शनात्। एतेन काम्यतीर्थादौ मरणं व्याख्यातम्। मरणस्यापि देहपरित्यागरूपत्वात्।

इति ब्रूते तस्य वादिनो मते सांसारिके सुखे अभिव्यञ्जकवृत्त्युपरागादिविशिष्टे अनुपादेयत्वे सुखत्वं न प्रयोजकं येन आत्मसुखमपुरुषार्थः स्यात् किन्तु विशिष्टतया भ्रमादनात्मत्वं आत्मत्वस्यैव पुरुषार्थत्वप्रयोजकत्वस्य व्यवस्थापितत्वात् इत्यर्थः।

यद्वा सुखे तस्य अपुरुषार्थत्वस्य इत्यर्थः। वैषयिकसुखे अनुपादेयत्वम् अनात्मत्वात् पुरुषार्थत्वे आत्मत्वस्यैव प्रयोजकत्वात् इत्युक्तं तत्र आत्मत्वं चेत् पुरुषार्थत्वप्रयोजकं तर्हि आत्मत्यागे दुःखाभावमुद्दिश्य कुष्ठाद्युपहितानां प्रवृत्तिर्न स्यात् दृश्यते च प्रवृत्तिस्तस्मात् आत्मत्वं न पुरुषार्थत्वप्रयोजकमिति यदुक्तं तत् परिहरति न चेति। कुष्ठाद्युपहितानां मरणे प्रवृत्तानामपि न आत्मत्यागे प्रवृत्तिर्मरणस्य देहत्यागरूपत्वात् कुष्ठाद्युपहितदेहस्य च असुखात्मनि दुःखहेतुतया तत्त्यागप्रवृत्तावौचित्यात् केवलं सुखमेव परलोके स्यादित्यादि उद्दिश्य देहत्यागे प्रवर्त्तते न आत्मत्यागे अन्यथा आत्मनस्त्यक्तत्वात्

आत्मन एव पुरुषार्थत्वे मुक्तसंसारिणो-रविशेषापत्तिरिति चेत्? न, ज्ञानाज्ञानाभ्यां विशेषात्। अज्ञानी हि भ्रान्तः कर्त्ता भोक्ता संसारी जरामरणधर्मा इत्येवमात्मानं जानाति

दुःखाभावोऽपि कस्य स्यात् तस्मात् न तत्र आत्मत्याग इति न चेति प्रतिज्ञायां हेतुमाह तत एवेति। तेषां मरणे प्रवृत्तेः एव इत्यर्थः। आत्मानुपेक्षायां हेतुः पारलौकिक इति एतेन कुष्ठाद्युपहितानां दुःखासंस्पृष्टसुखात्मकामनया देहत्याग-रूपे मरणे प्रवृत्त्युपपादनेन प्रयागादितीर्थे मरणप्रवृत्तिरपि व्याख्याता तत्रापि दुःखासंस्पृष्टसुखार्थितयैव देहत्यागरूपे मरणे प्रवृत्तिर्न आत्मत्यागरूप इत्याह एतेनेति।

ननु तथापि आत्मा न पुरुषार्थः मुक्तसंसारिणोः आत्मनस्तुल्यत्वेन अविशेषप्रसक्तेः मुमुक्षोः ब्रह्मचर्य्याद्यशेषेषु मुक्तिसाधनेषु प्रवृत्तिर्न स्यात् इति शङ्कते आत्मन एवेति। यद्यपि आत्मा मुक्तसंसा-रिणोरविशिष्ट एव तथापि स्वरूपसम्पन्नः स पुरुषार्थः किन्तु स्वरू-पेण साक्षात्कृतः ज्ञातस्यैव निध्यादेः पुरुषार्थत्वस्य लोके दर्शनात्। नच संसार्य्यात्मस्वरूपं वेति विद्वांस्तु तद्वेत्तीति विद्वांसं प्रति एव तस्य पुरुषार्थत्वं नान्यं प्रतीति न मुक्तसंसारिणोरविशेष-प्रसक्तिरिति परिहरति न इत्यादिना। ननु आत्मानं सर्वोऽपि वेत्ति तत् कथं ज्ञानाज्ञानकृतो विशेष इति तत्राह अज्ञानी हीति। अज्ञानी हि यतः इत्येवम् आत्मानं जानाति तस्मात् अस्ति विशेष इति अध्याहृतेन अन्वयः। ननु सुखाद्यात्मा स्वप्रकाशः कथं न संसारिणं परिस्फुरति। अज्ञानेन तदंश-

विद्वांस्तु तद्विरुद्धाकर्तृभोक्तृसंसारिजरामरणजन्मादिशून्यस्वप्रकाशसच्चिदानन्दपरिपूर्णस्वभावाशनायाद्यतीतास्थूलानणुनेतिनेतिसत्यज्ञानादिलक्षणसर्वजगदधिष्ठानभूतमात्मानमागमाचार्य्यस्वानुभवैकवाक्यतया साक्षात्कृत्याशेषदुःखनिदानम् अज्ञानं तत्कार्य्यं च बाधित्वा देशकालवस्तुपरिच्छेदशून्यपरिपूर्णानन्दविग्रहः स्वमहिम्ना

स्वावृत्तत्वादित्याह अज्ञानीति। अज्ञानस्य आश्रयविषयैक्यस्य औपपादितत्वात् अज्ञानी एव अज्ञानविषय इत्यर्थः। तर्हि सुखात्मकत्वमेव न भायात् विपरीतकर्तृत्वाद्यात्मनः कुतो भानं तत्राह भ्रान्त इति। अज्ञानवशात् अकर्त्राद्यात्मापि कर्तृत्वादिना प्रतीयते किम् अज्ञानस्य दुष्करमिति न्यायात् इत्यर्थः। अज्ञानावस्थायां याथात्म्येन आत्मनोऽस्फुरणात् न तत्र मुक्तत्वमिति भावः। अज्ञानकृतं विशेषमुपपाद्य ज्ञानकृतं तमुपपादयति विद्वांस्त्विति। पूर्वविशेषादेतस्य विशेषस्य व्यावर्त्तनाय तु शब्दो विद्वांस्तु पुरुषार्थरूपो भवति इति अन्वयः। पुरुषार्थस्वरूपमाह परिपूर्णानन्देति। परिपूर्णत्वम् उपपादयति देशकालेति। तस्य अपुरुषार्थत्वप्रयोजकाभानहेत्वज्ञानाभावमाह अज्ञानं बाधित्वेति। अज्ञानं स्वरूपेण सदपि न अनर्थाय सुषुप्तावदर्शनादिति तत्राह कार्य्यञ्च इति बाधित्वेतिपदेन अन्वयाय च शब्दः बाधित्वा अज्ञानतत्कार्य्यं कालत्रयेऽपि आत्मनि नस्त इति निश्चित्य परमपुरुषार्थो भवति इति अन्वयः। सुखात्मभानं तर्हि कथं भासकाभावादिति तत्राह स्वमहिम्नेति।

प्रतिष्ठितः परमपुरुषार्थो भवति। न च ततः परं कामयितव्यमस्ति सर्वेषां कामानामात्मप्राप्तिसीमत्वात्।

स्वप्रकाशतया इत्यर्थः। अज्ञानस्य सकार्य्यस्य निवर्त्तने हेतुमाह अशेषेति। सम्प्रति निवृत्तिसाधनमाह आत्मानं साक्षात्कृत्येति। साक्षात्करणे हेतुमाह आगमेति। एतेन श्रवणादिप्रवृत्तिवैयर्थ्यं परिहृतं स्वग्राह्यत्वं महावाक्यस्य निषेधयति आचार्य्येति। तस्य आप्तत्वद्योतनाय विद्वदनुभवं संवादयति स्वानुभवेति। पदार्थज्ञानपूर्वकं वाक्यार्थज्ञानमिति दर्शनाय तत्पदवाच्यम् आत्मस्वरूपमाह सर्वजगदिति। अज्ञानवशात् सर्वजगदधिष्ठानत्वेन सम्पन्नमित्यर्थः। इदानीं वास्तवमात्मनो लक्ष्यस्वरूपमाह तद्विरुद्धेत्यादिना। पूर्वोक्तकर्त्तृत्वादिपरामर्शार्थस्तच्छब्दः। अतएव आह अकर्त्रित्यादिना अकर्त्रिति नैयायिकमतव्युदासः। अभोक्त्रिति साङ्ख्यस्य जरादिशून्यमिति देहात्मवादस्य, स्वप्रकाशेति मीमांसकस्य सदिति माध्यमिकस्य एवमितरपक्षेषु व्युदस्तेषु स्वमतमाह परिपूर्णेति। तस्य अपुरुषार्थत्वं व्युदाचष्टे आनन्देति। एतस्य औपाधिकत्वं पराचष्टे स्वभावेति। सर्वत्र हेतुसूचनाय पुनर्विशिनष्टि अशनायादित्यादिना। अकर्तृभोक्तृत्वेन असंसारित्वे हेतुः अशनायादीति। देहात्मवादनिरासे हेतुरस्थूलेत्यादि। सद्रूपत्वे हेतुः सत्येति। स्वप्रकाशत्वे हेतुः ज्ञानेति। सुखरूपत्वे परिपूर्णत्वे च नित्यं विज्ञानमानन्दं ब्रह्मेत्यादिहेतुसंग्रहाय आदिपदं तस्य परमत्वमुपपादयति न च तत इति। आत्मलाभात् न परं विद्यते आत्मकाम आप्तकाम इत्यादिश्रुतिसिद्धमर्थं हेतुत्वेन आह सर्वेषामिति।

ननु आत्मसाक्षात्कारः श्रुतिजन्यः कथं स्यात् इन्द्रियजन्यस्यैव ज्ञानस्य साक्षात्कारत्वात् शब्दस्य च परोक्षज्ञानजनकत्वस्वाभाव्यात्। न च अपरोक्षे आत्मनि शब्दस्यापि अपरोक्षज्ञान-जनकत्वमेव युक्तमिति साम्प्रतम्। करणस्वभावस्य अन्यथाकर्त्तुमशक्यत्वात् अपरोक्षयोग्येऽपि वह्न्यादौ शब्दादिना परोक्षज्ञानस्यैव जन-

आगमात् साक्षात्कृत्येत्युक्तमुपश्रुत्य तत् असहमानः शङ्कते ननु इति। आत्मसाक्षात्कारो न शब्दजन्यः साक्षात्कारत्वात् घटादिसाक्षात्कारवदित्यर्थः। अत्र विपक्षे बाधकं वदन् पूर्वप्रतिज्ञायां हेतुमाह इन्द्रियजन्यस्येति। ननु जन्यसाक्षात्कारत्वे इन्द्रियकरणकत्वं न प्रयोजकं दशमस्त्वम् असीतिवाक्यजन्यसाक्षात्कारस्यापि दर्शनादिति शङ्कां पराकर्त्तुम् एवकारः। तत्रापि न शब्दो दशमसाक्षात्कारमाधत्ते किं तत् दशमशरीरेन्द्रियसन्निकर्ष इति इन्द्रियजन्यत्वमेव साक्षात्कारे प्रयोजकमित्यर्थः। ननु अन्वयव्यतिरेकयोरुभयत्रापि तुल्यत्वात् कथम् इन्द्रियमेव दशमसाक्षात्कारहेतुर्न शब्द इति तत्राह शब्दस्य चेति। तत्स्वाभाव्यञ्च अपरोक्षज्ञानहेतुत्वेन क्वापि अदर्शनादिति। इन्द्रियस्य च अपरोक्षज्ञानजनकत्वस्वाभाव्यं समुच्चेतुं चशब्दः। तथाच शब्दस्वभावादेव न तत्र शब्दस्य करणता किन्तु इन्द्रियस्य एवेति भावः। ननु वेदवाक्यं प्रमाणं तदा स्यात् यदि यादृश आत्मा तदाकारं ज्ञानं

नाच्च। न च परोक्षमपि ज्ञानमभ्यस्यमानम-परोक्षं भवतीति युक्तम् अनुमित्यादौ तथा अदर्शनात् उत्तरोत्तरज्ञानस्यापि शाब्दत्वाविशेषात्। न च मा अस्तु अपरोक्षज्ञानम् अप-

जनयेत्। आत्मा च अपरोक्षस्तस्मात् अपरोक्ष आत्म-साक्षात्कार: श्रुतिजन्य इत्यनूद्य दूषयति नच इत्यादिना। नच साम्प्रतमिति अन्वय:। तत्र हेतु: करणेति प्रमेयस्वभावा-पेक्षया स्वस्वभावस्य अभ्यर्हितत्वात् तदन्यथाकरणमशक्यत्वात् अयुक्तमित्यर्थ:। किञ्च ब्रह्मणो ऽपरोक्षत्वमात्रेण तद्विषयकज्ञा-नस्य अपरोक्षत्वं न युक्तम् अपरोक्षवह्न्यादिविषयशाब्दज्ञानस्य परोक्षस्य एव उभयसम्मतत्वादिति हेत्वन्तरमाह अपरोक्ष-योग्येऽपि इति। ततो न आत्मसाक्षात्कार: श्रुतिजन्य इति स्थितं तत्र इदम् आशङ्कते। ननु आत्मसाक्षात्कारेणैव प्रयोजनं स यत: कुतश्चित् जायताम्। अभ्यस्यमानञ्च परोक्षमात्मज्ञानम् अपरोक्षतया सम्पद्यते। तथाच तादृक्ज्ञानाभ्यास एव आत्मसाक्षात्कारि हेतुरिति ये मन्यन्ते तन्मतं दूषयति न चेति। तथा अदर्शनात् परोक्षज्ञानाभ्यासस्य अपरोक्षज्ञानजनकत्वा-दर्शनादित्यर्थ:। किञ्च आद्यं ज्ञानं यथा न अपरोक्षप्रत्यय-माधत्ते शाब्दत्वात् तथा उत्तरज्ञानसन्तानोऽपि न तथा धास्यति शाब्दत्वाविशेषादिति हेत्वन्तरमाह उत्तरोत्तरेति। अपिशब्दो हेत्वन्तरद्योतक:। ननु किं साक्षात्कारकरणविचारेण साक्षात्-कारस्य निष्प्रयोजनत्वेन अस्माभिरपि उपेक्षणीयत्वादिति न इत्याह न चेति। न अयं सर्प इति आप्तवाक्यजन्यपरोक्षज्ञाना-

रोक्षभ्रमस्य अज्ञानतत्कार्य्यस्य अनुच्छेदप्रसङ्गात्। तस्माद्ब्रह्मण्येव आत्मनि अपरोक्षज्ञानम्।

अत्र वदन्ति। श्रवणाद्यभ्यासजनितशाब्दज्ञानसमुद्भूतभावनाप्रचयसचिवमन्तःकरणमेव आत्मसाक्षात्कारे करणं न च भावनाधीनसाक्षात्कारस्य मृतपुत्रसाक्षात्कारवदप्रामाण्यम्। शब्दप्रमाणमूलत्वेन विश्वासात्। न च यतो वाचो निवर्त्तन्ते अप्राप्य मनसा सहेति विरोधः आग-

दपि भयकम्पादिनिवृत्तेर्दर्शनात् किम् अपरोक्षज्ञानेनेति शङ्कितुः अभिप्रायः। अपरोक्षेति दिङ्मोहादौ सत्यपि परोक्षज्ञाने भ्रमानुच्छेदवदत्रापि अहं कर्त्ता भोक्तेत्याद्यपरोक्षभ्रमस्य विना आत्मसाक्षात्कारमनुच्छेदः स्यादित्यर्थः। नायं सर्प इति वाक्यादपि अपरोक्षमेव ज्ञानं जायते इति दृष्टान्तः एवं पूर्वपक्षी सिद्धान्तिमते साक्षात्कारस्य उपेक्षणीयत्वं पराकृत्य स्वयं करणानिरूपणेन सामग्र्यभावे फलाभावादिति न्यायेन अर्थात् प्राप्तम् आत्मसाक्षात्काराभावम् उपसंहरति तस्मादिति।

पूर्वपक्षानुवादेनैकदेशिमतेन समाधत्ते अत्रेति। न तावत्करणाभावात् तदभावात् तदभावः अन्तःकरणस्य तत्र करणत्वादित्याह श्रवणादीत्यादिना। ननु न अन्तःकरणं तत्र करणं सत्यपि तस्मिन् अविवेकिनां ब्रह्मात्मसाक्षात्कारादर्शनादिति तत्राह भावनेति। यथा केवलस्य चक्षुषः प्रत्यभिज्ञाहेतुत्वाभावेऽपि पूर्वानुभवसंस्कारवासितं तदैक्यप्रत्यभिज्ञाहेतुरेवं

मगम्यत्वेऽपि तुल्यत्वात् तस्य वाक्यस्य लौकिकशब्दवैदिकसंस्कारासंस्कृतमनोग्राह्यत्वनिषेधपरत्वात्।

तन्न। आगमस्यैव आत्मनि अपरोक्षज्ञानजनकत्वात् तं तु औपनिषदं पुरुषं पृच्छामीति श्रुतौ आत्मनि एव औपनिषदत्वविशेषणश्रवणात्।

केवलं मनःशुद्धात्मसाक्षात्कारजनकमभिभावनाविशिष्टं तज्जनकं स्यादित्यर्थः। भावनायां मूलानुभवविशेषमाह शाब्देति। विचारप्रयोजकानुभवं व्यावर्त्तयति श्रवणेति। शाब्दज्ञानेति विशेषणस्य प्रयोजनमाह नच इत्यादिना। अत्रार्थे श्रुतिविरोधम् आशङ्क्य निराचष्टे नच इति। किमितदेकदेशिनां चोद्युं व्युत्थितस्य वेति नाद्य इत्याह आगमेति। द्वितीयं पराहतस्येति।

तदेवं मनसः आत्मसाक्षात्कारे करणस्य सत्त्वात् न तदभाव इत्येकदेशिनां पूर्वपक्षे निरस्ते सम्प्रति परमसिद्धान्ती एकदेशिमतनिषेधं प्रतिजानीते तत् न इति। ननु दृश्यते तु अग्र्यया बुद्ध्या मनसैव इदमाप्तव्यमित्यादिश्रुतेरुक्तयुक्तेश्च मनसस्तत्र करणत्वं युज्यते तत् कथं त्वया तन्निषिध्यते इति शङ्कित्वा तत्र हेतुमाह आगमस्य एवेति। उक्तशङ्कानिवृत्त्यर्थमेवकारः। अयम् अत्र आशयः, मनसः आत्मसाक्षात्कारे करणत्वं यत् कल्प्यते तत् किं क्वचित् शुद्धात्मनोऽन्यत्र साक्षात्कारे करणत्वं कॢप्तमिति ? शुद्धात्मसाक्षात्कारेऽपि लाघवात् तदस्तु इत्युच्यते किं वा श्रुतिमात्रबलात् ? नाद्यः, तदनिरूपणात् तथाहि न तावत् बाह्येऽर्थे प्रत्ययोत्पत्तौ मनःकरणं तस्य बहिरस्वातन्त्र्यात्, न

तच्च इतराविषयत्वे सति तन्मात्रविषयत्वे समञ्जसम् अन्यथा प्रमाणान्तराव्यावर्त्तकत्वे विशेषणवैयर्थ्यात्। लौकिकस्यापि वाक्यस्य दशमस्त्वमसीत्यादेरात्मनि अपरोक्षज्ञानजनकत्वस्यैव दृष्टत्वात्। प्रमाणस्वभावहानिः स्यादिति चेत्?

अपि आन्तरदुःखादिसाक्षात्कारे तस्य साक्षिमात्रवेद्यत्वात् न अपि आत्मसाक्षात्कारे तस्य इदानीं विचार्य्यमाणत्वात् सोपाधिकात्मसाक्षात्कारे मनःकरणत्वेन क्लृप्तमिति चेत्? न, उपाधिरज्ञानम् अन्तःकरणं वा? नाद्यः सुषुप्तावज्ञानोपाधिकात्मनि साक्षात्कारो न स्यात् मनसस्तत्रासत्त्वात्। न द्वितीयः आत्माश्रयात्। आत्मनि साक्षात्काराय मनःप्रवृत्तौ उपाधित्वेन स्वस्यैव अपेक्षणात्। अन्तःकरणकार्य्यमेव उपाधिरिति चेत्? न, तत्रापि अंशत आत्माश्रयात्। अन्तःकरणोपलक्षितत्वस्य विशेषणत्वोपलक्षणत्वाभ्याम् अनिरूपणात्। न अपि श्रुतिमात्रबलात् श्रुतेः सहकारितामात्रपरत्वेन करणत्वप्रतिपादकत्वादिति। आत्मसाक्षात्कारे श्रुतेः करणत्वे श्रौतलिङ्गमुदाहरति तं तु इति।

तत्र आगमस्य करणत्वे सामर्थ्यमुपपादयति तच्चेति। ननु शब्दोऽपि न क्वचित् साक्षात्कारकरणत्वेन क्लृप्तः कथं तत्र करणं तत्राह लौकिकस्येति। नच तत्र इन्द्रियं करणं सत्यपि तस्मिन् दशमत्वाऽपरिज्ञानात् तद्व्यतिरेकेण अन्धे तमसि वाक्याद्दशमोऽस्मीति साक्षात्कारदर्शनात् नच तत्परोक्षज्ञानं अस्मीति प्रतीतेः अपरोक्षाकारत्वात् ततो व्यभिचारात् न इन्द्रियं

न। प्रमेयानुसारित्वात् प्रमाणस्वभावस्य प्रमेयस्य च नित्यापरोक्षत्वात्।

न च ज्ञानगतो धर्मो ऽपरोक्षत्वं यत्साक्षादपरोक्षाद् ब्रह्मायमात्मा सर्वान्तर इति आत्मनोऽपि अपरोक्षत्वश्रवणात्। किं तत् अपरोक्षत्वमिति चेत्? वस्तुतः प्रमात्रव्यवहितत्वमेव। तच्च

तत्र करणमिति द्योतनाय एवकारः। ननु एवं शब्दस्वभावविरोधः स्यादिति शङ्कते प्रमाणेति। प्रमाणस्य प्रमेयोपजीवकत्वेन तदनुरोध्येव स्वभावो न स्वतन्त्रः कश्चित् स्वभाव इति। न इति पूर्वपक्षनिषेधे हेतुमाह प्रमेयेति। परोक्षज्ञानजनकस्वभावमसिद्धमिति भावः। कीदृक् तर्हि प्रमेयस्य आत्मनः स्वभाव इति तत्राह प्रमेयस्य चेति। अपरोक्षत्वं कदाचित् घटादावपि इति विशिनष्टि नित्येति। अपरोक्षैकरस इत्यर्थः। ननु प्रमेयं न परोक्षैकरसं न वा अपरोक्षैकरसं एकदैव वह्न्यादौ पुरुषभेदापेक्षयाऽनुमितिसाक्षात्कारविषयतया उभयरूपत्वप्रतीतेः।

नच विरुद्धं रूपद्वयमेकदा एकत्र सम्भवति ततो न प्रमेयस्य स्वाभाविकौ तौ धर्मौ किन्तु ज्ञानविशेषोपाधिकौ इति शङ्कित्वा दूषयति न चेति। तत्र हेतुमाह यत्साक्षादिति। साक्षादिति अव्यवहितं स्वरूपम् उच्यते तच्च अव्यहितत्वं गौणं श्रौतं ब्रह्मादावप्यस्तीति तन्निवृत्तये विशिनष्टि अपरोक्षादिति। अगौणमित्यर्थः। आन्तरत्वमिन्द्रियमनःप्राणादेः अपि अस्तीति तद्व्यावर्त्तनाय विशेषयति सर्वेति। ततश्च श्रुति-

प्रमातरि विश्रान्तं यावद्यावत् प्रमातुर्विप्रकृष्यते तावत्तावत् परोक्षत्वोत्कर्षदर्शनात् तथाच अपरोक्षस्वभावे आत्मनि परोक्षज्ञानं जनयन् वेदो भ्रान्तिमेव जनयेत् अन्यथास्थितस्य अन्यथाबोधनात्। मोक्षसाधनीभूतस्य च आत्मसाक्षात्का-

सिद्धमपरोक्षं ब्रह्मस्वरूपं नतु औपाधिकमित्यर्थः। तर्हि वह्न्यादौ उभयं विरुद्धमेकदा स्यादिति शङ्कितं दोषं परिहर्तुमपरोक्षस्वरूपजिज्ञासामुत्थापयति किं तदिति। अपरोक्षस्वरूपमाह वस्तुत इति। साक्षात्कारज्ञानविषयत्वव्युदासाय एवकारः। कथं तर्हि विरोधपरिहार इति तत्राह तत्रेति। चस्त्वर्थे विश्रान्तं पर्य्यवसन्नं प्रमातरि एव अव्यवहितत्वस्य पर्य्यवसाने हेतुमाह यावदिति। तथाच वह्न्यादौ परोक्षत्वमेव मुख्यं गौणम् तु अपरोक्षत्वं आत्मसन्निधानकृतत्वात् ततो न उभयमेकदा विरुद्धमिति भावः। ननु यथा घटादौ अनात्मत्वात् परोक्षैकरसे अपरोक्षत्वं गौणमपि वर्त्तत इति तत् आदाय इन्द्रियप्रमाणकत्वं तथा प्रमातरि अपि परोक्षत्वमादाय शब्दः प्रवर्त्ततामिति न इत्याह तथाच इति। गौणमपि परोक्षत्वमात्मनि न सम्भवति आत्मव्यवहितत्वस्य आत्मनि कल्पयितुमशक्यात्वात् तथाच प्रमाणं भवन् वेदो विपरीतं स्वरूपं कथम् अनुभावयेत् अनुभावयन् वा कथं प्रमाणं स्यात् इत्यर्थः। इममेवार्थं व्यतिरेकेण आह अन्यथा इति। एवं सपक्षं साधयित्वा एकदेशिमतमागमस्यैव आत्मनि अपरोक्षज्ञानजनकत्वादिति वाक्यस्थितैवकारेण अस्माभिः उक्तभावेन प्राक्निराकृतं इदानीं तत्रैव हेत्वन्तरमाह

रस्य मनोजन्यत्वे व्यभिचारिकरणजन्यतया अप्रामाण्यप्रसङ्गः।

न च वेदमूलतया प्रामाण्यम् अपरोक्षतया वेदेन अनवबोधनात् वाङ्मनसातीतत्वश्रुतिव्याकोपाच्च।

नोचेति। प्रमाव्याप्तं प्रमाणमिति तार्किकाः सङ्गिरन्ते मनश्च न प्रमाव्याप्तं तस्य उपलब्धिमात्रहेतुत्वात्। ततो व्यभिचारे मनसः न आत्मसाक्षात्कारकारणत्वं तत्त्वे वा तज्जन्यसाक्षात्कारो-भ्रमः स्यात् नचैत् युज्यते, सविलासाज्ञाननिवर्त्तकत्वात्। नहि भ्रमोऽज्ञानं निवर्त्तयति अतिप्रसङ्गादित्यर्थः। ननु मनोमात्रं चेत् आत्मसाक्षात्कारं जनयेत् तदा स्यादेव तत्र भ्रमत्वाशङ्का न च एवं तत्त्वमस्यादि वाक्यजन्यज्ञानसन्ततिसहायं हि मनस्तत्-साक्षात्कारकरणं तथाच मूलप्रमाणशब्दसंवादात् अप्रामाण्य-शङ्कानिरास इति पक्षं निषेधयति। नचेति संवादार्थं यथा ज्ञानं मनसा जन्यते तथैव चेत् शब्देन जन्यते तदा उभयोरन्यतराप्रा-माण्यम् अनधिगतार्थत्वाभावात्।

अथ एतद्दोषपरिहाराय शब्दः परोक्षतया बोधयति तथा सति तद्विसंवादात् अप्रामाण्यमित्यभिप्रेत्य हेतुमाह अपरोक्ष-तयेति। ननु तत्त्वमस्यादि वाक्यं परोक्षज्ञानं जनय-दपि अपरोक्षाकारमेव ज्ञानं जनयिष्यति तदाकारस्य ब्रह्मा-त्मनि सत्त्वात् नच तर्हि संवादात् अप्रामाण्यं धारावहन-बुद्धिवत् प्रामाण्योपपत्तेरित्याशङ्कां पराकर्त्तुं वेदेन इत्युक्तं, वेदो हि शब्दात्मा सच न अपरोक्षाकारं ज्ञानमुत्पादयितुमलं तस्य परोक्षाकारमात्रज्ञानजनकत्वस्वभावात् अन्यथा पर्वतो वह्नि-

**न च लौकिकविषयत्वं मुख्ये बाधकाभावात्। न च श्रुतिविषयत्वेऽपि समानो दोषो लक्षणयैव तद्बोधनात्।**

मानिति प्रतिज्ञावाक्यात् परोक्षे वह्नौ अयमित्याकारप्रसङ्गः तस्मात् परोक्षाकारज्ञानजननमेव शब्दस्वभाव इति। तदुक्तं सुरेश्वराचार्य्यैः।

स्वभावतोऽखिलं वाक्यं संसर्गात्मकमेव हि।
परोक्षवृत्त्या च तथा वस्तु बोधयति स्वतः॥

इति आत्मसाक्षात्कारस्य मनःकरणकत्वे श्रुतिविरोधश्च दुर्वार इत्याह वाङ्मनसेति। ननु एतद्वाक्यं संस्कृतमनोविषयमित्युक्तमिति न इत्याह न चेति। लक्षणाप्रसक्तेः साच मुख्ये सति बाधके युक्ता नान्यथा इत्यर्थः। ननु आगमकरणत्वेऽपि तस्य समानो दोष इति चेत्? न, वेदान्तविज्ञानसुनिश्चितार्था इत्यादिश्रुतिप्रामाण्यात् वेदान्तकरणत्वं ब्रह्मसाक्षात्कारस्य प्रतीयते यतो वाचोनिवर्त्तन्त इति वाक्याच्च तन्निषेधः प्रतीयते एवं विरोधे किमप्रामाण्यमन्यतरस्य स्यात् उभयवाक्यार्थसमुच्चयस्वीकारो वा व्यवस्था वा? विकल्पस्य क्रियायामेव सम्भवात् न उपन्यासः। न तावदन्यतराप्रामाण्यमुभयोरपि वेदवाक्यत्वेन तुल्यत्वात्। न वा तदर्थसमुच्चयः विरुद्धयोस्तदयोगात् तस्मात् व्यवस्थया परिहर्त्तव्यो विरोधः निषेधवाक्यमभिधावृत्त्या शब्दप्रवृत्तिं तत्र निषेधयति वेदान्तगम्यत्वानुवादवाक्यानि लक्षणया तत्र शब्दप्रवृत्तिमनुजानन्ति इति न कोऽपि विरोध इति शङ्कोत्तराभ्यामाह नच इत्यादिना। लक्षणावृत्त्या ब्रह्मात्मैक्यसाक्षात्कारे तत्त्वमस्याद्यागमस्य करणतेति उक्तं।

ननु तत्त्वमस्यादिवाक्ये लक्षणैव न युक्ता भागलक्षणया एकदेशपरिग्रहे श्रुतार्थपरित्याग-प्रसङ्गात्।

न च पदयोरेकविभक्त्यन्तनिर्दिष्टयोः सामा-नाधिकरण्यपरामर्शानन्तरं पदार्थयोरभेदो वाक्या-र्थस्तावत् प्रतीयते स च विरुद्धस्वभावयोः संसार्य्य-

तत्र लक्षणावृत्त्या आत्मनि शब्दप्रवृत्तिमाक्षिपति ननु इति। अयुक्तत्वे हेतुः भागेति। अयमर्थः, न तावत् इयं लक्षणा जहत् स्वार्था एकदेशस्य आत्मनः परिग्रहात्, न अपि अत्यज-हत्स्वार्था परोक्षत्वादिधर्मत्यागात्, न अपि उभयरूपा, भागे एकदेशे लक्षणया शब्दप्रवृत्त्या एकदेशस्य शुद्धचित्सुखात्मकस्य परिग्रहे स्वीकारे पदद्वयसामानाधिकरण्यबलात् श्रुतस्य परोक्षापरोक्षसंसार्य्यसंसार्य्यभेदस्य परित्यागः स्यादिति। ननु सामानाधिकरण्यबलात् प्राप्तोऽपि पदार्थयोरभेदो विरुद्ध-त्वात् अयोग्य इति तदनुपपत्त्या "अर्द्धं त्यजति पण्डितः" इति न्यायेन विरुद्धांशत्यागेन अविरुद्धम् अंशं स्वप्रामाण्याय लक्षयतु तत्त्वमस्यादिवाक्यं को दोष इति शङ्कित्वा दूषयति नच इत्यादिना। नच साम्प्रतम् इति अन्वयः।

सामानाधिकरण्यस्वरूपमाह पदयोरिति। द्विवचनम् अविवक्षितं वैयधिकरण्यं व्यावर्त्तयति एकेति। अत्र भिन्न-प्रवृत्तिनिमित्तयोरित्यपि बोद्धव्यम्। अन्यथा पर्य्यायपदेषु एकविभक्तिकेषु सामानाधिकरण्यप्रसङ्गात् वेदेन उक्तम् गृहीतुं वयं समर्था न तं पर्य्यनुयोक्तुम्। स चेत्

संसारिणोर्जीवपरमात्मनोर्न सम्भवतीति मुख्यार्थानुपपत्त्या लक्षणा युक्तेति साम्प्रतं श्रुतिसिद्धे अनुपपत्त्यभावात् । न च विरुद्धस्वभावयोर्भेदग्राहिमानान्तरविरोधेन अविरुद्धयोः अंशयोरभेदो बोध्यत इति वाच्यम् । श्रुतिविरोधेन भेदग्राहिप्रमाणस्यैव अप्रामाण्यात् अन्यथा लक्षणया अपि अखण्डाद्वितीयप्रत्यगात्मबोधनं न स्यात् सकलभेदग्राहिप्रत्यक्षादिविरोधात् ।

वेदोऽसंसारिसंसारिणोरभेदं ग्राहयति तर्हि स न अनुपपन्न इति न तदनुपपत्त्या लक्षणेति हेत्वर्थः । ननु लोकवेदाधिकरणन्यायेन वेदोऽपि लौकिकवाक्यविधयैव स्वार्थं ग्राहयति लौकिकञ्च वाक्यं प्रमाणान्तरविरोधं विनैव अर्थबोधकं विशिष्टयोर्भेदस्य च न अहम् ईश्वर इति प्रत्यक्षादिसिद्धत्वात् तयोर्भेदमुपेक्ष्य शुद्धचिन्मात्रभेदं लक्षणया बोधयिष्यति वेद इति शङ्कां पराचष्टे नच इति । लौकिकवाक्यं स्वार्थबोधने मानान्तराविरोधम् अपेक्षत इति युज्यते लौकिकत्वाविशेषात् वेदस्त्वपौरुषेयत्वात् प्रबल इति स्वार्थविरोधि मानान्तरं बाधिष्यते ततो न स्वार्थानुपपत्तिरिति न एकदेशलक्षणेति पूर्वनिषेधे हेतुमाह श्रुतीति । ननु यथाकथञ्चिदपि प्रमाणान्तराबाधेन यदि स्वप्रामाण्यमुपपद्यते किमिति तेन प्रयोजनमितरप्रमाणबाधनमिति तत्राह अन्यथेति ।

तथा च मुख्यार्थे न अनुपपत्तिः। न च शक्यलक्ष्ययोः सम्बन्धो लक्ष्यस्य आत्मनोऽसङ्गत्वात्। न च असङ्गेन किञ्चित् सम्बद्ध्यते न च असम्बद्धो लक्ष्यते तथा अदर्शनात्। न च सर्वथाऽनभिधेयोऽर्थो लक्ष्यते इति इष्टं लक्ष्यपदार्थे मूकताप्रसङ्गात् तत्रापि लक्षणायां लक्षणानवस्थाप्रसङ्गात्। किञ्च पदाभ्यामेकोऽर्थो लक्ष्यते अर्थद्वयं वा? नाद्यः; एकपदवैयर्थ्य-

अखण्डमसंसर्गि यदद्वितीयं सजातीयविजातीयस्वगतद्वैतरहितं तदेव च प्रत्यक्सर्वान्तरात्मेति यत् प्रबोधनं लक्षणया तदपि न स्यात् सकलसजातीयादिभेदावबोधकप्रत्यक्षादिभिः प्रमाणैर्विरोधात् ततः प्रमाणान्तरबाधनं श्रुतेरावश्यकमिति पूर्वमेव मुख्यार्थविरोधि प्रमाणं बाध्यतां न लक्षणया अर्थान्तरपरत्वमित्यर्थः। किञ्च अभिधेयाविनाभूते प्रवृत्तिर्लक्षणेष्यते इति वृद्धानां लक्षणा स्वरूपविदा स्थितिः शक्यसम्बन्धिन्येव लक्षणा नच अत्र शक्यसम्बन्धिता शुद्धात्मनोऽसंसर्गित्वात् तस्यैव च तत्र लक्ष्यत्वात् न तत्र लक्षणेति हेत्वन्तरमाह नच इत्यादिना। ननु यद्यपि लक्ष्यमसंसर्गि तथापि विशिष्टवाच्यं संसर्गीति तदेव लक्ष्येण बलात् संसृज्यतामिति न इत्याह न च इति। सम्बन्धस्य उभयनिष्ठत्वादेकस्य असम्बन्धित्वे इतरमात्रनिरूप्यसम्बन्धायोगादित्यर्थः। तथेति स्वार्थासम्बन्धिनि लक्षणाया अदर्शनादित्यर्थः। किञ्च लक्ष्यं चिन्मात्रमभिधेयं न वा अभिधेयं

प्रसङ्गात् पदार्थवाक्यार्थयोरविशेषापत्तेश्च। विशेषे वा अखण्डो वाक्यार्थो न स्यात्। अत एव न द्वितीयः। लक्षणाऽभावप्रसङ्गाच्च। न हि विरुद्धयोः अभेदानुपपत्त्या कृता लक्षणा भिन्नयोः अभेदे पर्य्यवस्यति।

चेत् तर्हि तदभिधानप्रवृत्तिवच्छब्दे चिदात्मनि तत्त्वमित्यादि-पदप्रवृत्तेः किं लक्षणया? द्वितीयमनूद्य दूषयति न चेति। ननु लक्ष्येऽर्थे किमिति मूकता? लक्षणया पदादेव तदुक्तिसम्भवादिति तत्राह तत्रापीति। लक्ष्योपस्थापकं पदं लक्षणया यत् प्रवर्त्तते तल्लक्ष्योपस्थापकपदेन अपि भवितव्यम् एवं तत्र तत्रापि इति अनवस्थेत्यर्थः। किञ्च तत्त्वमिति पदयोर्लक्ष्यमेकं भिन्नं वा? आद्ये इतरपदवैयर्थ्यमेकेनैव पदेन लक्षणया प्रत्यग्ब्रह्म-तादात्म्यरूपलक्ष्यसाक्षात्कारस्य सिद्धेरित्याह किञ्चेत्यादिना। ननु किमिति इतरपदवैयर्थ्यमुक्तसाक्षात्कारप्रमाणत्वसिद्धये अपेक्षितवाक्यत्वनिर्वाहकत्वादित्याशङ्क्य हेत्वन्तरमाह पदार्थेति। पदयोरेकार्थत्वे पदार्थान्तरत्वाभावेन संसर्गरूपवाक्यार्थ इतरो न स्यादिति तुल्यार्थकत्वात् पर्य्यायता पदयोः स्यादिति इतरस्मिन् पदे प्रयुक्तेऽपि वाक्यत्वं न स्यादित्यर्थः।

ननु यद्यपि सामान्यात्मना लक्ष्यमेकं तथापि तन्निष्ठविशेष-मादाय पदान्तरप्रवृत्तेरपर्य्यायत्वात् कथं न वाक्यतेति तत्राह विशेषे वेति। सामान्यविशेषसंसर्गित्वे अखण्डस्वरूपत्व-क्षतेरित्यर्थः। लक्षणावैयर्थ्यं द्वितीये पक्षेऽधिको दोष इत्याह लक्षणेति। ननु किमिति लक्षणाभावः? भिन्नयोरपि तयोरभेदं

किञ्च वेदान्ते तत्त्वमस्यादिवाक्यमेव प्रधानम् इतरत् सर्वं तदुपकरणमेव तथा च प्रधानवाक्ये एव कथं लक्षणा तत्र असमवेतार्थत्वेनेतरत्रैव सा युक्ता। गुणे तु अन्याय्यकल्पनेति न्यायात्। अत्र केचित्। तत्त्वमस्यादिवाक्ये

लक्षणया करिष्यति वेद इति तत्राह नहीति। तात्पर्य्यवृत्त्या बोधनं पर्य्यवसानं प्रमाणं हि न उत्पादकं किन्तु स्थितिज्ञापकम्। नच भिन्नयोः अभेदो वास्तवोऽस्तीति लक्षणयापि वेदः किं बोधयेदित्यर्थः।

तत्त्वमस्यादिवाक्ये लक्षणाभावं हेत्वन्तरेण उपपादयितुं भूमिकामाह किञ्च इत्यादिना। अययर्थः, भूताय भव्यम् उपदिश्यते इति हि वेदान्तमर्य्यादा ततो वेदान्तशास्त्रे तत्त्वमस्ययमात्मा ब्रह्मेत्यादि महावाक्यानि सर्वशेषिसच्चित्सुखात्मकस्वरूपप्रतिपादकतया प्रधानवाक्यत्वं प्राप्नुवन्ति तदितरश्रवणादिवाक्यानि तदपेक्षितार्थसमर्पकत्वात् तदुपकरणतदङ्गभूतानि। भवतु महावाक्यस्य प्रधानत्वं किं ततस्तत्राह तथा चेति। ननु को विशेषो यत्र अनुपपत्तिस्तत्र एव लक्षणेति तत्राह तत्रेति। प्रधानानुगुणतया इतरव्याख्यानाय गुणवाक्य एव लक्षणा युज्यते न प्रधानवाक्य इत्यर्थः। ननु वेदत्वाविशेषादत्रापि अस्तु लक्षणेति न न्यायविरोधादित्याह गुणेति। अत्र एकदेशिनो वदन्ति तत्त्वमस्यादिवाक्ये लक्षणानिराकरणं न अनिष्टं तत्र तस्य अनङ्गीकारात् इत्येकदेशिमतमुत्थापयति अत्रेति। कथं

लक्षणा एव तावत् न अङ्गीक्रियते। न च विरुद्ध-योर्जीवपरमात्मनोः सामानाधिकरण्यानुपपत्तिः रज्जुसर्पयोः इव एकस्य बाधेन अपि तदुपपत्तेः। न च अनयोर्मध्ये कस्य बाध इति विनिगमका-भावे यदि परमात्मन एव बाधमाशङ्केत तदा

तर्हि वेदान्तवाक्ये सामानाधिकरण्यं भिन्नप्रवृत्तिनिमित्तयोः पदयोरेकस्मिन् अर्थे वृत्त्यभावात्। न हि विना लक्षणां जीव-परमात्मनोरैक्यं सम्भावयितुमपि शक्यमिति सिद्धान्तिमतं दूषयति न चेति। सामानाधिकरण्यमैक्यं यद्वा जीवब्रह्म-शब्दाभ्यां तद्वाचके पदे लक्ष्येते तयोः सामानाधिकरण्यानुपपत्ति-रुक्तहेतोरित्यर्थः। अन्यथोपपत्तिं हेतुमाह रज्जुसर्पयोः इवेति। सर्पो रज्जुरिति तावत् पदद्वयात्मकं वाक्यं तच्च एकविभक्त्यन्तम् एकार्थञ्च सर्पानुवादेन रज्जुविधानात् तद्विधानञ्च सर्पस्वरूपेन शक्यते कर्त्तुं तथाच सर्पस्वरूपं सर्पपदेन अनुवादव्याजेन अप-बाध्य रज्जुस्वरूपमात्रमवशिष्टमित्येक एव अर्थं इति तद्वृत्तिपद-द्वयं यथा सामानाधिकरण्यं तथा त्वमिति पदेन जीवमपबाध्य तत्पदेन अवशिष्टब्रह्ममात्रप्रतिपादनादुभयोः पदयोरेकार्थ-वृत्तित्वात् सामानाधिकरण्यमुपपन्नमित्यर्थः। ननु एवमपि न एकार्थतापरमात्मपदं यद्यपि चिदात्मन उपस्थापकं सत् तद्वृत्तिस्तथापि त्वम्पदं जीवाभावोपस्थापकं तथाच भिन्ना-र्थयोरेकार्थे वृत्तिः कुत इति चेत्? अभावस्य अधिष्ठानस्वरूपा-नतिरेकात्। ननु मास्तु उभयपदे लक्षणा तथापि ब्रह्मपदस्य सा दुष्परिहरा विशिष्टे शक्तस्य शुद्धोपस्थितौ लक्षणापेक्षत्वा-

शास्त्रमपुरुषार्थे जीवे पर्य्यवसितमिति न प्रमाणं स्यात् इति वाच्यम्।

सत्यं ज्ञानमनन्तं ब्रह्मेति मन्त्रवर्णात् ब्रह्मणः सत्यत्वे अवधारिते परिशेषात् जीवस्यैव संसारिणो बाधात्। ननु कोऽयं जीवः चैतन्यं जड़ो वा? आद्ये ब्रह्मैव इति बाधानुपपत्तिः। द्वितीये घटादिवद्भोक्तृत्वानुपपत्तिरिति चेत्? नैष दोषः

दिति चेत्? न, सत्त्वादिपदादिव तत्पदादपि शुद्धस्यैव उपस्थितेः। ननु तथापि तत्त्वमसि वाक्ये जीवबाधो न युक्तः तत्पदबाधया जीवत्वविधानात् तत्पदार्थस्य पूर्वनिर्दिष्टत्वेन अनुवादार्हत्वात्। ननु तर्हि अयम् आत्मा ब्रह्मेति वाक्ये का गतिः? तत्र जीवस्यैव बाधप्रतीतिस्तर्हि विनिगमनायां न हेतुरिति।

यदि जीवपक्षपाती ब्रह्मण एव बाधमाशङ्केत तदा शास्त्रं प्रतारकवाक्यवत् अपुरुषार्थजीवस्वरूपतात्पर्य्यकम् अप्रमाणं स्यादिति सिद्धान्तिशङ्कामनूद्य दूषयति नच इत्यादिना।

ब्रह्मपदार्थस्वरूपप्रमाणसत्यादिवाक्यविरोधात् मा विनिगमो न वा जीवावशेषशङ्केति हेतुमाह सत्यमिति। ननु किञ्चित् आत्मैव जीवस्तदन्यो जड़ो वेति दूषयति विकल्पयन् आशङ्कते ननु इति। भोक्तृत्वेति भोगस्य चित्प्रधानत्वादित्यर्थः। जीवो न ब्रह्म अस्वप्रकाशत्वात् घटवत् नापि जड़ो भोक्तृत्वात् व्यतिरेके घटवत् एव तस्मात् जड़ाजड़विलक्षणो निर्वचनीयो जीव इति सबाधार्ह एवेति परिहरति नैष दोषः चैतन्याभासत्वेनेति। चैतन्यलक्षणरहितोऽस्वयं प्रकाश-

चैतन्याभासत्वेन तस्य प्रसिद्धजड़ाजड़विलक्षण-त्वात्। न च नीरूपस्य चैतन्यस्य आभासानुपपत्तिः नीरूपस्याऽपि गगनस्य स्वच्छे जले आभासदर्शनात् "रूपं रूपं प्रतिरूपो बभूव" इति श्रुतेश्च। तथा चेदं सर्वं यदयमात्मेति शास्त्रात् सर्वस्य अज्ञानतत्कार्य्यस्य बाधे केवल आनन्द-रूपः परमात्मैव अपवर्गे अवशिष्यते इति न किञ्चित् अनुपपन्नम्।

त्वात् भोक्तृत्वाच्च चैतन्यवदाभासमानत्वाच्च चैतन्याभास इति चैतन्यच्छाय इत्यर्थः। ननु चैतन्यस्य अरूपत्वात् तच्छायात्मा जीवो न युज्यते न हि नीरूपस्य वायोः छाया क्वचित् दृष्टेति न इत्याह न चेति। तत्र हेतुमाह नीरूपस्यापि इति। ननु जलेन गगनस्य आभासो नीरूपत्वादेव कथं तर्हि जल-निष्ठतया तत्प्रतीतिः ? तद्वर्त्तीनां सविह्वकरादीनामारोपादिति गृहाण ततो न चिदाभासो जीव इति न अत्यल्पे अगाधे च जले महाकाशप्रतीतेरुपरिवर्त्तिगगनाभासस्य अकामेनापि स्वीकारात्। नहि विना उपरिवर्त्तिमहाकाशच्छायां तत्परि-माणमहत्वभ्रमो जले सम्भवति तस्मात् अस्त्येव जले गगनाभास इति कथं न चैतन्याभासो जीव इति युक्तिसिद्धं चिदाभासं जीवं श्रुत्यापि साधयति रूपमिति। उपाधिमुपाधिं प्रति इत्यर्थः। प्रतिरूपः प्रतिभासः प्रतिच्छायेति यावत्। ननु संसारिणो जीवस्य बाधेऽपि न आत्मनो मुक्तिः उपपन्ना वाह्य-संसारस्य समूलस्य अनर्थात्मनोऽनुच्छेदादिति न इत्याह

तन्न, बन्धमोक्षयोर्वैयधिकरण्यापत्तेः मोक्षार्थिप्रवृत्त्यनुपपत्तेश्च न हि अन्यस्य मोक्षार्थमन्यो यतते न वा स्वनाशः पुरुषार्थः। न च दुःखनिवृत्त्या दुःखाभाव एव पुरुषार्थः। कस्य अयं पुरुषार्थः स्यात् स्वस्यैव बाधितत्वात्। न च जीवात्मा असत्यः अनेन जीवेन आत्मनेति

तथा चेति। स्वरूपानन्दावभासावरकाज्ञानादेरिदं सर्वमित्यादिवाक्येन बाधितत्वात् निरावरणानन्दात्मा मुक्तित्वेन अवतिष्ठत इति चैतन्याभासपक्ष एव श्रेयानिति।

अविद्योत्थं चिदाभासं जड़ाजड़विलक्षणम्।
जीवं ये बाध्यमित्याहुस्तानाचार्य्यो निषेधति॥

तन्नेति। भोक्ता तावज्जीव एवाहं सुखीत्यादिप्रतीतेः स्वसमवेतसुखसाक्षात्कारस्य च भोक्तृत्वात् भोक्तृत्वञ्च न कर्त्तृत्वं विना अकर्त्तुरभोक्तृत्वात् कर्त्तृत्वञ्च न प्रमातृत्वं विना पूर्वं जानाति तत इच्छति ततः करोति इति सर्वजनीनत्वात् ततो नवविधोऽपि बन्धो जीवस्यैव तद्बाधेन जगदुपादानाज्ञानबाधेन च परमात्मनोऽपवर्गो निरावरणसुखात्मनावस्थितिर्मुक्तिरिति। बन्धमोक्षयोर्वैयधिकरण्यप्रसङ्गे हेतुमाह बन्धमोक्षयोरिति। किञ्च यदि जीवबाधस्तदा श्रवणादौ कः प्रवर्त्तेत मोक्षार्थीति चेत्? कस्य मोक्षमिच्छति परस्य स्वस्य वा? नाद्यः विरोधात्। नहि अन्यप्रयोजनाय अन्यो यतते इति क्वचित् अपि दृष्टपूर्वमिति आह मोक्षार्थि इत्यादिना। स्वस्य चेत्? तर्हि स्वनाशो वा पुरुषार्थः स्वदुःखनिवृत्तिर्वा? आद्यं निराचष्टे न वेति। स

सत्येन परमात्मना अभेदश्रवणात् "नान्योऽतोऽस्ति द्रष्टा" इत्यादिना भेदप्रतिषेधाच्च। न च स्वतः असंसारिस्वभावस्य परमात्मनः संसारिस्वभाव-जीवात्मतानुपपत्तिः अविद्याद्युपाधिसम्बन्धात् नभोनीलिमवत् उपपत्तेः।

किं स्वतः पुरुषार्थः ? उत पुरुषार्थसाधनम् ? नाद्यः सुखदुःखा-भावेतरत्वादिति वा शब्दार्थः। द्वितीयं निराचष्टे नच इति। दुःखं हि जीवोपादानकम् उपादाननाशश्च उपादेयनाशे हेतुः इति आत्मनाशात् दुःखनिवृत्तिरिति भवति दुःखाभावः पुरुषार्थस्तत्साधनमात्मनाशोऽपि तथेति न चेति अन्वयः। तत्र हेतुः कस्येति किं दुःखाभाव इत्येव पुरुषार्थः उत आत्मीय इति ? नाद्यः, शत्रुदुःखाभावस्यापि तत्त्वापत्तेः। न द्वितीयः आत्मनो नष्टत्वात् कस्य पुरुषार्थः स्यात् इत्यर्थः।

आत्मबाधमङ्गीकृत्य तत्र पक्षे मोक्षाद्यनुपपत्तिरुक्ता सम्प्रति असत्यत्वाभावात् न बाध इति उपपादयति न चेति। असत्य इति छेदः कल्पितो न च इत्यर्थः। सत्यत्वग्राहकमाना-भावाद्वा जीवोऽसत्य उत युक्तिबाधाद्वा ? असत्यत्वावेदकप्रमाण-सद्भावात् वा ? आद्यं पराचष्टे अनेनेति। ननु जीवपरमात्मनोः अभेदमात्रं प्रतीयते न जीवसत्यत्वं तत् कथं न जीवः कल्पित इत्याशङ्क्य सत्यं ज्ञानमिति आत्मपदार्थनिर्वचनसिद्धमात्म-स्वरूपमाह सत्येनेति। तथाच सत्यात्मनो जीवस्य असत्यत्व-बाधितमित्यर्थः। ननु भेदग्राहिणि प्रत्यक्षे सति अभेदश्रुतिः उपचरिता इत्याशङ्क्य दूषणान्तरमाह नान्योऽत इति। भेदस्य

न च "रूपं रूपं प्रतिरूपो बभूव" इति वाक्यात् आभासरूपत्वं जीवस्येति वाच्यं? तत्र हि तत्तन्मनुष्यत्वाद्याक्रान्ततत्तच्छरीरसादृश्यस्यैव प्रतिरूपपदेन विवक्षितत्वात्। भवतु वा प्रतिविम्बस्तथापि नासत्यः प्रत्यभिज्ञानेन विम्बप्रतिविम्बयोः अभेदग्रहात्। कथं तर्हि भेदव्यवहारः? एकस्मिन् एव स्वरूपे सर्वकल्पना-

पारमार्थिकत्वे तन्निषेधो न स्यात् इत्यर्थः। सत्यत्वे जीवस्य युक्तिविरोधपक्षं प्रतिक्षिपति न चेति।

जीवासत्यत्वग्राहिप्रमाणसद्भावपक्षं निराचष्टे न च रूपं रूपमिति। नच वाच्यमिति प्रतिज्ञायां हेतुमाह तत्र हि इति।

तत्तन्मनुष्यपशुपक्ष्यादिशरीराणि द्विराहृत्तरूपशब्दार्थः। तत्तच्छरीरेण सादृश्यं प्रतिरूपशब्दार्थः यथा मुद्राप्रतिमुद्रान्याये मुद्रासादृश्यमेव प्रतिमुद्राशब्देन उच्यते न अर्थान्तरं तथा प्रतिरूपशब्देन रूपसादृश्यमेव उच्यते न आभास इत्यर्थः। यथाहुः देहं देहं प्रविष्टः संस्तद्देहाकारतामगादिति प्रतिरूपशब्दस्य दर्पणमुखादौ रूढ़स्य कथमन्यार्थत्वकथनं तत्राह भवतु इति। तर्हि दर्पणमुखमसत्यमेवेति तद्वज्जीवोऽपि कथं सत्य इति तत्राह तथापि इति। तदेव इदं मुखमिति प्रत्यभिज्ञानुरोधाद्विम्बप्रतिविम्बयोः अभेदे सत्यविम्बात्मकत्वात् प्रतिविम्बमसत्यं कथं स्यात् इत्यर्थः। आभासस्तु उपाधिगतत्वं तच्च न जीवः किन्तु जीवधर्मः जीवस्त्वाभासविविक्ता चिदेव ततोनासत्य इति भावः। तदुक्तं।

रहिते मुखचन्द्रादौ बिम्बप्रतिबिम्बस्वरूपमिति त्रिविधव्यवहारस्य उपाध्यनुप्रविष्टत्वारोपानन्तरं दर्शनात् । तस्मात् तत्त्वमस्यादिवाक्ये बाधायां सामानाधिकरण्यमिति कल्पना वेदवाह्या न न्याय्या । अतो लक्षणया परिपूर्णसच्चिदानन्द-प्रत्यगात्मावबोधनम् अनुपपन्नमिति ।

"उपाधिरन्तःकरणन्त्वमर्थे जीवत्वमाभासनमत्र तद्वत् ।
तदन्विता चित्प्रतिबिम्बमेवमनन्वितां तामिह बिम्बमाहुः ॥"

इति । आभासनमाभास इत्यर्थः । ननु प्रतिबिम्बरूपी जीवो बिम्बमेव चेत् ? कथं तर्हि बिम्बप्रतिबिम्बं स्वरूपं चेति भेदव्यवहार इति शङ्कते कथमिति । एकत्वेऽपि भेदव्यवहारस्य उपाध्यन्वयव्यतिरेकानुविधायित्वात् न शङ्केति हेतुमाह एकस्मिन् एवेति । भेदाभेदमतव्युदासाय एवकारः । ननु एकस्मिन् नित्ययुक्तं तस्य अनेकप्रपञ्चात्मकत्वात् तत्राह सर्वेति । अज्ञानवशात् अनेकरूपत्वेऽपि स्वरूपं वस्तुतः कल्पनारहितमिति अभिन्नमेव तत् इत्यर्थः । जीवस्य अनाभासत्वे सिद्धमर्थमुपसंहरति तस्मात् इति । यद्वा भवतु सत्यो जीवस्तथापि सामानाधिकरण्यं बाधायां किं न स्यात् इति आशङ्कामुपसंहारव्याजेन परिहरति तस्मात् इति । बाधविरोध्येव सत्यमिति कथं तस्य बाध इत्यर्थः । ननु किमिति इयं कल्पना वेदवाह्या वैदिकैरेव एकदेशिभिः स्वीकारादिति नेत्याह न न्याय्येति । एवमेकदेशिनं सिद्धान्तिमुद्रया पराकृत्य लक्षणानिरासपक्षमुपसंहरति अत इति । पूर्वोक्तलक्षणानुपपत्ति-हेतुसूचनार्थोऽतः शब्दः ।

अत्र उच्यते।

विरुद्धयोरभेदो हि न वेदेन प्रमीयते।

अनन्यगतिकत्वेन मानान्तरस्य बाधनम् ॥३७॥

यदत्र उक्तं मुख्यार्थानुपपत्त्यभावात् न लक्षणा इति तत् न विरुद्धयोर्जीवपरमात्मनोः अभेदस्य प्रमाणेन बाधितत्वात् न हि विरुद्धयोः अभेदः क्वचित् प्रमाणेन दृष्टः न च मानान्तरस्य वेदेन

अखण्डार्थपरत्वं हि पदयोर्लक्षणां विना।
निर्णीयेत्थं तमाचार्य्यः पूर्वपक्षं निषेधति॥

अत्र उच्यते इति। महावाक्यनिष्ठपदे लक्षणाभावः किं मुख्यार्थानुपपत्त्यभावात्? अखण्डार्थे तात्पर्य्याभावात् वा? आद्यं निषेधति विरुद्धयोः इति। संसार्य्यसंसारिणोः अभेदस्य प्रत्यक्षादिविरोधात् अयोग्यतया वेदेन प्रमापयितुमशक्यत्वात् मुख्यार्थस्य अनुपपन्नत्वात् तन्मूलका लक्षणा स्यात् एवेत्यर्थः। द्वितीयं निराचष्टे ह्येति।

अखण्डैकरसे तात्पर्य्यग्राहकषड्विधलिङ्गस्य सत्त्वात्तस्य च अतिप्रसिद्धत्वात् तात्पर्य्याभावात् न लक्षणाभाव इत्यर्थः। ननु पूर्वापरविरोधे पूर्वदौर्बल्यं प्रकृतिवदिति न्यायेन ब्रह्मात्मनोरभेदसिद्धये च सर्वभेदग्राहिमानबाधस्य अवश्यं-वक्तव्यत्वात् संसार्य्यसंसारिभेदग्राहि मानं बाधित्वैव तयोरैक्यं वेदो बोधयतु ततः कथं मुख्यार्थानुपपत्तिरिति तत्राह अनन्येति। परिपूर्णब्रह्मात्मैकरसाखण्डार्थसिद्धये यत् सर्व-मानान्तरस्य बाधनं तदनन्यगतिकतया यत्र तु कथमपि

बाधितत्वात् न अनुपपत्तिः न हि बाध्यमित्येव बाध्यते किन्तु स्वविषयसिद्धान्यथानुपपत्त्या इह तु वृत्त्यन्तरेण अपि तदुपपत्तेर्मुख्यार्थे अनुपपत्तिरेव अन्यथा सर्वत्र लक्षणोच्छेदप्रसङ्गः। लोकेऽपि निश्चितप्रामाण्ये एव लक्षणा। तथा च तादृशवाक्यविरोधेन विरोधिमानान्तरस्य बाधितत्वात् अनुपपत्त्यभावात् न लक्षणा स्यात्।

न च लक्ष्यार्थस्य असङ्गस्य वाच्यार्थेन सम्ब-

प्रमाणान्तराबाधेन स्वार्थसिद्धिर्भवति तत्र तद्बाधो नोचितः, तथाच मानान्तरमनपबाध्य तदनुरोधेन मुख्यार्थानुपपत्तिमालोच्य वेदो लक्षणया प्रत्यक् ब्रह्मणोरैक्यमवबोधयतीति सिद्धा तत्र लक्षणा इत्यर्थः। पूर्वपक्षमनूद्य दूषयन् श्लोकं व्याचष्टे यदत्र उक्तमित्यादिना। ननु विरुद्धयोरपि अभेदो रूप्यशुक्तिकादौ दृष्ट इति तत्राह प्रमाणेनेति। इह तु इति तत्त्वमस्यादिवाक्ये वृत्त्यन्तरेण लक्षणावृत्त्या इत्यर्थः। तदुपपत्तेः प्रत्यग्ब्रह्मणोरैक्यपरत्वोपपत्तेः, तत्त्वमस्यादिभिर्न प्रमाणान्तरबाध इति शेषः। प्रमाणान्तराबाधकफलमाह मुख्यार्थे इति। ततो लक्षणा सिद्धेति भावः। प्रमाणान्तरविरोधेन मुख्यार्थानुपपत्त्यननुसरणे विपक्षे बाधकमाह अन्यथेति।

शुद्धस्य सर्वासङ्गिनो ब्रह्मात्मैक्यस्य लक्ष्यत्वप्रयोजकरूपाभावात् न तत्र लक्षणेति पूर्वोक्तमनूद्य दूषयति। नच इति वाक्ये लक्षणामधिकारी कल्पयति तत्कल्पनञ्च तत्त्वसाक्षात्कारोत्तरं

न्धानुपपत्तिः स्वतोऽसङ्गस्याप्यविद्यान्तःकरणाद्युपाधिसंसर्गस्य अविद्याध्यारोपितस्य दिवान्धपरिकल्पितसवितृतमःसंसर्गवत् उपपत्तेः।

कल्पितसम्बन्धेन लक्षणा पारमार्थिकी न स्यात् इति चेत्? न उच्चैर्वाच्यम्, अद्वैतविरोधेन एव द्वैतस्य असत्यत्वेऽपि अद्वैतवादिनां सिद्धान्तविरोधस्याऽतिस्पष्टत्वात्।

न च लक्ष्यपदार्थे मूकताप्रसङ्गः पदार्थप्रतिपादकविज्ञानमानन्दं ब्रह्म इत्यादिनैव तत्प-

प्राग् वा? नाद्यः वैयर्थ्यात् अन्योन्याश्रयापत्तेश्च। साक्षात्कारोत्तरं कल्पना कल्पनोत्तरञ्च साक्षात्कार इति लक्षणाया योग्यतासम्पादकत्वेन वाक्यार्थप्रतीतौ कारणत्वात्। द्वितीयश्चेत् तर्हि वाच्यसंसर्गः सुसम्पाद्य इत्याह स्वत इति। अयमर्थः अविद्योपाधिकं चैतन्यं तत्पदवाच्यम् अन्तःकरणोपाधिकञ्च त्वम्पदवाच्यं ताभ्यां लक्ष्यस्य प्रत्यग्ब्रह्मैक्यस्य तत्त्वसाक्षात्कारात् प्रागवस्थायामविद्याया विरोध्यभावेन सत्त्वात् तत्कल्पितः सम्बन्धोऽपि वर्त्तते इति तदुपाधिके कथं न लक्षणेति।

ननु कल्पितसम्बन्धमूललक्षणाया अपि कल्पितत्वात् वस्तुत्वं न स्यात् तथाच तन्मूलवाक्यार्थसाक्षात्कारोऽपि कल्पितः स्यादिति शङ्कते कल्पितेति। तदेतन्नानिष्टमित्युपहासव्याजेन आह न उच्चैरिति।

ननु पदाल्लक्ष्यस्य उपस्थितिरस्ति न वा? नास्ति

दार्थप्रतिपादनात् तत्र च लक्षणाभावात् न अनवस्था न च ज्ञानत्वादिसामान्यवैशिष्ट्ये निर्धर्मकलक्ष्यपदार्थासिद्धिः नानोपाधिसम्बद्धव्यक्त्यतिरिक्तसामान्यानभ्युपगमात् ।

चेत् तर्हि मूकतेति यदुक्तं तदनूद्य दूषयति नच इति । सत्यादिपदादेव लक्ष्योपस्थितेरिति हेतुमाह पदार्थेति । ननु सत्यादिपदं ब्रह्मात्मनि अभिधया प्रवर्त्तते लक्षणया वेति विकल्प्य उभयथापि दूषितं तत्र लक्षणया सत्यादिशब्दानां ब्रह्मणि प्रवृत्त्यनङ्गीकारेण तत्पक्षदोषस्य अपरिहरणीयत्वमाह तत्र चेति । ननु सत्यादिपदम् अभिधया ब्रह्मणि प्रवर्त्तते इति पक्षो न युज्यते तत्त्वमस्यादिपदेष्वपि तथा प्रसक्तेरिति चेत् ? न, भोक्तृत्वकर्त्तृत्वापरोक्षत्वादिविशिष्टे त्वम्पदस्य शक्तिग्रहात् त्वम्पदश्रवणे तादृशस्यैवोपस्थितेः एवं तत्पदेऽपि बोद्धव्यम् । ननु एवं सत्यत्वज्ञानत्वादिमति सत्यादिशब्दप्रवृत्तेर्न ततो लक्ष्यं शुद्धं ब्रह्मात्मैक्यं प्रतीयेत इति न इत्याह न च इति । तत्र हेतुमाह नानेति । अयमर्थः ज्ञानशब्दस्य हि न तावत् ज्ञानव्यक्तौ सङ्गतिग्रह आनन्त्यव्यभिचारदोषात् ।

ज्ञानत्वसामान्यवतीषु व्यक्तिषु चेत् ? तत् किं त्रितयपदार्थवादिनो मतमेतत् जातिमात्रपदार्थवादिनो वा ? उभयथापि ब्रह्मणो वाच्यत्वाक्षतिः तथाहि सामान्यं हि नानाव्यक्तिषु अनुगतं तास्वेव अनुगतव्यवहारहेतुः स्वीक्रियते तच्च ज्ञानत्वसामान्यं ब्रह्मणो न भिन्नं नानासु भिन्नेषु उपाधिषु ज्ञानत्वव्यक्तित्वेन स्वीकृतेषु सम्बद्धानुगतताया व्यक्तिर्व्यज्यते नवेति ? व्यक्तिश्चेत् ? तदन्यस्य तद्भिन्नस्य सामान्यस्य अनभ्युपगमात् निष्प्रयोजनत्वात्

अनुगतव्यवहारस्य अनुगतव्यक्त्या एव उपपत्तेः प्रतिविम्बेषु विम्बवत्। त्वमर्थस्तु उक्तविधया साक्ष्यादिपदेन वक्तुं शक्य एव।

ततश्च उभयमतेऽपि ज्ञानत्वस्थानीयं शुद्धं ब्रह्मैव वाच्यमिति। एवं सत्यादिपदेऽपि ऊह्यम्।

जातेर्निष्प्रयोजनत्वमुपपादयति अनुगतेति। अनेकोपाधिषु सम्बद्धया व्यक्त्या उपाधिषु अनुगतव्यवहारोपपत्तौ दृष्टान्तमाह प्रतिविम्बेष्विति। यथा दशसु जलपात्रेषु दश चन्द्रप्रतिविम्बाः प्रतीयन्ते तत्रापि अयं चन्द्रोऽयं चन्द्र इति अनुगतव्यवहारः स च न चन्द्रत्वजातिकृतः तत्र व्यञ्जकाभावेन चन्द्रत्वजात्यनभ्युपगमात् उपाधीनाञ्च अननुगतत्वात् सर्वोपाधिषु अनुगता या चन्द्राव्यक्तिः तयैव तत्र अनुगतव्यवहारः क्रियते तद्वदन्तःकरणवृत्तिषु अभिव्यक्ता या चैतन्यात्मकब्रह्मव्यक्तिस्तयैव तत्र अनुगतव्यवहारः सम्पाद्यते इति व्यर्थो ज्ञानत्वजातिस्वीकार इति। एतेन सत्यत्वादिजातिरपास्ता। ननु सत्यादिपदैस्तदर्थोपस्थितावपि त्वम्पदलक्ष्योपस्थितिः कुत इति न च सत्यादिपदादेव तदुपस्थितिः ब्रह्मपदसामानाधिकरण्यादिति तत्राह त्वमर्थस्तु इति। त्वं शब्दस्य लक्ष्योऽर्थ इत्यर्थः। आदिपदेन प्रत्यगादिशब्दमाह उक्तविधयेति।

अज्ञानानि अनेकानि सचित्कानि चित्प्राधान्येन साक्षिपदवाच्यानि साभासाज्ञानेषु व्यक्तिस्थानीयेषु संवद्धा चैतन्यव्यक्तिः तदवच्छेदकत्वेन घटत्वादिवद्वाच्या तथाच साक्षिपदात् चैतन्यस्य इत्यमुपस्थितिसम्भवात् तदंशेऽपि न मूकता इत्यर्थः।

ननु एवं सत्यज्ञानसाच्यादिपदैः अनेकव्यक्तिस्थानीयसचित्कोपाधिसामान्यस्थानीयब्रह्मचैतन्यस्य उपस्थितौ कथं तत्त्वम्पदलक्ष्ययोः अखण्डत्वसिद्धिरिति चेत्? तदेतन्न नैयायिकचोद्यं पशुना यजेतेत्यत्र पशुपदाच्चितयोपस्थितेरविशेषेऽपि योग्यतया यागसाधनत्वं यथा पशुव्यक्तेरेव न जातेः तथा प्रकृतेऽपि इति न किञ्चित् अनुपपन्नम्। मीमांसकस्य चैतच्चोद्यमेव न संभवति जातिमात्रस्यैव पदार्थत्वात् तथाच व्यक्तिस्थानीयसाभासोपाधिसम्बन्धिब्रह्मचैतन्यस्य एव सामान्यस्थानीयस्य सत्यादिसाच्यादिपदेभ्यः उपस्थितेस्तत्त्वमस्यादिवाक्यं तदादाय कथं न अखण्डार्थे पर्य्यवसितमिति। ननु तथापि सत्यादिसाच्यादिपदानां तत्त्वमस्यादिपदलक्ष्ये शुद्धे मुख्यया अभिधया वृत्त्यावृत्तिर्न युक्ता यतो वाचोनिवर्त्तन्ते इत्यादि श्रुतिविरोधात् सम्प्रदायविरोधाच्च। यथाहुः।

तत्त्वम्पदार्थविषयो नय एव योज्यः
सत्यादिवस्तुनि न तत्र विशेषकल्पः।
सत्यादिशब्दविषयाः शबलास्तदर्थ-
भागेषु लाक्षणिकवृत्तिरपीह तुल्या॥

इति। मैवं तथा हि न तावत् श्रुतिविरोधः साहि अभिधावृत्तिं निषेधन्ती शुद्धेऽविद्यातकार्य्यानुपरक्ते निषेधति? उताहो तदुपरक्तेऽपि? इति आद्ये नानिष्टापत्तिः मुक्तयवस्थायां शुद्धे ब्रह्मणि पदप्रवृत्तेरनभ्युपगमात् उपाध्युपरक्तेऽपि इति चेत्? न, तत्र अदोषात् कथं तर्हि शुद्धचिन्मात्रलक्ष्यस्वरूपोपस्थिति रिति चेत्? न, उपाधेस्तटस्थतया अभिधेयकोटौ अप्रवेशेन शुद्धसच्चित्सुखात्मैकरसस्य तत्त्वमसीति पदद्वयलक्ष्यस्य सत्यादिपदेभ्यः उपस्थितिसम्भवात् यथा धेनुपदं गोत्वोपहितव्यक्तिशक्तमपि गोत्वं तटस्थतया वाच्यकोटौ

नच साक्षिणि विप्रतिपत्तिः सर्वप्रमाण-
व्यवहारोच्छेदप्रसङ्गात् अज्ञातस्य अप्रमाविषयस्य

अप्रविष्टमिति धेनुशब्दात् व्यक्तिविशेष एवोपतिष्ठते न गोत्वमिति तद्वदिति न श्रुतिविरोधः। यच्च सम्प्रदायविरोध इति सत्यं तैरपि सम्प्रदायविद्भिः श्रुतिविरोधपरिहारायैव वेदान्तपदेषु लक्षणा स्वीकृता स विरोधोऽस्मदुक्तप्रकारेणापि चेत् परिहर्त्तुं शक्यते किमिति लक्षणाश्रयणं सत्यादिपदे मुख्ये सम्भवति लक्षणाया अन्याय्यत्वात्। नच एवं तेषामज्ञतापत्तिः उपायस्य उपायान्तरादूषकत्वात् तेषामपि श्रुतिविरोधपरिहारस्यैव प्रयोजनत्वात् स च यथायथा उपपद्यते तथा तथा युक्तिः कल्पयितव्येति तेषामभिप्रायादिति सर्वमनवद्यम्। यदा च अज्ञानमेकं तदुपरक्तं चैतन्यं साक्षीति तदा अज्ञानमुपाधिं तिरस्कृत्य शुद्धमेव चैतन्यं त्वम्पदलक्ष्यं साक्षिपदादुक्तन्यायेन उपतिष्ठते इति बोद्धव्यं इमं च सर्वमभिप्रायं प्रकटयितुमाचार्य्यो नानोपाधीत्यादिवाक्ये सामान्यस्य व्यक्त्यपेक्षत्वात् उपाधिपदस्थाने व्यक्तिपदे दातव्येऽपि यतस्तदुपेक्ष्य उपाधिपदं प्रयच्छति ततो विद्म उपाधेरन्यत्र वाच्यकोटौ अप्रवेशवदिहापि शुद्धमेव सत्यादि पदवाच्यकोटौ प्रविशति न अज्ञानादि इति न अस्मदीय आचार्य्य उपालम्भमर्हतीति।

ननु कः साक्षी? न तावत् परः तस्य असङ्गत्वेन साक्षित्वानुपपत्तेः नहि विना साक्ष्यसम्बन्धं लोके कश्चित् साक्षी प्रसिद्धः न अपि जीवः तस्य भोक्तृत्वेन साक्षित्वानुपपत्तेः उदासीनस्यैव साक्षित्वात् नच आभ्यामन्यः कश्चित् सम्भवति अप्रसिद्धत्वात् तत्राह नच इति। साक्ष्यभावः किं प्रमाणाभावात् निष्प्रयोजनत्वाद्वा? नाद्य

साक्षिव्यतिरेकेण सिद्ध्यभावात् प्रमाणसिद्धत्वे अज्ञानस्य निवृत्तिर्न स्यात् तथात्वे वा प्रमाण-वैयर्थ्यात् प्रमाणकृतातिशयाभावात् भ्रमसिद्धस्य प्रमाणविषयत्वविरोधात्।

तथाच प्रमाणप्रवृत्तेः पूर्वमेव अज्ञातत्वेन साक्षिणा साधितमेव प्रमेयं प्रमाणं विषयी-

इत्याह प्रमाणेति। प्रमाणव्यवहाराभावः साक्ष्यभावे स्यात् कथं अनधिगतार्थगन्तृ हि प्रमाणं तत्र अर्थस्य प्रमाणविषयत्वेन सम्मतस्य अनधिगतत्वं कुतः सिद्धं किं प्रमाणात्? उत भ्रमात्? उत स्वतः? अन्यतो वा? आद्यं निरस्यति अज्ञातस्येति। अप्रमा-विषयस्येति हेतुगर्भं विशेषणं प्रमाविषयत्वायोग्यस्य इत्यर्थः। एतदेव स्पष्टयति प्रमाणेति। प्रमाणस्य विषयानिवर्त्त-कत्वात् इत्यर्थः। तथा अस्तु इति वादिनं प्रति बाधक-माह तथात्वे वेति। वैयर्थ्यमुपपादयति प्रमाणेति। अतिशयो हि अज्ञाननिवृत्तिः सा चेत्? न प्रमाणात् किं तेन इत्यर्थः। विषयावभास एव प्रमाणफलमिति चेत्? न, सत्यज्ञानलक्षणा-ऽवरणे विषयावभासायोगादिति अज्ञातत्वं न प्रमाण-विषय इत्यर्थः। भ्रमादज्ञातत्वसिद्धिं पराचष्टे भ्रमसिद्धस्येति। अज्ञातत्वसिद्धेर्भ्रमत्वं विषयाज्ञातत्वबाधादेव वाच्यं तथाच तादृशि प्रमाणं कथं प्रवर्त्ततां विषयासत्त्वादित्यर्थः।

न अपि स्वतो जड़त्वात् तत्त्वं च अनात्मत्वात् अन्यतश्चेत् स एव तर्हि साक्षीति सिद्धः साक्षी इत्याह।

तथा चेति। एतेन निष्प्रयोजनत्वं प्रत्याख्यातं साधितं बोधितं ततः प्रमाणान्यथानुपपत्त्या सिद्धः साक्षी न विप्रति-

करोतीति युक्तम् अतो न अत्र विप्रतिपत्तिः।
तथाच सुरेश्वरः।

प्रमाणमप्रमाणं वा प्रमाभासस्तथैव च।
कुर्वन्त्येव प्रमां यत्र तदसम्भावना कुतः? ॥

नच पदयोरेकार्थत्वानेकार्थत्वविकल्पः, एकार्थत्वेऽपि वाक्यप्रमाणजन्यस्यैव ज्ञानस्य भेदभ्रमनिवर्त्तकत्वात्। नच एकपदवैयर्थ्यं तेन विना

पत्ति मर्हतीति उपसंहरति अत इति। अत्रार्थे आप्तवाक्यमुदाहरति। तथाच इति।

अत्र प्रमाणस्य साक्षिसाधकत्वमुक्तं तथा मिथ्याज्ञानं संशयज्ञानञ्च न प्रमाणात् सिद्ध्यति विरोधात् तदात्मकवृत्तेर्जड़त्वात् न स्वप्रकाशता न भ्रमात् तस्यैव भानस्य विचार्यमाणत्वात् तस्मात् साक्षिणैव तयोः सिद्धिरित्यर्थः। कुर्वन्त्येव प्रमां यत्रेति। वार्त्तिकपाठः। तदसम्भावना साक्षिणोऽसम्भावना।

पदयोस्तत्त्वमसीति वाक्यनिष्ठयोरेकार्थत्वाङ्गीकारेण परिहरति एकार्थत्वेऽपि इति। यद्यपि पदयोरेकार्थत्वमेव तथापि पदद्वयं स्वीकर्त्तव्यमिति शेषः। ननु ऐक्यज्ञानमेव अपेक्षितं भेदकृदज्ञाननिवृत्तये तच्चेदेकेनैव पदेन जनितं किं पदान्तरेणेति तत्राह वाक्येति। प्रमाणज्ञानं हि भेदभ्रमं निवर्त्तयति न विषयतो मिथ्याज्ञानं तच्च ज्ञानं नैकस्मात् पदात् पदमात्रस्य प्रमाहेतुत्वाभावात् ततो भेदभ्रमनिरासिज्ञानजननाय वाक्यत्वसम्प्रतिपत्तये पदान्तरमपेक्षणीयमेवे-

विरोधाभावेन लक्षणया अखण्डवाक्यार्थस्य प्रति-पादयितुमशक्यत्वात् पदमात्रस्य अप्रमाणत्वाच्च।

नच प्रधानवाक्ये लक्षणानुपपत्तिः इतरा-नुपसर्जनार्थप्रतिपादकत्वमेव हि प्रधानत्वं नाम तच्च लक्षणया मुख्यया वा इति अन्यदेतत् नच न्यायविरोधः यत्र प्रतिपाद्यस्य अर्थस्य शब्दशक्ति-गोचरत्वं तत्र न्यायावतारात्।

त्यर्थः। नचैकार्थत्वे पर्य्यायशब्दवत् वाक्यत्वानुपपत्तिः प्रवृत्ति-निमित्तभेदात् भोक्तृत्वादिकं हि त्वम्पदे प्रवृत्तिनिमित्तं सर्वज्ञ-त्वादि च तत्पदार्थे इति न पर्य्यायतापत्त्या वाक्यत्वक्षतिरिति।

ननु पदद्वयप्रयोगो न वाच्योपस्थितये तस्य अनिष्टप्रयोजन-त्वात् किन्तु लक्ष्योपस्थितये सा चेदेकपदात् सिद्धा किं पदा-न्तरेण पदस्यापि अनुभावकत्वात् विषयाबाधाच्च प्रामाण्योप-पत्तिरित्यभिसन्धिं निरस्यति न चेति। नहि विना घोष-निवासवाचिपदप्रयोगं गङ्गापदं तीरं लक्षयति मुख्यार्थे अनुप-पत्त्यभावात् तथाच तत्पदस्य त्वम्पदस्य वा अवस्थाने विशिष्टमेव तत उपतिष्ठेत न अखण्डैकरसमिति व्यर्था वेदे तदुक्तिः स्यात् तस्मात् लक्षणया अखण्डार्थलाभाय पदान्तरप्रयोग इति न वैयर्थ्यमिति हेतुमाह तेनेति। यदुक्तं पदमपि अनुभावकमिति तन्निरस्यति पदमात्रस्येति। पदमपि अधिकाभावात् स्मारकात् न विशिष्यत इति न्यायादित्यर्थः।

यदुक्तं प्रधानवाक्यं न लक्षणामर्हतीति तदनूद्य दूषयति नच इति। इतरेति तथाच सत्यामपि लक्षणायां न उक्तप्रधानत्व-

ननु कर्त्तृत्वभोक्तृत्वसुखित्वदुःखित्वाद्यनेकसंसारधर्मेभ्यो निष्कृष्टस्य प्रत्यगात्मनोऽवस्थात्रयानुगतस्य शुद्धस्य चिदंशस्य परमात्मना जगत्कर्त्तृत्वादिभ्यो निष्कृष्टेन आकाशाद्यनुस्यूतेन शुद्धेन परिपूर्णसच्चिदानन्दस्वभावेन अभेदो लक्षणया बोध्यते इति प्रतिपादितम्।

तथाच सर्वो भेदो न निराकृतः स्यात् अनात्मभेदस्य तदवस्थत्वात्।

क्षतिरिति भावः। न्यायविरोधपरिहारे हेतुमाह यत्रेति। तस्मात् लक्षणया तत्त्वमस्यादि महावाक्यं प्रत्यग्ब्रह्मणोरैक्यमखण्डैकरसं बोधयतीति। न यतो वाचो निवर्त्तन्ते इति वाक्येन विरोध इति भावः।

इत्थम् अखण्डे ब्रह्मात्मैक्ये वेदान्तानां समन्वयं निरूप्य तत्र प्रमाणविरोधं परिहर्त्तुं शङ्कामुत्थापयति ननु इति। शङ्कायाः स्पष्टतया उत्थानार्थं तत्त्वमस्यादिवाक्ये हेयमुपादेयञ्च तावदाह कर्त्तृत्वेत्यादिना। कर्त्तृत्वादिविशिष्टं सुषुप्त्याद्यवस्थावत् चैतन्यं त्वम्पदवाच्यं जगत्कर्त्तृत्वादिविशिष्टं वियदाद्युपादानं तच्छब्दवाच्यं तत्र आचार्य्येण अधिकारिणे उपदिष्टं महावाक्यं श्रुतं तत्संसार्य्यसंसारिणोः प्रमाणविरोधात् मुख्यार्थानुपपत्त्या त्वम्पदार्थे विरुद्धं कर्त्तृत्वादि तत्पदार्थे च विरुद्धं जगत्कर्त्तृत्वादिरूपं त्यक्त्वा तेभ्यो विरोधिरूपेभ्यो निष्कृष्टसत्चित्सुखात्मकं शुद्धम् अखण्डैकरसं जीवब्रह्मणोरैक्यं बोधयतीति प्रतिपादितमित्यर्थः। बोध्यते इत्यत्र महावाक्येनेति शेषः। भवतु एवं प्रतिपादनं तथापि कथं तत्र विरोधाशङ्केति तत्राह

नच आत्मपरमात्मनोर्भेदग्राहकप्रमाणवत् अनात्मभेदग्राहकस्यापि प्रत्यक्षादेः अप्रामाण्यमेवेति साम्प्रतं दृष्टान्तासिद्धेः नहि आत्मपरमात्मनोर्भेदग्राहकं मानमस्ति तयोः स्वयम्प्रकाशत्वेन मानाविषयत्वात् विशिष्टविषयस्य मानस्य विशेषणभेदगोचरत्वेन अन्यथासिद्धस्य आत्म-

तथाच इति। ननु कथं न भेदो निराकृतो जीवब्रह्मभेदस्य उक्तयुक्त्या निराकृतत्वादिति तत्राह अनात्मेति। भेदपदमनात्मभेदपरमित्यर्थः। यद्यपि अवस्थात्रयानुगतस्य आकाशाद्यनुस्यूतेनेति विशेषणमहिम्ना विजातीयभेदोऽपि निराकृत एव व्यभिचारिणां सूत्रधारादण्डादिवत् कल्पितत्वात् मृत्तिकेत्येव सत्यमिति श्रुतेः कार्य्याकाशादेर्मिथ्यात्वात् तत्प्रतियोगिकभेदस्यापि मिथ्यात्वात् तथापि विशेषणतात्पर्य्यमविदुषः शङ्का युज्यते एव इत्यभिप्रायः।

ननु विमतम् अनात्मभेदग्राहकमप्रमाणं भेदग्राहकत्वात् आत्मपरमात्मभेदग्राहकवदिति तत्राह न च इति। असाधारण्यं हेतुदोषं हेतुत्वेन आह दृष्टान्तेति। अप्रमाणं नाम प्रमाणत्वात्यन्ताभावाधिकरणं प्रमाणान्यद्वा उभयथापि घटादिकं सपक्ष एव निश्चितसाध्यवत्त्वात् अभेदग्राहकञ्च प्रमाणं तत्त्वमस्यादिवाक्यं विपक्षः ताभ्यां व्यावृत्तेरित्यर्थः। दृष्टान्ताभासानां हेत्वाभासेषु एवान्तर्भावादिति भावः। ननु कथं दृष्टान्ताभावो नाहमीश्वर इति जीवपरमात्मभेदग्राहकस्य प्रत्यक्षस्यैव विद्यमानत्वादित्याशङ्क्याह न हीति। किमिदं

**परमात्मभेदासाधकत्वाद्विशेष्याभेदग्राहकेण तत्त्वमस्यादिप्रमाणेन बाधितत्वात् न च अनात्मभेदग्राहकस्य प्रत्यक्षादेर्बाधकमस्ति।**

**नच अनात्मस्वरूपगोचरत्वेऽपि प्रत्यक्षादेर्न भेद-**

प्रत्यक्षं भेदमात्रं गोचरयति आत्मविशेषितं वा? नाद्यः आत्मभेदग्राहकत्वासिद्धेः दृष्टान्ताभावस्य तदवस्थत्वात्। अथ द्वितीयः तत्र आत्मशब्देन स्वप्रकाशं संवित्सुखात्मकं स्वरूपं गृह्यते? उत कर्त्तृत्वादिविशिष्टं वा? आद्यं निराचष्टे तयोरिति। द्वितीयं दूषयति विशिष्टेति। सविशेषणे हीति न्यायादित्यर्थः। विशेष्यभेदबाधमुपपादयति विशेष्येति। तथाच दृष्टान्तासिद्धिरेवेति भावः। किञ्च अहं न विश्वमिति अनात्मप्रतियोगिकभेदग्राहकं प्रत्यक्षं तच्च न अप्रमाणं विपरीतार्थगोचरप्रमाणाभावात् ततो बाधितम् अप्रमाणत्वानुमानमिति हेत्वन्तरमाह नच इति। आत्मानात्मानौ मिथो भिन्नौ विरुद्धधर्माक्रान्तत्वात्। द्रवकठिनवदित्याद्यनुमानसंग्रहाय आदिपदम्।

प्रत्यक्षादेर्भेदगोचरत्वे युक्तिबाधमाशङ्क्य पराचष्टे नच इत्यादिना। अयमर्थः किं प्रत्यक्षं भेदमात्रं गृह्णाति? उत धर्मिप्रतियोगिभेदान् गृह्णाति? नाद्यः, धर्मिप्रतियोगिप्रतीतिम् अन्तरेण भेदस्य प्रत्येतुम् अशक्यत्वात्। द्वितीयेऽपि क्रमेण ग्रहणं? किं वा युगपत्? यदापि क्रमतस्तदापि भेदं गृहीत्वा प्रत्यक्षादिधर्मिप्रतियोगिनौ गृह्णाति वैपरीत्येन वा? यदापि युगपत् तदापि दण्डी देवदत्त इतिवद्विशेषणविशेष्यतया गृह्णाति? उत

गोचरत्वं धर्मिप्रतियोगिभेदानां ग्रहे क्रमयौगपद्यादिविकल्पप्राप्तौ अन्योन्याश्रयात्माश्रयानवस्थाप्राग्लोपाविनिगमत्वाद्यनेकदोषग्रासादिति वाच्यम्।

अङ्गुलित्रयवत् परस्परासंस्पृष्टतयेति विकल्पसंग्रहाय आदिपदम्। धर्मिप्रतियोगिभेदात् प्रत्यक्षं गृह्णातीति द्वितीयपक्षो न उपपद्यते। तथाहि तत्र क्रमपक्षे भेदग्रहपुरःसरो धर्मिप्रतियोगिग्रहपक्षो न युक्तः भेदज्ञानं प्रति धर्म्यादिज्ञानस्य कारणत्वेन उक्तक्रमग्रहणायोगात्। अथ द्वितीयस्तदापि इदं विचारणीयं, किं स्वरूपेण धर्म्यादिग्रहणं भेदनिरूपकम्? उत घटत्वादिना? उत धर्मित्वेन प्रतियोगित्वेन? नाद्यः, क्षीरनीरयोस्तादात्म्यापन्नयोः स्वरूपेण भासमानयोरपि तदीयभेदाग्रहात्।

नापि द्वितीयः घटत्वादिना प्रतियोग्यादिग्रहस्य भेदापेक्षत्वेन अन्योन्याश्रयात्। अतएव न तृतीयः, भेदज्ञानाधीनं प्रतियोग्यादिज्ञानं धर्मिभिन्नस्य भेदनिरूपकस्य प्रतियोगित्वात्। एवं धर्मिज्ञानस्यापि भेदज्ञानपूर्वकत्वमूहनीयं तज्ज्ञानाधीनञ्च भेदज्ञानं प्रसिद्धमिति कथं न अन्योन्याश्रयः? किञ्च भेदः किं भिन्ने धर्मिणि वर्त्तते? उत अभिन्ने? न तावत् अभिन्ने तत्र भेदग्राहकस्य भ्रमत्वप्रसङ्गात्। अभिन्नं नाम भेदानधिकरणं तत्र चेत् भेदं गृह्णीयात् तज्ज्ञानं कथं न भ्रमः स्यात्? यदि आद्यः तर्हि किं स्वेनैव भेदभिन्ने धर्मिणि स्वयं भेदो वर्त्तते? उत भेदान्तरेण भिन्ने? न आद्यः, आत्माश्रयात् स्वभिन्ने स्वस्य वृत्तेः। द्वितीयश्चेत् सोऽपि अभिन्ने धर्मिणि? उत भिन्ने? इति विकल्पे

अतिरिक्तभेदागोचरत्वेऽपि स्वरूपभेदगोचर-

प्रथमे भेदस्य कल्पितत्वं द्वितीये स्वभिन्ने चेत् आत्माश्रयः यद्भेदनिरूपणार्थं स्वयमागतस्तेन भिन्ने चेत् तदा अन्योन्याश्रयः। अथ एतद्दोषपरिहाराय द्वितीयभेदस्य भिन्ने धर्मिणि स्थित्यर्थं तृतीयभेदस्वीकारश्चेत् तदा चक्रद्वयव्यवधानेन स्वस्य अपेक्षणात्। अथ तत्रापि पूर्वदोषनिवृत्तये चतुर्थभेदः स्वीक्रियते चेत्? तर्हि अनवस्था अथ गत्यन्तराभावात् अनवस्थापि आश्रीयते इति चेत्? तर्हि भेदाः किं क्रमेण धर्मिणि वर्त्तन्ते? उत युगपत्? क्रमेण चेत् तर्हि धर्मिणोऽनादित्वप्रसङ्ग उत्तरोत्तरभेदेन पूर्वपूर्वभेदे कार्य्यस्य धर्मिणि भिन्नव्यवहारस्य अन्यथासिद्धेः पूर्वपूर्वभेदवैयर्थ्येन प्राक्लोपप्रसङ्गश्च युगपत् चेत् तर्हि भिन्ने भेदस्थितिरिति पच्चर्त्तिः।

अथ एतद्दोषपरिहाराय एकविशिष्टे अपरस्थितिराश्रीयते इति चेत् तर्हि अविनिगमः एतद्भेदविशिष्टे एतद्भेदस्थितिरिति अत्र नियामकाभावात् किञ्च एवमपि भेदाः स्वीक्रियेरन् यदि भेदपरम्परावगाहिनी काचित् संविदुदयमासादयेत् न च सा अस्तीति प्रमाणाभावात् न अनन्तभेदस्वीकारः। अथ एतत्-सर्वदोषपरिहाराय धर्मिप्रतियोगिनौ भेदञ्च युगपदेव प्रत्यक्षम् अवलम्बते इति उच्यते तर्हि न तावत् परस्परासंसृष्टतया भेद-ग्रहः तत्प्रतीतेर्वैशिष्ट्यावगाहित्वनियमात्। ननु विशेषण-विशेष्यभावेन तर्हि प्रत्यक्षं भेदं गृह्णातु तर्हि भेदावगाहिन्येव प्रतीतिर्विशेषणप्रतीतिः? उत अन्या काचित्? नाद्यः, कार्य्य-कारणबुद्ध्योरेकत्वायोगात्। न द्वितीयः, विशेषणत्वेन ज्ञानस्य भेदज्ञानाधीनत्वात् स्वरूपेण भासमानस्य भेदज्ञानाजनकत्वस्य अवेदितत्वात् इत्यादि दूषणजातसंग्रहाय आदिपदमिति।

न च वाच्यमिति प्रतिज्ञायां हेतुमाह अतिरिक्तेति। ननु

त्वस्य दुरपह्नवत्वात् नच स्वरूपं भिन्नमितिप्रतीत्यनुपपत्तिः राहोः शिरः आत्मनश्चैतन्यमिति वत् उपपत्तेः।

न च भेदस्वरूपशब्दयोः पर्य्यायत्वापत्तिः स्वव्यवहारे इतरसापेक्षत्वनिरपेक्षत्वाभ्यां विशेषात् नच अभेदे तदनुपपत्तिः एकस्मिन्नपि देवदत्ते पितृत्वादिव्यवहारार्थं पुत्राद्यपेक्षा-

स्वरूपमपि भेदो युक्तिबाधितो भिन्नं नाम भेदाधिकरणं नच अभेदे आधाराधेयभाव इष्यते स्वरूपं भिन्नमिति प्रतीतिश्च सर्वजनसिद्धा ततः कथं स्वरूपभेद इति तत्राह नच इति। ननु स्वरूपभेदशब्दयोः प्रवृत्तिनिमित्तं भिन्नमस्ति न वा? न चेत् स्वरूपभेद इति सहप्रयोगो न स्यात्।

पर्य्यायाणां तददर्शनादिति पक्षं दूषयति नच इत्यादिना। स्वरूपपदं निरपेक्षत्वं निमित्तमादाय प्रवर्त्तते स्वरूपे भेदे भेदशब्दस्तु प्रतियोग्यादिसापेक्षत्वमिति न पर्य्यायतेति हेतुमाह स्वव्यवहारे इति। स्वभेदशब्दः स्वरूपशब्दस्तत्प्रयुक्तो व्यवहारः स्वव्यवहारस्तस्मिन् इत्यर्थः। ननु स्वरूपभेदशब्दयोः प्रवृत्तिनिमित्तभेदो न युक्तः स्वरूपभेदयोरैक्ये तन्मात्रवाचकपदयोः प्रवृत्तिनिमित्तभेदस्य अयुक्तत्वादिति न इत्याह न च इति। तत्र हेतुः एकस्मिन्निति। एकस्मिन् देवदत्ते पितृपुत्रशब्दप्रयुक्तव्यवहाराय प्रवर्त्तमानानां पित्रादिशब्दानां पुत्राद्यपेक्षत्वस्य प्रवृत्तिनिमित्तस्य अपेक्षाया दर्शनादित्यर्थः। ननु

दर्शनात् नच प्राप्ताप्राप्तविवेकेन सापेक्षत्वमेव भेदोऽस्त्विति वाच्यं ? तस्यापि स्वरूपानतिरेकात् नच स्वरूपाद् यस्य भेदस्तस्य निःस्वरूपत्वापत्तिः ? अन्यथा स्वरूपमेव अखण्डमिति वाच्यं घटात् घटस्य भेदेऽपि अघटत्वादर्शनात्।

नच घटात् एकस्मात् घटान्तरे किञ्चित् वैधर्म्यमस्त्येवेति वाच्यम् ? स्थितस्याऽपि तस्य उक्त-

स्वरूपस्य निरपेक्षत्वेऽपि भेदशब्दस्य तत्र प्रवृत्तौ इतरसापेक्षत्वम् आवश्यकं तथाच प्राप्ताप्राप्तविवेकात् सापेक्ष एव पदार्थो भेदशब्दवाच्योऽस्तु न स्वरूपं तस्य निरपेक्षत्वादिति तत्राह न च इति। तस्यापि इति सापेक्षस्य अपि इत्यर्थः। यथा द्रव्यं वस्तुतः स्वरूपेण निरपेक्षमपि ह्रस्ववितस्त्यादिशब्देन व्यवह्रियमाणम् इतरसापेक्षं तदेव भवति नतु ह्रस्वादिशब्दवाच्यं द्रव्यादतिरिच्यते तथा प्रकृतेऽपि इत्यर्थः। ननु स्वरूपात् किञ्चित् भिन्नमस्ति न वा ? नाद्यः, तस्य निःस्वरूपत्वप्रसक्तेः तुच्छत्वापत्तिः। अथ स्वरूपात् भिन्नं नास्ति तर्हि स्वरूपमेकरसमेव इति। ननु यद्यपि स्वरूपप्रतियोगिको न भेदस्तथापि स्वरूपमेव इतरभिन्नं किं न स्यात् तथाच कुतः स्वरूपमेव अखण्डमिति चेत् ? न, स्वरूपभेदस्य प्रतियोगिनो निःस्वरूपत्वे भेदस्यापि तत्त्वापत्तेः स्वरूपत्वे स्वस्मादेव भेदापत्तिरिति सिद्धान्तिमतमाशङ्क्य निराचष्टे न च इत्यादिना। स्वरूपात् भिन्नमस्त्येव न च तस्यास्वरूपत्वापत्तिः घटभिन्नस्य घटान्तरस्य अघटत्वादर्शनादिति।

**दोषेण भेदत्वानङ्गीकारात् न च वैधर्म्ये सत्येव स्वरूपभेद इति वाच्यम् ? अनात्मस्वरूपाणामपि वैधर्म्यव्याप्तत्वात् ।**

**यत्तु कैश्चिदुक्तं यथायथं त्रितयमेव भेदो यथा घटादौ स्वरूपमन्योन्याभावो वैधर्म्यं च**

अर्थान्तरन्यासेन हेतुमाह घटादिति । ननु घटात् घटस्य भेदेऽपि अघटत्वादर्शने किं भेदान्तरं प्रयोजकं ? किं वा घटस्वरूपे भेदेऽपि प्रतियोगितावच्छेदकभेद इति ? आद्यम् अनूद्य दूषयति न च इत्यादिना । उक्तदोषेण इति धर्मिप्रतियोगिभेदानां ग्रह इति अत्र उक्तदोषेण इत्यर्थः । द्वितीयम् अनूद्य दूषयति न च इति । अनात्मस्वरूपाणां वैधर्म्यव्याप्तत्वेन तत्स्वरूपभेदे तदेव प्रतियोगितावच्छेदकमिति तद्भेदात् आत्मनो न निःस्वरूपतापत्तिरिति हेतुमाह अनात्मेति । तथाच द्वितीयपक्षे इष्टापत्तिरिति भावः । ननु किं स्वरूपमेव भेदः ? उत इतरोऽपि ? नाद्यः, इतरस्यापि भेदत्वे दोषाभावात् तथाहि भिन्ने धर्मिणि भेदो वर्त्तत इत्येव स्वीक्रियते ।

न च अन्योन्याश्रयादिदोषः स्वरूपभेदभिन्ने धर्मिणि धर्मभेदस्थितेः स्वरूपभेदस्य च इतरानपेक्षत्वात् न केवलं स्वरूपमेव भेदः किन्तु सर्वेऽपि अन्योन्याभावादयो यथायोग्यं भेदा इति कस्यचित् कल्पनामुत्थापयति यत्तु इत्यादिना । घटादौ भेदत्रयं विविच्य दर्शयति स्वरूपमिति । वैधर्म्यम् असाधारणो धर्मो घटत्वादिसामान्यादाविति द्रव्यादित्रयं तावत् न सामान्यसमवायवृत्तिद्रव्यमात्रवृत्तित्वात् न सामान्यं सामान्ये समवाये वा वर्त्तते तयोर्निःसामान्यत्वात् समवायस्य

सामान्यादौ च द्वयमेव वैधर्म्याभावात् अभावे स्वरूपमेव इतरासम्भवादिति, तत् न, स्वरूपभेदस्य आवश्यकत्वात् इतरयोश्च व्यभिचारात् भेदव्यवहाराप्रयोजकत्वेन अङ्गीकारवैयर्थ्यात् एकाकारव्यवहारस्य च एकरूपविषयसाध्यत्वनियमात् नच स्वरूपभेदपक्षे स्वस्मादपि स्वस्य भेदः स्यात् इति वाच्यं ? स्वस्य प्रतियोगिकोटिनिवेशेन अन्यस्य धर्मिणो विरहात् धर्मि-

सामान्यवृत्तित्वेऽपि द्विष्टत्वादवैधर्म्यत्वात् तस्मात् स्वरूपभेदोऽन्योन्याभावश्च द्वौ एव भेदौ सामान्यादौ इत्यर्थः। अभावो न भावाश्रय इति न तत्र वैधर्म्यं न अपि तत्र अन्योन्याभावः अभावेऽभावानङ्गीकारात् तस्मात् तत्र स्वरूपमेव भेद इत्यर्थः। तत् दूषयति। तत् न इति। पदार्थमात्रे अनुगतत्वेन आवश्यकत्वात् इति हेतुमाह स्वरूपभेदस्य इति। ननु भेदव्यवहारोपपादकत्त्वं वैधर्म्यादीनां तुल्यं तत् कथं स्वरूपभेदस्य आवश्यकत्वमिति तत्राह इतरयोश्चेति। अन्योन्याभाववैधर्म्ययोः अङ्गीकारवैयर्थ्यात् अप्रयोजकत्वेन इति तृतीया इत्थम्भावे तथाच तद्रूपेण अङ्गीकारो व्यर्थः। तत्र हेतुः व्यभिचारादिति। सर्वत्र अननुगतत्वात् इत्यर्थः। ननु व्यभिचार्य्यपि व्यवहारप्रयोजकं किं न स्यात् ? इति तत्राह एकाकारेति। यथा पटोऽयं पटोऽयमिति व्यवहारे अनुगतं पटत्वं सामान्यमेव प्रयोजकं न व्यक्तेरननुगतत्वात् अन्यथा जातेरसिद्धिप्रसङ्गात् तथाच अनुगतव्यवहारे प्रयोजकमनुगत-

कोटिनिवेशेन वा प्रतियोगिनोऽभावात् नच भेदस्वरूपयोः परस्परान्तर्भावेन अन्यतरपरिशेषापत्तिः। भेदस्यस्वरूपानतिरेकात्।

नच स्वरूपभेदः किं भिन्ने भेदव्यवहारप्रयोजको अभिन्ने वा? इति विकल्पावकाशः उपस्थितवस्तुमात्रे धर्मिप्रतियोगिज्ञानापेक्षानपेक्षाभ्यां भेदाभेदव्यवहारयो र्जायमानत्वात्।

मेव इति नियतम् एवं स्वरूपभेदव्यवहारविषयस्य अनुगतस्य सम्भवेन अननुगतमन्यत् वैधर्म्यादि तत् व्यवहारप्रयोजकं न युज्यते इत्यर्थः। ननु स्वरूपभेदस्य न भेदव्यवहारहेतुतास्वरूपे एव भेदात्मनि तद्व्यवहारादर्शनात् अन्यथा स्वस्मादपि स्वस्य भेदः स्यात् इति न इत्याह न चेति। स्वरूपमितरसापेक्षं भेदव्यवहारहेतुरिति प्रागेव निवेदितं यच्च स्वस्मादपि स्वस्य भेदापत्तिरिति तत्राह स्वस्येति। भेदस्य च धर्मिप्रतियोगिघटितत्वनियमादित्यर्थः। ननु स्वरूपभेदयोः अभेदे किं स्वरूपं भेदे प्रविशति स्वरूपे वा भेद इति। नाद्यः, भेद इति एव व्यवहारः स्यात् न स्वरूपमिति। न द्वितीयः भेदाकारप्रतीतेः अभावप्रसक्तेस्तत्राह न चेति। सत्यमितरपरिशेष इति। तर्हि किं परिशिष्यते स्वरूपमेव इत्याह भेदस्येति। कथं तर्हि भेदव्यवहार इति चेत्? न धर्म्यादिसापेक्षस्य स्वरूपस्यैव तदाकारव्यवहारहेतुत्वादित्यसकृदावेदितत्वादिममेवार्थं प्रकटयितुं परकीयं चोद्यमुत्थाप्य निरस्यति न च इति। ननु जन्यत्वमेव जन्यस्य मायिकत्वसमर्पकमिति अत्र

ननु अज्ञानकार्य्यत्वं प्रपञ्चस्य पूर्वमुक्तं तत्कथं प्रत्यक्षाद्यनुरोधेन भेदशङ्का इति चेत् ? न, तस्यैव असिद्धेर्ब्रह्मकार्य्यत्वस्य बहुशः श्रवणात् "सदेव सौम्येदमग्र आसीत्" "यतो वा इमानि भूतानि जायन्ते तस्माद्वा एतस्मात्

प्रपञ्चस्य मायिकत्वेन मिथ्यात्वं प्राक्निरूपितं तत्र च प्रत्यक्षादिकं न प्रवर्त्तते साक्षिमात्रसिद्धत्वात् कल्पितप्रतियोगिकभेदस्य अपि कल्पितत्वेन प्रत्यक्षाद्यविषयत्वाच्च।

ततः कथं प्रत्यक्षादिबलेन अनात्मभेदो ब्रह्मात्मैक्ये इति सिद्धान्ती शङ्कते ननु इति। अज्ञानकार्य्यत्वे रजतवत् स्यान्मिथ्यात्वं तदेव प्रपञ्चस्य असिद्धं ब्रह्मकार्य्यत्वश्रवणात् ब्रह्मणश्च सत्यत्वेन तत्कार्य्यप्रपञ्चस्य अपि सत्यत्वाविघातात् तथाच सत्यप्रतियोगिकभेदस्यापि सत्यत्वात् प्रत्यक्षादिविषयत्वं युज्यते इति प्रपञ्चभेद आत्मनि प्राप्त एव इत्यभिप्रायेण पूर्वपक्षी सिद्धान्तिसम्मतं दूषयति न तस्य इत्यादिना। ननु श्रुतिः प्रपञ्चस्य ब्रह्मकार्य्यत्वं प्रतिपादयन्ती अपि "न तत्परा न तस्य कार्य्यं करणं च विद्यते तदेतद्ब्रह्म पूर्वमनपरम्" इत्यादि विरोधादिति तत्राह बहुश इति। गतिसामान्यन्यायेन अभ्यासस्य तात्पर्य्यग्राहकत्वाच्च तस्य च प्रकृते सद्भावात् स्वार्थ एव श्रुतेस्तात्पर्य्यं युज्यते उदाहृतविरोधिवाक्यस्येश्वरस्य देहद्वयाभावप्रतिपादकतयापि उपपत्तेरिति भावः। बहुशः श्रवणमुदाहरति सदेव इति। इदं परिदृश्यमानं जगत् अग्रे सृष्टेः प्राक् स्थलरूपपरित्यागेन सदित्येव आसीत् हे सौम्य प्रियदर्शन !

आत्मनः आकाशः सम्भूतः यथाग्नेः क्षुद्रा विस्फुलिङ्गा एवमेतस्मात् आत्मनः सर्वे देवाः सर्वे लोकाः सर्व एते आत्मानो वोच्चरन्ति" इत्यादिश्रुतिभ्यः जन्माद्यस्य यत इति न्यायाच्च।

इत्यर्थः। एवं मिति यथा एकस्मात् अग्नेः क्षुद्रा अग्न्यवयवा विस्फुलिङ्गा विविधं नाना वा उच्चरन्ति उद्गच्छन्ति एवमेतस्मात् विज्ञानमयस्य प्राक् प्रबोधात् यत् स्वरूपं तस्मात् आत्मनः सर्वे देवाः प्राणाद्यधिष्ठातारोऽग्न्यादयः लोकाः कर्मफलानि आत्मानः उपाधिसम्पर्कजनितप्रबुध्यमानविशेषात्मान इत्यर्थः। ब्रह्मणो जगत्कारणत्वं न केवलं श्रुतिसिद्धं किन्तु युक्तितोऽपि इत्याह जन्मादीति। अस्य जगतः प्रत्यक्षाद्युपस्थापितस्य जन्मस्थितिभङ्गं यतः सर्वज्ञात् सर्वशक्तेर्भवति। तत् ब्रह्मेति सूत्रार्थः। अत्रेयमधिकरणरचना यतो वा इमानि इत्यादिवाक्यं किं न ब्रह्म लक्षयति? उत अहो लक्षयति इत्येकस्य उभयहेतुत्वसम्भवासम्भवाभ्यां सन्देहे श्रुतेः अनुमानानुगुण्यादेकस्य उभयहेतुतायां दृष्टान्ताभावेन अशक्यानुमानत्वात् एकतरहेतुत्वस्य च लक्षणत्वे वस्तुपरिच्छेदात् लक्ष्यस्य अब्रह्मत्वात् न लक्षयति इति प्राप्ते पुरुषमतिप्रभवत्वेन अनुमानस्य सम्भावितदोषस्य अपौरुषेयत्वेन अपास्तदोषागमानुग्राहकतर्कत्वात् अतीन्द्रियार्थे स्वतोऽप्रमाणत्वात् आगमिकोभयहेतुत्वे सुखादिदृष्टान्तेन सम्भावनामात्रहेतुत्वात् वस्तुतोऽपरिच्छेदात् लक्ष्यस्य ब्रह्मत्वसिद्धेर्जगत् निमित्तोपादानं सच्चिदानन्दं ब्रह्मेति लक्षयति इति सिद्धान्त इति।

ननु अज्ञानकार्य्यत्वमपि बहुषु श्रूयते "मृत्युनैवेदमावृतमासीत् तद्धेदं तर्हि अव्याकृतमासीत् इन्द्रो मायाभिः पुरुरूप ईयते मायां तु प्रकृतिं विद्यात् नासदासीन्नो सदासीत्तम आसीत्" इत्यादिश्रुतिभ्यः मायामात्रं तु कार्त्स्न्येन अनभिव्यक्तस्वरूपत्वादिति न्यायाच्च एवं तर्हि श्रुतीनां परस्परं विरोधात् न उभय-

ननु यथा प्रपञ्चस्य ब्रह्मकार्य्यत्ववादिन्यः श्रुतयः सन्ति तथा अज्ञानकार्य्यत्ववादिन्योऽपि इति शङ्कते ननु अज्ञानेति। तत्र हेतुः मृत्युना इति। साभासाज्ञानं मृत्युः तद्धेदमिति। तदिति बीजावस्थं जगदुच्यते। ऐतिह्यप्रयोगे हशब्दः इदमिति व्याकृतावस्थं तत् इदं शब्दयोः सामानाधिकरण्यात् परोक्षावस्थस्य जगत एकत्वमवगम्यते तत् इदं जगदव्याकृतं साभासाज्ञानात्मकमिवासीत् इत्यर्थः। इन्द्र इति इन्द्रः परमेश्वरो मिथ्याभिमानैर्न तु परमार्थतः पुरुरूपो बहुरूप ईयते गम्यते इत्यर्थः। ननु मृत्युव्याकृतादिशब्दाः न अज्ञानमात्रवाचकाः तेषामज्ञातात्मोपख्यापकत्वात् इत्याशङ्क्य साक्षात् मायादिपदाङ्कितवाक्यमुदाहरति मायां तु इत्यादिना। प्रकृतिरुपादानं तामित्यर्थः कार्य्यकारणयोः साम्यादित्यभिप्रायः। नासदासीत् इति असदभावः सत्भावः तदुभयमपि नासीत् तमः एवासीत्। तमः शब्द आवरणप्रधानाज्ञानस्य वाचक इति एकाश्रयविषयमिति यावत्। पूर्वोक्तार्थे श्रुतेरनुग्राहिकां युक्तिमपि आह मायामात्रमिति। उत्तरतन्त्रे तृतीये स्थितं अत्रेदं विषयवाक्यमामनन्ति स यत्र

**मपि कारणमस्तु किं तर्हि जगत्कारणमिति चेत्? यथायोग्यं परमाण्वादिकमेव। तस्मात् अनात्मभेदे प्रत्यक्षादिसिद्धे जागरूके कथमद्वैतसिद्धिः? तत् अयं संग्रहः।**

प्रस्वपिति इत्युपक्रम्य न तत्र रथा न रथयोगा इत्यादि। तत्र संशयः किं प्रबोध इव स्वप्नेऽपि पारमार्थिकार्थक्रियासमर्था सृष्टिः उत मायामयी प्रातीतिकसत्तामात्रोपिता इति। किं तावत् प्राप्तं पारमार्थिकी इति कुतः श्रुतिप्रामाण्यात् अथ रथान् रथयोगान् पथः सृजत इति श्रुतेः रथादीनां सृष्टिरत्र स्वप्ने प्रतीयते ततश्च श्रुतिप्रामाण्यात् पारमार्थिकी एव सृष्टिरिति पूर्वपक्षे सिद्धान्तयति मायामात्रमित्यादिना। तु शब्दः पूर्वपक्षं व्यावर्त्तयति नैतदस्ति स्वप्ने सृष्टिः पारमार्थिकी इति कीदृक् तर्हि सृष्टिस्तत्राह मायामात्रमिति। मायैव सृष्टिर्न परमार्थगन्धोऽपि अस्ति इत्यर्थः। कुतः कार्त्स्न्येन अनभिव्यक्तस्वरूपत्वात् नहि कार्त्स्न्येन पारमार्थिकवस्तुधर्मेण अभिव्यक्तस्वरूपः स्वप्न इति अतएव स्वप्नसृष्टिश्रुतिर्न पारमार्थिकी। सृष्टिमाह। न तत्र रथा इत्यादि शास्त्रेण सृष्टिश्रुतिविषयाणां रथादीनां स्वप्ने निषेधाच्च न सा सृष्टिः पारमार्थिकी किं तु अविद्योपादाना एवेति। अत्र तटस्थः शङ्कते एवं तर्हि इति। कथं तर्हि निष्कारणं कार्य्यं स्यात् इति शङ्कते। किं तर्हि इति। कारणान्तरस्य सत्त्वात् न निष्कारणं कार्य्यमिति परिहरति यथायोग्यमिति। स्वस्वसिद्धान्ते यादृक्कारणं भवितुं योग्यं परमाण्वादि तादृगस्त्येव इत्यर्थः। तत्र त्रसरेणुस्तावत् आरब्धः महत्त्वे सति द्रव्योपादानत्वात् कपालादिवत इति त्रसरेणोः कार्य्यत्वसिद्धा एवं तदवयवेषु अपि ऊह्या। तथाच

आत्माऽभेदप्रमित्यापि नाद्वैतं ते प्रसिद्ध्यति।
अनात्मभेदसंसिद्धेः प्रत्यक्षादेः प्रमाणतः॥

मैवं श्रुत्यभिप्रायापरिज्ञानात् नहि तत्त्वमसि इत्यादिश्रुत्या अनात्मानं पृथक् स्थापयित्वा शुद्धांशयोः अभेदो बोध्यते इति श्रुत्यभिप्रायः किन्तु प्रत्यक्चैतन्ये कूटस्थे जागराद्यवस्थात्रयं

विवादाध्यासितं कार्य्यद्रव्यं त्रसरेण्ववयवाख्यं स्वपरिमाणात् अणुतरपरिमाणारब्धं कार्य्यद्रव्यत्वात् सम्मतवदिति य एव द्व्यणुकपरिमाणापेक्षया न्यूनपरिमाणो द्व्यणुकारम्भकः स एव परमाणुर्जगतो मूलकारणमिति वैशेषिकादयो मन्यन्ते एवं प्रधानादिवादोऽपि ऊह्य इति भावः। प्रपञ्चस्य परमाण्वादि-जन्यत्वे प्रकृतोपयोगमाह तस्मादिति। यस्मात् सत्योपादानस्य सत्यता पृथिवीकार्य्यस्य पृथिवीत्ववत् सत्यञ्च परमाण्वादि तत-स्तदुपादानप्रपञ्चोऽपि सत्य एव तस्मात् अनात्मप्रतियोगिके भेदे प्रामाणिके सति कथं सर्वाद्वैतमित्यर्थः।

एवम् अनात्मभेदं पूर्वपक्षे उपपाद्य तन्निराकरणं प्रतिजानीते मैवमिति। ननु किमिति श्रुत्यभिप्रायापरिज्ञानं श्रुत्यर्थाभिज्ञेन त्वया संसारधर्मेभ्यो निष्कृष्टस्य तत्कर्तृत्वादिभ्यो निष्कृष्टेन इत्यत्र संसारधर्मादीनां पृथगवस्थित्यभिधानादिति तत्राह न हीति। तर्हि तयोरभेदो बोध्यत इति जिज्ञासायामाह किन्तु इति। जिज्ञासितं स्वरूपमुपादयति प्रत्यगिति। शुद्धान्तःकरणे-ऽवधारयति इत्यन्वयः। तत्र वाक्ये योग्यतासम्पत्तये पदार्थज्ञान-पूर्वकत्वाद्वाक्यार्थज्ञानस्येति मन्वानस्त्वम्पदार्थे शुद्धिप्रकारमाह

कर्त्तृत्वाद्यनर्थजातं च व्यभिचारि सर्वं तत्रैव अनुगते साक्षिणि अध्यस्तमित्यन्वयव्यतिरेकाभ्यां तद्व्यतिरेकेण तत् स्वरूपं नास्तीति निश्चित्य शुद्धेन प्रत्यगात्मना ब्रह्मणोऽभेदसिद्धार्थं ब्रह्मणि अपि जगत्कर्त्तृत्वपरोक्षत्वादि आकाशादिकं च जगज्जातमननुगतमनुगते तस्मिन् सच्चिदात्मनि अध्यारोपितमसद्भ्रान्त्यैव प्रतिपन्नमिति अन्वयव्यतिरेकाभ्याम् अध्यारोपाप-

जागरेत्यादिना निश्चित्येत्यन्तेन विज्ञानं व्यावर्त्तयति प्रत्यगिति सर्वान्तरेवेत्यर्थः। एतेन विशेषणेन साक्षिसाक्ष्यान्वयव्यतिरेकौ सूचितौ। अवस्थादीनामध्यस्तत्वं द्योतयितुम् अधिकरणं विशिनष्टि कूटस्थे इति। अविकारिणि इत्यर्थः। तेन वस्तुतो विकाराभावादज्ञानवशादेव अन्याकारतेत्यर्थः। एतेन कार्य्यकारणान्वयव्यतिरेकौ सूचितौ दुःखिपरमप्रेमास्पदत्वाख्यान्वयव्यतिरेकौ सूचयितुं विशिनष्टि अनर्थजातमिति। व्यभिचारीति व्यभिचार्य्यनुगतत्वाख्यान्वयव्यतिरेकसूचनाय विशेषणं सर्वपदं पूर्वोक्तमुपस्थापयति। तत्रैव कूटस्थ इत्यर्थः। तस्याधिष्ठानयोग्यतामाह अनुगते इति। स्वसत्ताप्रदे स्फूर्त्तिप्रदत्वमुपपादयितुं विशिनष्टि साक्षिणि इति। एतच्च विशेषणद्वयमन्वयाद्युपपादनेऽपि उपयुज्यत एव उपलक्षणञ्चैतत्परमप्रेमास्पद इत्यपि बोद्धव्यम्। अध्यस्तत्वस्य फलमाह इतीति। इति शब्दो हेतौ यतोऽध्यस्तमतस्तदधिष्ठानमुक्तं चैतन्यं तद्भेदेन

वादमाश्रित्य प्रवृत्तसृष्टिवाक्यसमनन्तरप्रवृत्तेन नेति नेति इत्यादि वाक्येन च अवधारयति।

ततः शुद्धयोस्त्वम्पदार्थयोर्लक्ष्यांशयोर्निरस्तानात्मसम्बन्धयोर्भेदेऽभेदे वा प्रमाणमपश्यन्

स्वातन्त्र्येणेति यावत् तस्याध्यस्तस्य स्वरूपं सत्ता नास्तीति निश्चित्य अवधारयततीति इति अन्वयः। तदवधारणप्रयोजनमाह शुद्धेनेति। ब्रह्मण्यपि इत्यपिशब्दः प्रत्यक्चैतन्यपरामर्शार्थः पूर्वोक्तचतुर्विधान्वयव्यतिरेकसिद्धये विशिनष्टि अननुगतमित्यादिना। अधिष्ठानं शून्यमिति बौद्धस्तं पराचष्टे सदिति। स्फूर्त्तिस्वरूपप्रदर्शनाय विशिनष्टि अधिष्ठानं चिदात्मनि इति। अधिष्ठानभेदेन असत्तस्य प्रमाणगम्यत्वं प्रत्याह भ्रान्त्यैव इति। इत्थं भावे तृतीया तदात्मनैव प्रतिपन्नम् अतएवाह असदिति। वस्तुतोऽसदित्यर्थः। अवधारणक्रियायां साधनमाह इति अन्वयेति चतुर्विधान्वयव्यतिरेकाभ्याम् इत्यर्थः। अन्वयव्यतिरेकयोस्तर्कत्वेन सम्भावनामात्रहेतुत्वेऽपि अप्रमाणत्वादवधारणे हेतुत्वं न सङ्गच्छते इत्याशङ्क्याह नेति इति। ननु निषेधः प्राप्तिपूर्वकस्तदभावे कथं स इति तत्राह सृष्टीति। तर्हि प्रामाणिकत्वात् न निषेध इति चेत्? न, अविद्याप्रत्युपस्थापितानुवादकत्वात् किमर्थं तर्हि श्रुतिरनुवदतीति चेत्? तत्राह अध्यारोपेति।

अवस्थानां तत्कर्त्तृत्वस्य च प्रत्यगात्मनि ब्रह्मणि च जगत्कर्त्तृत्वादेरध्यस्तत्वनिश्चयस्य फलमाह तत इति। ततो गुरुमुपसर्पति इति अन्वयः। ततः कर्त्तृत्वादिप्रपञ्चस्य कल्पितत्वज्ञानानन्तर-

सन्दिहानः संसाररोगराजानुचरगर्भवासाद्यनेकरोगसमुद्भूतदुःखव्रातानुभवासादितोद्वेगः ब्रह्मलोकप्रभवमपि सुखं विषमिव मन्यमानः तरति शोकमात्मविदिति श्रुत्या संसारदावानलप्रसूतसन्तापशमनामृताब्धिमात्मविद्यामजानानः पर-

मित्यर्थः। ननु गुरूपसर्पणं निश्चयार्थं स चेदुक्तविधया जातः किं तदुपसर्पणेन तत्राह सन्दिहान इति। सन्देहे हेतुमाह शुद्धयोरिति। ननु तत्त्वम्पदार्थयोर्भेद एव प्रमाणं दृश्यते न अहमीश्वर इत्यादि तत्राह लक्ष्यांशयोरिति। को वा लक्ष्यांश इति तत्राह शुद्धेति। शुद्धत्वम् उपपादयति निरस्तेति। प्रत्यक्षादेरनात्मविषयत्वात् आत्मभेदग्राहकत्वं न युक्तमिति भावः। ननु उक्तयुक्त्या एव भेदकानात्मसम्बन्धस्य आत्मनि अध्यस्तत्वनिश्चयेन अभावादभेद एव आत्मब्रह्मणोर्भविष्यति इति तत्राह अभेद इति। युक्तेस्तर्कत्वेन स्वातन्त्र्येण अप्रमाणत्वात् न अभेदप्रमापकत्वं तस्या इति। ननु प्रमाणादर्शनम् असिद्धम् अधीतवेदस्यैव अधिकारादिति तत्राह सन्दिहान इति। यद्यपि गृहीतपदपदार्थसङ्गतिमाश्रुतः शब्दोऽर्थप्रत्यायक एव तथापि असम्भावनाग्रस्तविषयत्वात् तत्र शाब्दप्रत्ययः प्रतिष्ठां न लभत इति न तत्र प्रमाणत्वेन व्यवह्रियत इति भावः। एतेन नित्यानित्यवस्तुविवेक इत्यधिकारिविशेषणम् अर्थात् निरूपितम् इदानीं वैराग्यम् अधिकारिविशेषणान्तरमाह संसारेति। ननु तथापि गुरूपसदनम् अनुपपन्नं तदुपसदनस्य संसारनिवृत्त्यहेतुत्वात्।

मजिज्ञासुः स्वरूपापरोक्षदर्शिनं परमकारुणिकं गुरुमुपसर्पति।

तेन च शुद्धयोस्तत्त्वम्पदार्थयोः अभेदे तत्त्वमस्यादिवाक्येन नित्यनिर्दोषेण बोधिते स्वयमेव अद्वैततत्त्वं साक्षात्कृत्य स्वानन्दतृप्त आत्मारामो भवति अतः श्रुत्यभिप्रायापरिज्ञानविजृम्भितमेतत् यदनात्मभेदेन अद्वैतक्षतिरिति।

न च आचार्य्याद्धैव विद्या इत्यादिश्रुतेः संसारनिवर्त्तकज्ञानहेतुत्वं गुरूपसदनस्येति वाच्यम् आत्मज्ञानस्य तन्निवर्त्तकत्वे प्रमाणाभावादित्याशङ्क्याह तरतीति। ननु स्वर्गसाधनं याग इति जानन्नपि न सर्वो वैदिको यागे प्रवर्त्तते एव इति क्वचित् सम्भवति तत्राह परमिति। परमं परिपूर्णब्रह्मात्मैक्यं तदपरोक्षज्ञानेप्सुस्तथाच यस्येच्छा स प्रवर्त्तते न अन्य इति भावः। श्रोत्रियं ब्रह्मनिष्ठमिति श्रुतिमाश्रित्य गुरुं विशिनष्टि अपरोक्षेति। उपसर्पति इत्यत्र शास्त्रोक्तविधिनेति शेषः।

गुरुकृत्यमाह तेनेति। वाक्यप्रामाण्यम् उपपादयति नित्यनिर्दोषेणेति। यद्यपि अस्मन्मते वेदस्यापि कल्पितत्वान्न नित्यत्वं तथापि अबुद्धिपूर्वकत्वात् प्रयत्नाजन्यत्वात् नित्यत्वोपचारः आत्मबुद्धेरपि साहाय्यं दर्शयति स्वयमेव इति। साक्षात्कृत्येत्यनन्तरम् आनन्दांशावरकम् अज्ञानं सविलासं बाधित्वेति च पदं ज्ञेयम्। तत्फलमाह स्वानन्देति। ततश्च सर्वभेदोच्छेदात् सर्वाद्वैतमेव तत्त्वमस्यादिवाक्यावगम्यमिति अभिप्रायः सिद्धं इत्युपसंहरति अत इति।

यच्च स्वरूपं भेदः प्रत्यक्षादिगोचर इति तत् अतितुच्छं प्रत्यक्षादेरसद्विषयत्वेन स्वरूपागोचरत्वात् स्वरूपस्य भेदत्वानुपपत्तेश्च। कुत इति चेत्? शृणु किं शुद्धं सर्वधर्मविनिर्मुक्तं स्वरूपं भेदः किं वा विशिष्टम्।

आद्ये व्यवहारहेतुत्वमपि तस्य नास्तीति वक्तव्यं तथाच सर्वव्यवहारानास्पदं सर्वधर्म-

यत्तु पूर्वपक्षे स्वरूपभेदः प्रत्यक्षादिगोचर इति तद्विरोधे अर्थात् न वेदान्तप्रामाण्यमिति तत् दूषयितुम् अनुवदति यच्चेति। असद्विषयत्वेनेति पराञ्चि खानीति श्रुतेः प्रत्यक्षादेः अनात्मविषयत्वम् इत्यर्थः। स्वरूपस्य सद्रूपत्वेनात्मत्वात् न तदात्मनि भेदे प्रत्यक्षादिप्रवृत्तिर्युक्तेति भावः। ननु सर्वप्रत्ययवेद्यं स्वरूपमिति भवतो मतं तत्कथं तस्य प्रत्यक्षाद्यविषयत्वमित्याशङ्क्य हेत्वन्तरमाह स्वरूपस्येति। स्वरूपस्य शुद्धत्वमुपाध्यसंसृष्टत्वं विशिष्टत्वमुपाधिसम्बन्धकत्वम्। आद्य इति शुद्धस्वरूपमेव भेद इति पक्षे इत्यर्थः। व्यवहारेति। अयमर्थः ब्रह्मणि तावत् न स्वाभाविको धर्मोऽस्ति अविकारिस्वभावत्वात् औपाधिकस्तु उपाध्यसंसृष्टे न सम्भवति इति शुद्धपदमहिम्ना निर्धर्मकत्वं वक्तव्यत्वेन प्राप्तं तथा व्यवहारविषयत्वमपि नास्ति इति वक्तव्यं तथाहि व्यवहारो हि अभिवादनं वा अभिज्ञा वा नाद्यः धर्ममादायैव शब्दप्रवृत्तिस्तदभावे कथं स्यात् स्वप्रकाशत्वादेव न द्वितीयः ततो व्यवहारानास्पदं

विनिर्मुक्तमस्थूलानण्वादिशास्त्रसिद्धं सदात्मकं ब्रह्मैव नामान्तरेण प्रत्यक्षादिगोचर इत्युक्तं स्यात् नच तदपि उपपद्यते "न चक्षुषा गृह्यते नैव वाचा नान्यैर्देवैस्तपसा कर्मणा वा" इत्यादिश्रुति-विरोधप्रसङ्गात् द्वितीये विशेषणविशेष्ययोर्भेदे विशिष्टं स्वरूपान्तरं भेद इति वाच्यं तथा च

स्वरूपं वक्तव्यमिति अस्तु एवं किं ततस्तत्राह तथाच इति। ननु अस्थूलमित्यत्र नञः प्रसज्यार्थकत्वाभावरूपता ब्रह्मणः स्यादिति न इत्याह सदात्मकमिति। कल्पितस्य स्थूलत्वा-देरधिष्ठानभेदेन असत्त्वादसदभावस्य भावत्वात् सदात्मकं ब्रह्मेत्यर्थः। नामान्तरेणेति भेदः प्रत्यक्षादिगोचर इति वदता भेदस्य उक्तस्वरूपात्मकब्रह्मानतिरेकात् ब्रह्मैव भेद इति संज्ञान्तरेण प्रत्यक्षादिगम्यमित्युक्तं स्यात् तथाच न अनिष्टा-पत्तिरितिभावः। ननु कथमपि प्रपञ्चभेदः प्रामाणिकश्चेत् तावताप्यस्मदिष्टसिद्धिरित्याशङ्क्याह न चेति। भेदस्ताव-दतिरिक्तस्त्वयैव न स्वीक्रियते ब्रह्मात्मकत्वे तस्य स्वप्रकाश-त्वात् प्रत्यक्षादिविषयत्वनिषेधाच्च न भेदस्य ब्रह्मस्वरूपत्वेनापि प्रामाणिकतेत्यर्थः। सर्वप्रत्ययवेद्यत्वम् उपहित एव न शुद्ध इति भावः। विशिष्टस्वरूपमेव तर्हि भेदः अस्तु तत्र उक्त-दोषाप्रसङ्गादित्याशङ्क्य द्वितीयमनुवदति द्वितीये इति। विशिष्टस्वरूपं भेद इति पक्षेऽपि इदं विवेचनीयं विशेषण-विशेष्ययोर्भेदे सति विशिष्टं स्वरूपान्तरं विशेषणादिभेदात् अन्य-दिति वक्तव्यं ?, उत विशेषणादिभेदाभाव एव विशिष्टं स्वरूपं

तत्रापि अन्यत्तत्रापि अन्यदिति सैव दुरुत्तराऽनवस्था अभेदे वा विशिष्टस्वरूपासिद्धिः।

न वा विशिष्टं स्वरूपं प्रत्यक्षादिगोचरः तस्यापि शुद्धवस्तुस्वरूपवन्निर्धर्मकत्वात् नहि रूपादिविशिष्टे रूपादयः सन्ति। नच विशिष्टं नाम किञ्चिद्वस्त्वस्ति विशेषणविशेष्यतत्सम्बन्धातिरिक्तस्य तस्य अननुभवात् तेषां च प्रत्येकसमुदायाभ्यां विशिष्टव्यवहाराजननात् नच

भेद इति वक्तव्यम्? इति विकल्पत्रयम् अनुवदति विशेषणेति। आद्यं पक्षम् अङ्गीकारयित्वा दूषयति तथा चेति। विशेषणविशेष्यभेदो विशिष्टस्वरूपभेदोपपादकः किं विशिष्टं भेद एव उत भेदान्तरम्? आद्ये आत्माश्रयः द्वितीये अन्योन्याश्रयः। अथ विशेषणविशेष्यभेदोपपादकस्तृतीय एव विशिष्टभेदः स्वीक्रियते तदा चक्रकं चतुर्थे अनवस्था इत्यर्थः। द्वितीयं पक्षं दूषयति अभेदेवेति। विशेषणविशेष्ययोः अभेदे अन्यतरपरिशेषाद्विशिष्टस्वरूपासिद्धिरित्यर्थः।

विशिष्टस्वरूपात्मकत्वे भेदस्य प्रामाणिकत्वं न स्यात् इति हेत्वन्तरमाह न वेति। किञ्च विशिष्टं स्वरूपं किल भेदः तत्र विशिष्टं किं विशेषणादिभ्योऽन्यत् उतानन्यत् आद्यं दूषयति न चेति। द्वितीयं द्वेधा विकल्प्य दूषयति तेषामिति। विशेषणविशेष्यसम्बन्धानां प्रत्येकं विशिष्टत्वे केवलदण्डेऽपि विशिष्टव्यवहारः स्यात् नच सोऽस्ति केवलस्य दण्डस्य

सम्बन्ध एव विशिष्टं विशेषणविशेष्यतत्सम्बन्धा इत्यत्र सम्बन्धेऽपि तद्व्यवहारादर्शनात् । विशेषण-विशेष्ययोस्तद्व्यवहाराभावप्रसङ्गात् । नच वस्तु-स्वरूपं भेद इति शङ्कितुमपि शक्यं तस्य विदा-रणात्मनो: भेदस्य वस्तुस्वरूपनाशरूपत्वान्नाश-तत्प्रतियोगिनो: अभेदासम्भवात् नहि पट-विदारणं पटस्वरूपं वस्तुस्वरूपातिरिक्तस्य च

तद्व्यवहाराजनकत्वात् एवं विशेष्यसम्बन्धयोरपि ऊह्यम् । समुदाय: किमेभ्योऽतिरिक्त एते एव वा ? आद्ये दूषण पूर्व-मुक्तं द्वितीये प्रत्येकं तद्व्यवहारापत्ति: । तर्हि पूर्वोक्तदोषापनुत्तये विशेषणविशेष्ययो: सम्बन्ध एव विशिष्ट इति न इत्याह न चेति । किं विशेषणादिव्यावृत्त: सम्बन्धो विशिष्ट उत तदुपलक्षित: ? आद्यनिरासे हेतुमाह विशेषणेति । अपि शब्दो विशेषणादि दृष्टान्तार्थ: । द्वितीयं दूषयति विशेषणेति । तद्व्यवहारो विशिष्टप्रयुक्तव्यवहार इत्यर्थ: । नहि देवदत्तगृहप्रयुक्तो व्यव-हारो गृहोपलक्षणे काके दृश्यते किञ्च स्वरूपं भेद इतिवदन् प्रष्टव्य: किमस्वरूपप्रतियोगिक: ? उत स्वरूपप्रतियोगिक: ? नाद्य: नि:स्वरूपस्य तुच्छत्वेन तत्प्रतियोगिकस्य भेदस्याऽपि तुच्छत्वापत्ते: । द्वितीयं दूषयति न चेति । अयमर्थ: स्वरूपप्रतियोगिकोऽभेद: किं प्रतियोगिन एव स्वरूपं ? उत धर्मिण: ? नाद्य इत्याह नाशेति । तत्र हेतु: तस्येति । भिदिर्विदारणे इति स्मृतेरित्यर्थ: । एतदेव स्पष्टयति नहि

भेदस्य तस्य निःस्वरूपस्य निराश्रयस्य असिद्धि-रेव।

नहि भिन्न आश्रयो भवति अन्यथा ध्वस्तोऽपि घटो जलाधारः स्यात् अभिन्ने तु आश्रये भेदो विरोधात् एव न वर्त्तते।

तस्मात् अलमनेन अनात्मविचारेण सर्वथा

इति। न द्वितीयः स्वरूपत्वस्य प्रतियोगितावच्छेदकत्वे तद-नधिकरणस्य धर्मित्वे निःस्वरूपत्वात् आश्रयत्वानुपपत्तेः। अथ स्वरूपभेदेन स्वरूपत्वं प्रतियोगितावच्छेदकं किन्तु वैधर्म्यं स्वरूपभेदस्य सर्वत्र वैधर्म्यव्याप्तत्वादिति चेत्? न, वैधर्म्यं हि तद्वृत्तित्वे सति तदितरावृत्तित्वं तच्च इतरशब्दार्थ-भेदज्ञानाधीनज्ञानं प्रतियोगितावच्छेदकज्ञानाधीनञ्च भेदज्ञानं तथाच अन्योन्याश्रय इति। अथ एतद्दोषपरिहाराय वैधर्म्योप-पादको धर्मभेद एव कश्चित् स्वरूपभेदादन्यः स्वीक्रियते तर्हि स किं भिन्ने आश्रये वर्त्तते? उत अभिन्ने इति?। आद्यं दूषयति वस्त्विति। स्वरूपभेदादन्यश्चेत् धर्मभेदस्तर्हि निःस्वरूपः स्यात्। भिन्नस्य द्विधाभूतस्य च आश्रयत्वानुपपत्तेर्निराश्रय एव स इति न निरूपणपथमर्हति इत्यर्थः।

निराश्रयत्वमुपपादयति नहि इत्यादिना। द्वितीयं दूष-यति अभिन्नेतु इति। किञ्च पटप्रतियोगिको भेदो घटस्य स्वरूपं धर्मो वा? आद्ये सप्रतियोगिकभेदस्य घटस्वरूपत्वे घटाद्वैतप्रसङ्गः घटधर्मत्वे पटो घटधर्मतामियात्।

किञ्च स्वरूपस्य भेदत्वे संशयाद्युच्छेदप्रसङ्ग इत्यादि-

प्रत्यक्षादेः आत्मानात्मभेदगोचरत्वं नास्तीति सिद्धम्।

यदुक्तं जगत्कारणत्वविषयश्रुत्योः अज्ञान-ब्रह्मगोचरयोर्मिथो विरोध इति तन्न।

ब्रह्माज्ञानात् जगज्जन्म ब्रह्मणोऽकारणत्वतः।
अधिष्ठानत्वमात्रेण कारणं ब्रह्म गीयते॥ ३८॥

दृश्यत्वाद्यनुमानसिद्धानिर्वचनीयस्य जगतः अनाद्यनिर्वचनीया अविद्यैव कारणं न ब्रह्म तस्य

दोषमभिप्रेत्य भेददूषणम् उपसंहरति तस्मादिति। सर्वथा इति स्वरूपधर्मभेदपक्षेऽपि इत्यर्थः। किञ्च अविद्यकप्रपञ्चस्य साक्षिमात्रसिद्धस्य प्रमाणायोग्यत्वात् तत्प्रतियोगिकभेदस्य कल्पितत्वात् न पारमार्थिकाद्वैतक्षतिः न च प्रपञ्चस्य ब्रह्म-कारणत्वम् अविद्योपादानत्वप्रतिपादकवाक्यविरोधात्।

तर्हि ब्रह्मकारणत्वप्रतिपादकवाक्यविरोधात् न उभयमपि कारणमिति यदुक्तं तदनूद्य दूषयति यदुक्तमित्यादिना। तन्न इति प्रतिज्ञायां हेतुमाह ब्रह्मेति। अज्ञानमेव जगदुपादान-मित्यर्थः।

ननु उभयत्र कारणप्रतिपादकवाक्यसद्भावे कथमयं नियम-स्तत्राह ब्रह्मण इति। अविकारित्वादित्यर्थः। सदेव सोम्येद-मग्र आसीत् इत्यादिवाक्यानां कारणत्ववादिनां गतिमाह अधिष्ठानत्वेति। जगदुपादानमायाश्रयत्वमात्रेण इत्यर्थः।

कूटस्थस्य कार्य्यकारणविलक्षणत्वात् तदेतद् ब्रह्माऽपूर्वमनपरमनन्तरमबाह्यम् अयमात्मा ब्रह्म सर्वानुभूरितिश्रुतेः।

श्लोकं व्याचष्टे दृश्यत्वादीति। जगतोऽविद्यैव कारणमिति अन्वयः। ननु अविद्या नाम विद्याया अभावः स च न जगदुपादानं तत्कार्य्यस्य भावत्वात् तत्राह अनिर्वचनीयेति। सदसद्विलक्षणा इत्यर्थः। जगदुपानत्वसिद्धये विद्यां विशिनष्टि अनादीति। ननु तथापि जगतः सत्वेन प्रतीतेः सद्विलक्षणाविद्या कथं तदुपादानं तत्राह अनिर्वचनीयस्येति। तत्र प्रमाणमाह दृश्यत्वादीति। विमतं सद्विविक्तं दृश्यत्वात् परिच्छिन्नत्वात् सम्मतवत् इत्यर्थः। अपरोक्षत्वाच्च न असत् ततः सदसद्विलक्षणम् अनिर्वचनीयं जगदित्यर्थः। तथाच अनिर्वचनीयस्य जगतोऽनिर्वचनीयम् अज्ञानमेवोपादानं युक्तं कार्य्यकारणयोस्तुल्यरूपत्वादित्यर्थः एवकारव्यावर्त्त्यमाह न ब्रह्मेति। ननु श्रुत्या चेत् कारणता बोध्यते कथम् आत्मा तद्विलक्षणस्तत्राह तदेतदिति। तदेतदज्ञानादिविषयं जगत् ब्रह्मैव न जगतो रूपान्तरम् अस्ति इत्यर्थः। अपूर्वमकार्य्यं न विद्यते अपरं कार्य्यं यस्य तदनपरकारणम् इत्यर्थः। न सामान्यं ब्रह्मेत्याह अनन्तरमिति। तर्हि विशेष इति तत्राह अबाह्यमिति। अव्यावृत्तानुगतमित्यर्थः। तस्य परोक्षत्वं निरस्यति अयमिति। अपरोक्षमित्यर्थः। आत्मनः संसारित्वव्यावर्त्तनायाह ब्रह्मेति। आत्मानं विशिनष्टि सर्वानुभूरिति। सर्वात्मा चिदात्मत्वादनुभूरिति शब्दः पूर्वपरामर्शार्थः तस्य पूर्वोक्तं विज्ञानं कर्त्तव्यमिति

कथं तर्हि ब्रह्मणो जगत्कारणत्वं श्रुतौ प्रसिद्धं जगत्कारणाधिष्ठानत्वेन कारणत्वोपचारात् ब्रह्मकारणश्रुतेरन्यार्थत्वाच्च एकमेव अद्वितीयमितिश्रुतेः अद्वितीयत्वं तावद्ब्रह्मणः सिद्धं तत्कथं सम्भाव्यतामिति कार्य्यकारणयोः अभेदस्तावल्लोकप्रसिद्धः ब्रह्मापि जगत्कारणमिति कथमसम्भावना स्यादिति अद्वितीये सम्भावना-

वेदानुशासनमिति वेदाज्ञा तदुल्लङ्घने संसारानर्थप्रसक्तिस्तत्करणे च आत्मनः कृतकृत्यता इत्यर्थः। कूटस्थत्वात् कारणत्वस्य च श्रुत्या निषिद्धत्वात् कारणश्रुतेर्जगदुपादानाज्ञानाधिष्ठानत्वेन अपि उपपत्तेर्न ब्रह्मकारणं किन्तु अज्ञानमेव इत्यर्थः। ननु उपचरितमपि कारणत्वं किमिति श्रुतिर्वक्ति निष्प्रयोजनत्वात् तत्राह ब्रह्मेति। अन्यार्थत्वं स्पष्टयति एकमेव इत्यादिना तस्या इत्यन्तेन। ननु सर्वेषां वेदान्तानां ब्रह्मपरत्वं समन्वयार्थः। तत्र वेदान्तैकदेशस्य अज्ञानकारणत्वे कथं न अपसिद्धान्तस्तत्राह न चेति। किमर्थं तत् तर्हि श्रुत्योच्यते इति तत्राह तस्येति। कारणत्वस्य इत्यर्थः। अखण्डानन्दचिदात्मनो नानादुःखित्वप्रकाश्यत्वादिरूपेण प्रतिभासो भ्रमस्तन्निमित्तत्वेन अज्ञानकारणवाद इत्यर्थः। तदुक्तं विषयकरणदोषात् न भ्रमः संविदि स्यादपि तु भवति मोहात् केवलादेवमेव भगवति परमात्मनि अद्वितीये विचित्राद्वयमतिरियमस्तु भ्रान्तिरज्ञानहेतुरिति। किमिति सुख्योपा-

बुद्धिमात्रप्रयोजनत्वात् तस्याः न च अज्ञानमपि जगत्कारणं श्रुत्या विवक्षितम्। तस्य भ्रमनिमित्तमात्रत्वेनैव उक्तत्वात् कार्य्यकारणवादस्य वेदान्तवहिर्भूतत्वात् विवर्त्तस्यैव वेदान्तवादत्वात्।

किं जगतः कारणमिति पृष्टे प्राप्ताप्रतिभानिवृत्तिमात्रप्रयोजनतया अज्ञानं कारणमिति अभिहितत्वाच्च।

दानकारणतां श्रुतेः प्रच्याव्य निमित्तमात्रपरता कल्प्यते तत्राह कार्य्येति। सदसतोः कार्य्यत्वानिरूपणात् व्यापारवतः कारणत्वे व्यापारस्य अकार्य्यत्वे सदा कार्य्यप्रसक्तेः कार्य्यत्वे अनवस्थाप्रसक्तेः कार्य्यकारणभावस्य कल्पितत्वेन प्रमाणायोग्यत्वात् तत्त्वे वा अद्वैतापत्तेर्वेदान्तवादवहिर्भूतः कार्य्यकारणवाद इत्यर्थः। यद्वा कार्य्यकारणवादे आरम्भवादस्य परिणामवादस्य वा प्रसक्तेस्तस्य च अनिष्टत्वात् वेदान्तवादवहिर्भूतः स एव इत्यर्थः। कस्तर्हि वेदान्तवाद इति तत्राह विवर्त्तेति। एकस्य तत्त्वादप्रच्युतस्य पूर्वविपरीतासत्यानेकरूपावभासो विवर्त्तः।

ननु एतस्यां कल्पनायां मायां तु प्रकृतिं विद्यादित्यादिवाक्ये प्रकृतिशब्दो विरुध्यते इत्याशङ्क्य उपादानत्वबोधकवाक्यस्य गत्यन्तरमाह किं जगत इति। ननु अज्ञानं यदि निरूपणपथमवतरेत् भवतु तदा उपादानं वा निमित्तमात्रं वा तदेव नास्ति वक्ष्यमाणयुक्तेरिति शङ्कते ननु इदमिति।

ननु इदमज्ञानं कार्य्यमकार्य्यं वा? आद्ये किमस्य कारणम् अज्ञानं ब्रह्म वा? नाद्यः, तेन च तज्जनने आत्माश्रयात् अज्ञानान्तराऽनुसरणे तु अनवस्थादिप्रसङ्गात्। न द्वितीयः, ब्रह्मणः अकारणत्वात् अनिर्मोक्षप्रसङ्गाच्च।

द्वितीये तु अनादिभावस्या अनिवृत्तिप्रसङ्गो ह्मवब्रत्। नच कल्पितत्वाकल्पितत्वाभ्यां विशेषः

अनवस्थादीति। अनवस्था च तस्या आदि च अनवस्थादयस्तेषां प्रसङ्गादित्यर्थः। अनवस्थाया आदिभूतौ अन्योन्याश्रयचक्रकाख्यौ दोषौ अज्ञानान्तरान्वेषणे अन्योन्याश्रयः तृतीयाज्ञानस्वीकारे चक्रकं चतुर्थे अनवस्थेत्यर्थः। यद्वा अनन्ताज्ञानस्वीकारस्तदा स्यात् यदि अनन्ताज्ञानपरम्परावगाहिनी संवित् स्यात्। न च सा अस्तीति प्रमाणाभाव आदिपदेन गृह्यते ब्रह्म अविद्याकारणमिति पक्षं दूषयति न द्वितीय इति। किमन्योपहितं ब्रह्म अविद्याकारणम्? उत शुद्धं? नाद्यः, उपधानस्य अविद्यातत्कार्य्यान्यतरस्य अविद्यातः प्रागसत्त्वात्। द्वितीयं दूषयति ब्रह्मण इति। कूटस्थत्वादित्यर्थः। कारणत्वमङ्गीकृत्यापि दूषयति अनिर्मोक्षेति। शुद्धं ब्रह्म अज्ञानकारणं चेत् तर्हि मुक्तस्यापि संसारः स्यात् संसारकारणाज्ञानस्य सामग्रीसत्त्वे तदुत्पत्तेः आवश्यकत्वादित्यर्थः।

द्वितीये तु इति विमतमज्ञानं न निवर्त्तते अनादित्वे सति भावत्वात् ब्रह्मवत् इत्यर्थः। घटादावनैकान्तिकत्वपरिहाराय

कल्पनासामग्र्यभावेन कल्पनानुपपत्तेः नच अनादिरयमध्यासः अध्यासत्वासिद्धेः विद्या-बाध्यत्वात् तत्सिद्धिरिति चेत्? न, अन्योन्या-श्रयात्। नच एते दोषा वस्तुनो वस्तुत्वाप-हारकाः कल्पितस्य च अज्ञानस्य किमेते कुर्युः स्वत एव तस्य वस्तुत्वाभावात् अत एव उक्त-मलङ्कारोह्ययमस्माकं यद्युक्तिप्रमाणाभ्यां दुर्घटत्वं सुघटत्वे कल्पितत्वं दुर्घटं भवेदिति वाच्यं कल्पि-

अनादीति विशेषणं प्रागभावे व्यभिचारपरिहाराय भाव-विशेषणम् अत अमिथ्यात्वमुपाधिमाशङ्क्य निराचष्टे न चेति। साधनव्यापकत्वादिति हेतुमाह कल्पनेति। सादृश्यं पूर्वसंस्कारो दोषश्च इत्येतत् त्रयं कल्पनासामग्री तदत्र अज्ञानकल्पनेन अस्ति अज्ञानं यदि कल्पितं तर्हि आत्मन्येव तत्कल्पितमिति आत्मा-धिष्ठानं न च आत्माज्ञानयोः सादृश्यमस्ति निरवयत्वात् न वा पूर्वसंस्कारो दोषो वा अस्ति तयोरज्ञानपूर्वकत्वेन अज्ञानात् प्रागसिद्धेरित्यर्थः। ननु सादेरध्यासस्य अभूत्वाभावित्वे कार्य्य-त्वात् भवतु तत्र सामग्र्यपेक्षा अध्यस्यमानमज्ञानमनादीति किं तत्र सामग्री करिष्यति इत्याशङ्क्याह न चेति। बाधकोन्नेय-मध्यासत्वं न च अज्ञाने बाधकमस्तीति न अज्ञानमध्यस्त-मित्यर्थः। अज्ञाने बाधकमाशङ्कते विद्येति। किं विद्यानिवर्त्त्यं बाध्यम्? उत कल्पितं सद्विद्यानिवर्त्त्यं वा? आद्ये पूर्वज्ञानस्य उत्तरज्ञाननिवर्त्त्यस्य बाध्यता स्यात् इत्यभिप्रेत्याह नेति।

तत्वस्य एव अद्यापि असिद्धत्वात् धर्मिण एव असिद्धेः।

ननु केयं सिद्धिः उत्पत्तिर्ज्ञप्तिर्वा? नाद्यः, अनादेस्तदभावस्येष्टत्वात्। न, द्वितीयः साक्षिसिद्धत्वेन तदभावात्। मैवम् अज्ञानस्य साक्षि-

द्वितीयं दूषयति अन्योन्येति। कल्पितत्वे सिद्धे ज्ञानबाध्यत्वं ज्ञानबाध्यत्वे च कल्पितत्वमित्यन्योन्याश्रय इत्यर्थः। ननु पूर्वोक्तदोषाः किम् अज्ञानस्य स्वरूपमपलपन्ति? उत वस्तुत्वं? नाद्यः, अहमज्ञ इति प्रतीतिसिद्धेः अज्ञानस्वरूपापलापायोगात्। न द्वितीयः इष्टापत्तेरिति सिद्धान्तिमतमनूद्य दूषयति न च इत्यादिना। अज्ञानस्य कल्पितत्वे सिद्धे दोषैरपि तदेव सम्पाद्यते इति स्यादेव इष्टापत्तिः। न च कल्पितत्वं सिद्धमिति कथम् इष्टापत्तिरिति। न च वाच्यमित्यत्र हेतुमाह कल्पितस्येति। ननु एते एव दोषास्तर्हि अविद्यायां कल्पितत्वं साधयिष्यन्ति तत्राह धर्मिण एवेति। सिद्धे धर्मिणि दोषैः तत्कल्पितत्वं साधनीयं नाद्यापि धर्म्यज्ञानसिद्धम् अहमज्ञ इति प्रतीतेर्ज्ञानाभावविषयत्वादित्यर्थः।

असिद्धिशब्दार्थस्य प्रतियोगिसिद्धिज्ञानाधीनज्ञानत्वेन सिद्धिपदार्थं विचारयितुं सिद्धान्ती प्रवर्त्तते ननु केयमिति। साक्षिसिद्धत्वेनेति। अयमर्थः अहमज्ञ इति तावत् प्रतीतिरुभयसिद्धा सा च न तावत् स्वप्रकाशमहिम्ना अज्ञानस्य जड़त्वात् नापि प्रमाणात् लिङ्गाद्यप्रतिसाधनजन्यत्वेन अनुमानादेरभावात् प्रत्यक्षादिति चेत् किं वहिरिन्द्रियम्? उत मनः?

सिद्धत्वे साक्षिणः असङ्गत्वभङ्गप्रसङ्गात् सम्बन्धं विना च अप्रकाशकत्वात्। नच पारमार्थिक-सम्बन्धाभावेऽपि कल्पितः सम्बन्धः अस्त्येवेति

वहिरिन्द्रियाणामन्तराप्रवृत्तेः नाद्यः, मनश्चेत् न, नहि अज्ञानमात्रं स्फुरति किन्तु अहमवच्छिन्नं तत्राहमिति विशेषणांशः शुद्ध आत्मा अहङ्कारविशिष्टो वा अहङ्कारोपाधिको वा? नाद्यः, शुद्धस्य स्वप्रकाशत्वात्। द्वितीये अहङ्कारात्मकस्य मनसोऽपि मनोवेद्यत्वमिति अतीन्द्रियत्वक्षतिः आत्माश्रयश्च तृतीये अहङ्काराकारताप्रतीतिर्न स्यात् उपाधेस्तटस्थतया विषयकोटावप्रवेशात् तथापि तदाकारत्वे साकारवादप्रसङ्गात् सुषुप्तौ मनसो सत्त्वेऽपि अज्ञानप्रतिभासात् मनसस्तत्प्रतीतिकरणतानुपपत्तेश्च तस्मात् पारिशेष्यात् साक्षिवेद्यमेव अज्ञानमिति धर्मिणोऽज्ञानस्य सिद्धिरेव इति तदसिद्धिरसिद्धेति। साक्षिवेद्यत्वमज्ञानस्य निरस्यति मेवमिति। साक्षी किं स्वसम्बद्धं प्रकाशयति? उत असम्बद्धम्? आद्यमपसिद्धान्तप्रसङ्गेन दूषयति अज्ञानस्येति। तथाच असङ्गो नहि सज्जते इति श्रुतिविरोधप्रसङ्ग इति। द्वितीयं दूषयति सम्बन्धं विनेति। प्रदीपादौ सम्बन्धे एव प्रकाशकत्वदृष्टेरिति हेतुसमुच्चयार्थश्चकारः। ननु सम्बन्ध एव अज्ञानेन साक्षिणो मृग्यते किं काल्पनिकः? किं वा वास्तवः? नान्त्यः, असमर्थविशेषणत्वात्। न हि कल्पितः सर्पः प्रदीपेन भास्यते न वा तेन सम्बन्धः प्रदीपस्य पारमार्थिकः? अथ सम्बन्धमात्रं तत्र मृग्यं तर्हि कल्पितः सोऽस्त्येव इति सिद्धान्तिशङ्कामनूद्य दूषयति न च

आद्यं सम्बन्धसम्बन्धिनामन्यतमस्य कल्पकत्वे आत्माश्रयान्योन्याश्रयकूटस्थत्वहान्यसङ्गत्वक्षति-मोक्षाभावप्रसङ्गानां यथायथं प्राप्तेः।

इति। सम्बन्धकल्पनं किं सादि अनादि वा? सादि चेत् तर्हि कल्पकं किं सम्बन्धतत्सम्बन्धिभ्याम् अन्यत्? उत एतदेव? नाद्यः, संयोगे सम्बन्धिनोऽन्यत्र सम्बन्धोपादानत्वादर्शनात्। द्वितीयमनूद्य दूषयति सम्बन्धेति। सम्बन्ध एव किं स्वात्मानं कल्पयति किं वा सम्बन्धिनौ इति? द्वितीयं पक्षं द्विधा विकल्प्य क्रमेण दूषणमाह आत्माश्रयेति। सम्बन्ध एव चेत् स्वात्मानं कल्पयति तदात्माश्रयः सम्बन्धिमध्येऽपि किम् अज्ञानं कल्पयति? साक्षी वा? नाद्यः, इत्याह अन्योन्याश्रयेति। अज्ञानं लब्धसत्ताकं स्वसम्बन्धं जनयिष्यति। जनिते च सम्बन्धे लब्धसत्ताकं भविष्यति इति अन्योन्याश्रय इत्यर्थः। साक्षिपक्षं प्रतिषेधति कूटस्थत्वेति। उपयन्नयंधर्मो विकरोति हि धर्मिणमिति न्यायात् कूटस्थत्वहानिरित्यर्थः। अथ एतद्दोषपरिहाराय उपाध्युपरक्त एव अज्ञानसम्बन्धं करोति साक्षी तत्राह असङ्गत्वेति। अज्ञानं हि साक्षिणा असम्बद्धं न स्वरूपं लभते। अलब्धसत्ताकञ्च न उपाधिं जनयति। तथाच येन उपहितः साक्षी स उपाधिः पारमार्थिक इति तत् सङ्गित्वे असङ्गत्वक्षतिरित्यर्थः। अत्रैव दूषणान्तरमाह मोक्षेति। तत्त्वसाक्षात्कारात् अज्ञानं तत्प्रभवञ्च नश्यति विरोधात् नान्यत् तथाच येन उपहितः साक्षी स उपाधिः परमार्थः तस्य उपाधेरुक्तविधया परमार्थिकत्वादनिवृत्ते ज्ञानावस्थायामपि तादृगज्ञानसम्बन्धहेतुसत्त्वादनुच्छिन्नः संसारः स्यात् इत्यर्थः। अथ

नच अविद्याऽध्यासवत् तत्सम्बन्धाऽध्यासस्याऽपि अनादित्वेन अविद्यादिहेत्वजन्यत्वेऽपि तत्तन्त्रतया तन्निवृत्तौ निवृत्तिः स्यात् इति वाच्यं तस्य अनादेरुत्पत्तौ निरपेक्षस्य साक्ष्यधीनज्ञानस्य अज्ञानानपेक्षतया तत्तन्त्रत्वानुपपत्तेः नच सम्बन्धिज्ञानाधीनं सम्बन्धज्ञानं लोके दृष्टमिति वाच्यं तस्य प्रत्यक्षादिसिद्धस्य तत्सापेक्षत्वेऽपि इह सम्बन्धिनोऽपि अज्ञानस्य साक्षिसम्बन्धसापेक्षस्फूर्त्तिकत्वेन वैपरीत्यात् नच सम्बन्धः स्वस्थित्यर्थं सम्बन्धिनमपेक्षते इति वाच्यं लब्धसत्तास्फूर्त्तिकस्यैव स्थित्यपेक्षणात् हेत्वनपेक्षत्वे इतरानपेक्षस्थितिकत्त्वाच्च।

एतद्दोषपरिहाराय अज्ञानसम्बन्धाध्यासोऽनादिरिति तर्हि अनादिभावत्वात् आत्मवत् निवृत्तिर्न स्यात्।

ननु अनिवृत्तौ अनादिभावत्वं न प्रयोजकं किन्तु अविद्यातन्त्रत्वानधिकरणत्वं सम्बन्धश्च निवर्त्तते अविद्यातन्त्रत्वादिति शङ्कित्वा परिहरति नच अविद्येति। उपाधेः साधनव्यापकत्वे पूर्वोक्तं हेतुमाह तस्य इति। किमिदमज्ञानतन्त्रत्वं किमज्ञानजन्यत्वं ? उत अज्ञानभास्यत्वं ? अथ अज्ञानाधीनस्थितिकत्वं न प्रथमद्वितीयावित्याह अनादेरित्यादिना। सम्बन्धिज्ञानाधीनमिति तथाच विशेषणीभूतसम्बन्धिनोऽपि तज्ज्ञानहेतुत्वात् सम्बन्धस्य अज्ञानतन्त्रत्वम् इत्यर्थः। तृतीयं

नच अज्ञानस्य ग्रहप्रागभावरूपस्य ग्रहानुपलम्भादुपलम्भ इति वाच्यं नित्योपलम्भरूपस्य आत्मनोऽनुपलम्भानुपपत्तेः भावरूपजगदुपादानस्य च अज्ञानस्य अभावरूपत्वानुपपत्तेश्च तथा च अज्ञानस्यैव अभावात् कथं तत् जगत्कारणत्वेन उपन्यस्यते इति।

मैवम्।

प्रश्नस्य ज्ञानपूर्वकादाक्षेपे प्रतियोगिधीः।
अवश्यम्भाविनी पूर्वा विरोधः स्यादितोऽन्यथा॥३९

दूषयति नच इति सम्बन्धः किमलब्धसत्ताक एव स्थितिमात्रार्थं सम्बन्धिनमपेक्षते? उत लब्धसत्ताकः? आद्यं दूषयति लब्धेति। द्वितीयेऽपि सत्तालाभः किं हेतोः? उत हेतुनैरपेक्ष्येण? आद्ये अनादित्वपक्षक्षतिः। द्वितीयं दूषयति हेत्वनपेक्षत्व इति। आत्मनि तथा दर्शनात् इत्यर्थः।

ननु अज्ञानं नाम ज्ञानप्रागभावः स च ज्ञानानुपलब्ध्या गृह्यते इति।

कथं तदसिद्धिरित्याशङ्क्य दूषयति न चेति। ग्रहशब्देन किं वृत्तिर्विवक्षिता किं वा स्वरूपचैतन्यं? नाद्यः वृत्तेर्जड़त्वेन मुख्यग्रहत्वानुपपत्तेः। द्वितीयं दूषयति नित्योऽपलम्भेति। नित्योपलम्भात्मनोऽनुपलब्धिरयुक्तेत्यर्थः। अज्ञाननिराकरणम् उपसंहरति तथा चेति। तन्निराकरणस्य प्रकृतोपयोगमाह कथं तत् इति।

एतत् पूर्वपक्षनिषेधं प्रतिजानीते मैवमिति। विरोध इति

कथमज्ञानसिद्धिरिति वदन् प्रष्टव्यः किमयमज्ञानस्वरूपविषयकः प्रश्नः किं वा तत् स्वरूपाऽऽक्षेपः तत्स्वरूपसाधकप्रमाणप्रश्न एव वा अयम्? आद्ये अज्ञाते स्वरूपे प्रश्नानुपपत्तेः प्रश्नात् पूर्वमज्ञानस्वरूपसिद्धेरवश्यम्भावात् तवैव अज्ञानस्वरूपं सिद्धमिति कोऽत्र प्रश्नः।

इतः स्वरूपप्रश्नाक्षेपाभ्याम् अन्यथा स्वरूपविषयप्रमाणप्रश्ने विरोधः अज्ञानस्य प्रमाणनिरसनीयत्वात् तत्र प्रमाणप्रश्नो विरुद्धः स्यात् इत्यर्थः।

श्लोकं व्याख्यातुं भूमिकामाह कथमिति। अज्ञानाङ्गीकर्त्तॄन् प्रति यदि इदं पूर्वपक्षी वदति अज्ञानसिद्धिः कथमिति स इत्थं वदन् सिद्धान्तिना प्रष्टव्य इत्यर्थः। प्रष्टव्यमाह किम् अयमित्यादिना। स्वरूपसाधकं स्वरूपबोधकमित्यर्थः। आद्यम् अज्ञानस्वरूपविषयकप्रश्नपक्षमनूद्य दूषयति आद्य इति। अयमर्थः। प्रश्नो हि वाग्व्यवहारविशेषः व्यवहारश्च व्यवहर्त्तव्यज्ञानसाध्यः व्यवहर्त्तव्यञ्च अत्र अज्ञानस्वरूपमिति तज्ज्ञानमावश्यकं तथाच अज्ञानस्वरूपस्य त्वां प्रति सिद्धत्वात्। अतोऽज्ञानस्वरूपसिद्धये वृथा प्रश्न इति। ननु न अज्ञानस्वरूपसामान्यजिज्ञासया प्रश्नोऽयं येन अयमुपालम्भः स्यात् किन्तु तद्विशेषजिज्ञासयेति तत्राह न च इति। कुत इति तत्राह उक्तेति। वैयर्थ्यादित्यर्थः। अज्ञानस्वरूपसिद्धिरेव मृग्यते सा चेत् सामान्यतः सिद्धा किं विशेषज्ञानेन इत्यर्थः। यद्वा सामान्यप्रतीतिरेव विना विशेषमपर्य्यवस्यन्ती विशेषमपि ते कथितवतीति वृथा तत् जिज्ञासया प्रश्न इत्यर्थः।

नच सामान्यज्ञानाद्विशेषजिज्ञासा युक्ता उक्तदोषात् नच आक्षेपो युक्तोऽभावज्ञानस्य प्रतियोगिज्ञानपूर्वकत्वनियमेन अज्ञानस्वरूप-सिद्धेः पूर्वमेव वृत्तत्वात् नच भ्रमोपस्थितस्य अज्ञानस्य आक्षेपो न्याय्यः यतः केन कुत्र भ्रम इति पृष्टे परोक्तशब्दाभासेन अज्ञानविषयक इत्येव उत्तरं तथा च भ्रमस्य स्वसमानविषयका-

द्वितीयमाक्षेपपक्षं दूषयति न च इति। अज्ञानाक्षेपो नाम अज्ञानतिरस्करणं तदभावावबोधनमिति यावत् तद-भावश्च शब्देन बोधनीयः शब्दश्च ज्ञानपुरःसरः अभावज्ञानञ्च प्रतियोगिज्ञानाधीनमिति प्रतियोग्यज्ञानं सिद्धमिति न तदपलापमर्हतीत्यर्थः।

ननु प्रमाणसिद्धमेव न अपलापयोग्यमज्ञानं पुनर्भ्रमोपस्थित-मिति कथं तन्न अपलापयोग्यमिति तत्राह न च इति। भ्रमस्य करणविषयाधीनत्वात् तदुभयं त्वया वाच्यमिति सिद्धान्ती आह यत इति। शब्दाभास एव भ्रमे करणम् अज्ञानञ्च तस्य विषय इति। पूर्वपक्षिणे सिद्धान्ती मतं ददाति परोक्तेति। शब्दस्य आभासत्वोपपादनाय परोक्तेति विशेषणं सिद्धान्ती एव पूर्वपक्षिणे मतमित्थं दत्त्वा तद्दूषयति तथाच इति। अज्ञानभ्रमे उपादानं किम् अज्ञानम्? उत अन्यत्? नान्त्यः, अज्ञानस्य उपादानत्वात् तदज्ञानं किं निरूपणीयत्वेन प्रकृतं तदेव? उत अन्यत्? आद्ये आत्माश्रयः द्वितीये अन्योन्याश्रयः तृतीये चक्रकं चतुर्थेऽनव-

ज्ञानोपपादकत्वात् अज्ञानविषयकापराज्ञान-स्वीकारे अनवस्था दुर्वारा। हन्त तर्हि एका-ज्ञानासहिष्णुतया आक्षेपं प्रयुञ्जानस्य अनेका-ज्ञानस्वीकरणे मदोन्मत्तस्य स्वव्याघातगौरव-वैयर्थ्यादिदोषमपश्यतः स्वपक्षनिर्वाहोव्याहत एव।

ननु एवं क्वचित् तव अपि प्रश्नाक्षेपयोः सत्त्वात्तुल्यः पर्य्यनुयोग इति वाच्यम् अज्ञात-तया साक्षिसिद्धेऽज्ञाननिवृत्त्यर्थं प्रमाणप्रश्नस्य प्रमाणादर्शनेन स्वरूपतिरस्काररूपस्य च आक्षे-

स्यादि। द्वितीयश्चेत् तत्राह भ्रमस्येति। अस्तु अनेकाज्ञान-परम्परेति चेत् तत्राह हन्त इति। अज्ञानाङ्गीकारे स्वमत-व्याघातः एकेनैव अज्ञानेन स्वाकारस्य अन्याकारस्य च भ्रमस्य सिद्धेरनेकाज्ञानस्वीकारे गौरवम्।

किञ्च अज्ञानस्य जड़त्वेन स्वत एव आवृत्तैकस्वरूपत्वात् तत्र आवरणकृत्याभावात् अज्ञानविषयकाज्ञानस्वीकारवैयर्थ्यम् एवमपि अज्ञानानि स्वीक्रियेरन् यदि अज्ञानपरम्परावगाहिनी काचित् संविदुदिता स्यात् न च एवमस्ति इति दूषणद्योत-नाय आदिपदम्।

यत्र उभयोः समो दोष इति न्यायमाश्रित्य यत् पूर्व-पक्षिमतं तद्दूषयति न च एवमिति। परिहारासाम्यहेतुमाह अज्ञाततयेति। परिहारसाम्यव्याजेन तृतीयं पक्षमुत्थापयति

पस्य कर्त्तुं सुकरत्वात्। अस्तु तर्हि ममापि साक्षिसिद्धे अज्ञाने प्रमाणप्रश्नः समञ्जसः एवं तर्हि अज्ञानसाक्षिणोः सम्बन्धोऽपि वाच्यः अन्यथा साक्षिणः साधकत्वानुपपत्तेः तथा अज्ञानतत्सम्बन्धयोः अनादित्वमपि वाच्यम् अन्यथा पूर्वमुक्तस्य इदानीं संसारोपलम्भः स्यात् नच पूर्वमपि अज्ञानान्तरमेवेति वाच्यम् अज्ञानपरम्परातः एकस्यैव लघुत्वात्।

अस्तु तर्हि इति। अज्ञानस्य साक्षिसिद्धत्वं निर्वाहयितुमाह एवमिति। अज्ञानसाक्षिसम्बन्धस्य अनादित्वं विपक्षबाधकेन दृढ़यति अन्यथेति। साक्ष्यज्ञानसम्बन्धस्य सादित्वे आदिकारणं किम् आत्मा? अज्ञानं वा? नाद्यः, मुक्तस्यापि संसारोपलम्भः स्यादित्यर्थः। अज्ञानं चेत् तत् किं सम्बन्धिरूपम्? अन्यद्वा? नाद्यः, स्वतन्त्राज्ञानासम्प्रतिपत्तेः संबद्धं चेत्? न, सम्बन्धस्य अद्यापि असिद्धत्वात् अज्ञानान्तरपक्षमनूद्य दूषयति न च इति। तदपि अज्ञानं सम्बद्धमसम्बद्धं वा? अन्त्ये स्वतन्त्राज्ञानप्रसक्तिः द्वितीये अनवस्था। ननु इयम् अनवस्था न दोषाय अज्ञानपरम्पराया अनादित्वादिति चेत्? तत्राह अज्ञानपरम्परात इति। अयमर्थः, आत्मनि किमिति अज्ञानपरम्परा स्वीक्रियते? आवरणार्थमिति चेत्? एकेनैव तदुपपत्तेः अज्ञानसम्बन्धार्थमिति चेत्? स्वेनैव सम्बन्धोपपादनात् समवायवत् यथा समवायः स्वसम्बन्धिप्रतीतिसिद्धं सम्बन्धं स्वयमेव उपपादयति। न च समवाया-

तच्च यत् येन विना अनुपपन्नं तत् सर्वं सम्बन्धित्वमनादित्वम् अनिर्वचनीयत्वं भावरूपत्वं विचित्रशक्तिकत्वम् एकत्वमन्यद्वा यत्किञ्चित् अपेक्षितं स्वोपपादकत्वेन सर्वं कल्पयति इति अपि वाच्यम् तथाच प्रमाणप्रश्नो ऽनर्थक एव अज्ञानस्य साक्षिणैव सिद्धत्वात् नच अज्ञानविषयाज्ञाननिवृत्त्यर्थं प्रमाणप्रश्नो युक्त इति

न्तरं समवायघटयोः सम्बन्धोपपादकं तथाज्ञानसाक्षिसम्बन्धोपपादकम् अज्ञानमेव इति लाघवादिकमेव अज्ञानं युक्तं न तत्परम्परेति ।

अज्ञानस्य सत्त्वे द्वैतापत्तेरसत्त्वे परोक्षप्रतीत्यविषयत्वापत्तेरनिर्वचनीयं तत् अभावत्वे प्रपञ्चोपादानता न स्यादिति अज्ञानं भावरूपम् अभावस्यापि उपादानत्वे तत् कार्य्ये सद्बुद्धिर्न स्यादिति एकस्य अनेकविचित्रकार्य्यजनकत्वानुपपत्तिकल्प्यं रूपान्तरमाह विचित्रेति। धर्म्मिभेदकल्पनातो धर्मभेदकल्पना वरमिति अभिप्रेत्याह एकत्वमिति। अनादेरपि तस्य निवृत्त्यर्थं ज्ञाननिवृत्तियोग्यत्वमपि वक्तव्यमिति अभिप्रेत्याह अन्यद्वेति। एवं पूर्वपक्षिद्वारा ज्ञानं तत्स्वरूपम् उपपाद्य अज्ञानसाधकप्रमाणविषयकप्रश्नपक्षं निरस्यति तथाच इति। यदि एतादृशम् अज्ञानं साक्षिणैव सिद्धं किमत्र प्रमाणं करिष्यति सिद्धे साधनवैयर्थ्यादित्यर्थः। न अज्ञानस्वरूपसिद्धये प्रमाणं पृच्छ्यते किन्तु अज्ञानविषयाज्ञाननिवृ-

वाच्यं तदभावात् अज्ञानस्य प्रमाणेन ज्ञातुमशक्यत्वाच्च तेन तस्य विरोधात् । तदयं तमोदीपन्यायः तथा हि ।

अज्ञानं ज्ञातुमिच्छेद्यो मानेनात्यन्तमूढधीः ।
स तु नूनं तमः पश्येद्दीपेनोत्तमतेजसा ॥

तथाच अज्ञानं कथमिति प्रष्टैवात्माज्ञानमुपपादनीयमिति स्वानुभवसिद्धे कथन्ताऽनुपपत्तेः ।

त्तये । न च अज्ञानविषयाज्ञाननिवृत्तिः साक्षिणैव सिध्यति तस्य तत्साधकत्वादिति परमतेन दूषयति न च इति । तदभावादिति अज्ञानविषयकाज्ञानाभावादित्यर्थः । अज्ञानस्य जड़त्वेन स्वत एव आवृतैकरूपत्वादित्यर्थः । ननु यथा लोकदृष्ट्या जडेऽपि घटे प्रमाणस्य प्रवृत्तिवत् अज्ञानेऽपि प्रमाणं प्रवर्त्ततामिति तत्राह अज्ञानस्येति । घटस्य प्रमाणानिवर्त्यत्वात् भवतु नाम प्रमाणेन शक्यज्ञानत्वम् अज्ञानस्य प्रमाणेन निवर्त्त्यनिवर्त्तकलक्षणविरोधात् न प्रमाणज्ञेयत्वम् अविद्याया युक्तमित्याह तेनेति । उक्तविरोधं न्यायेन स्पष्टयति तदयमिति ।

ननु दीपतमसोरपि न निवर्त्त्यनिवर्त्तकत्वविरोधः मन्दप्रदीपे वेश्मनि युगपत् तदुभयोपलब्धेरिति न इत्याह उत्तमतेजसेति ।

अज्ञानप्रश्नान्यथानुपपत्तिसिद्धम् अज्ञानं न कथन्ताम् अर्हति इत्युपसंहरति तथाच इति ।

ननु तदेव स्वीकर्त्तव्यं यन्न स्वप्रयोजनविरोधि अज्ञानञ्च अनर्थहेतुत्वात् मुक्तिलक्षणप्रयोजनविरोधि एव इति कथं तत् स्वीक-

पत्तिरेव । कुतस्तर्हि मे मुक्तिः कर्त्तृत्वाद्यशेषानर्थव्रातप्रसवबीजस्य आत्माज्ञानस्य स्वानुभवसिद्धत्वात् तत्त्वमस्यादिवाक्यजन्याऽपरोक्षब्रह्मात्मसाक्षात्कारेण अज्ञानबाधादेवेति गृहाण ।

ननु कोऽयं बाधः तत्र पूर्वप्रत्ययस्य व्यधिकरणप्रकारकत्वनिश्चय इति अन्ये तन्न अन्यथाख्यात्यनङ्गीकारात् अज्ञानस्य अबाधापत्तेश्च ।

त्तव्यम् । न च वेदान्तवाक्यजन्यज्ञानात्तन्निवृत्तिः श्रुतवेदान्तानामपि पूर्ववत् संसारानुवृत्तिदर्शनादिति शङ्कते कुतस्तर्हि इति । अज्ञानस्वीकारेऽपि न मुक्त्यनुपपत्तिः वाक्योत्थात् ब्रह्मात्मैक्यसाक्षात्कारात् अज्ञानबाधायां मुक्त्युपपत्तेरिति कुतो मुक्तिरिति हेतुप्रश्नं मत्वा उत्तरमाह तत्त्वेति ।

बाधशब्दार्थं निरूपयितुं जिज्ञासामुत्थापयति ननु कोऽयमिति । तत्र नैयायिकाभिमतं बाधस्वरूपमाह तत्रेति । इदं रजतमिति पूर्वप्रत्ययः पुरोवर्त्तिविषयको रजतत्वप्रकारकस्तस्य प्रत्ययस्य इदन्त्वेन व्यधिकरण इदन्त्वाधिकरणानधिकरणः प्रकारो यस्य स तत्प्रकारकस्तस्य भावस्तत्त्वं तद्विषयकीयो निश्चयो निर्णय इदमित्थमिति स एव बाध इत्यर्थः । ततश्च पूर्वज्ञानस्य भ्रमत्वनिश्चयो बाध इति भावः । तदेतदपसिद्धान्तेन दूषयति तत्र इत्यादिना ।

अन्यथाख्यातिवादिमते हि पुरोवर्त्तिनि शुक्तिकाशकले न रजतं किन्तु सादृश्याद्युद्बुद्धसंस्कारोपनीतरजतात्मना पुरोवर्त्तिभातीति भवति पूर्वज्ञानं भ्रमो विषयस्य तत्र असत्त्वात्

सविलासाज्ञाननिवृत्तिरिति अस्मदीयाः केचित् तदपि आपातरमणीयं प्रत्येकसमुदायाभ्यामव्याप्तेः।

किञ्च केयं निवृत्तिः ध्वंसमात्रं वा? ज्ञान-

ततश्च तत्त्वेन निश्चयो बाध इति तेषामेव युज्यते न अस्माकम्। अस्मन्मते पुरोवर्त्तिनि मिथ्यारजतस्य उत्पन्नत्वेन इदन्त्वेन प्रकारस्य व्यधिकरणत्वाभावात् ततोऽपसिद्धान्त इति भावः। किञ्च पूर्वप्रत्यये व्यधिकरणप्रकारकत्वनिश्चयोऽधिष्ठानविषयाज्ञानं बाधते न वा? नाद्यः, भिन्नविषयत्वात् अज्ञानं हि शुक्तिविषयं बाधश्च ज्ञानस्य व्यधिकरणप्रकारकत्वविषयः। न च भिन्नविषययोर्ज्ञानाज्ञानयोर्निवर्त्त्यनिवर्त्तकभावोऽतिप्रसङ्गात् द्वितीयस्तु वैयर्थ्यादयुक्त इत्याह अज्ञानस्येति। तथाच ज्ञानं विफलं संसारमूलाज्ञानस्य अनिवृत्तेरिति भावः। विवरणकारमतं दूषयितुम् उत्थापयति सविलासेति। प्रत्येक इति किं विलासनिवृत्तिर्बाध? उत अज्ञाननिवृत्तिः? उत उभयनिवृत्तिः? न प्रथमद्वितीयौ अव्याप्तेः अतएव न तृतीयः। न हि प्रत्येकनिवृत्तिरुभयनिवृत्तिः प्रतियोगिभेदेन अभावभेदादित्यर्थः। ननु कार्य्याकारपरिणता ज्ञाननिवृत्तिरेव बाधः। न च एवमव्याप्तिः सर्वत्रैव अनुगणनादिति चेत्? सत्यं तथापि निवृत्तौ प्रतियोगिकार्य्याकारपरिणतमज्ञानं किं विशेषणम्? उपलक्षणं वा? नाद्यः, तादृगज्ञानस्यापि बाधत्वापत्तेः उपलक्षणं चेत् अभावे परिचायकधर्मस्य उपलक्षणकृतस्य अभावात्।

निवृत्तिमात्रं बाधः स्यादिति तत्र विकल्पयति किञ्चेति।

साध्यः स एव वा ? पदार्थान्तरमेव वा ? आत्मस्वरूपं वा ? नाद्यः मुद्गराद्याघातजन्यघटादिध्वंसे तदव्यवहारात्। न द्वितीयः उत्तरज्ञानसाध्यपूर्वज्ञानध्वंसे तथात्वापत्तेः ज्ञानमात्रध्वंसे अतिव्याप्तेश्च। न तृतीयः, तद्ध्वंसाव्यापनात् तदनिवृत्तौ अद्वैतक्षतेः। न चतुर्थः, तस्य नित्यसिद्धत्वेन ज्ञानवैयर्थ्यापत्तेः। तस्मात् बाधस्यैव निर्वक्तुमशक्यत्वात् कथमज्ञानतत्कार्य्यबाधात् मोक्ष इति।

पदार्थान्तरमिति न सत् नासत् न सदसदात्मकं नच अनिर्वचनीयं किन्तु पञ्चमप्रकार इत्यर्थः। तदव्यवहारात् बाधाव्यवहारादित्यर्थः। तथात्वापत्ते र्बाधत्वापत्ते रित्यर्थः। ननु पूर्वज्ञाननिवृत्तिं प्रति न उत्तरज्ञानत्वेन कारणता किन्तु क्षणिकविशेषगुणत्वेन। तथाच तत्र न अतिव्याप्तिरित्याशङ्क्याह ज्ञानमात्रेति। पदार्थान्तरं निवर्त्तते न वा ? आद्यं दूषयति तत्ध्वंसेति। द्वितीयं दूषयति तदनिवृत्तौ इति। ननु कथम् अद्वैतक्षतिः सतो द्वितीयस्य अभावादिति चेत् ? न, पदार्थान्तरस्य अनिर्वचनीयवैलक्षण्यात् असत्त्ववैलक्षण्या च आत्मवत् सद्रूपत्वोपपत्तेः ततः पदार्थान्तरस्थितौ कथं न अद्वैतक्षतिरिति चतुर्थं दूषयति तस्येति। आत्मस्वरूपस्य इत्यर्थः। ननु न आत्मस्वरूपमात्रं निवृत्तिः किन्तु वृत्त्युपलक्षितमिति चेत् ? न, गृहे काकजन्यतृणत्वादिवत् अत्र वृत्तिजन्यात्मपरिचायकस्य आत्मनिष्ठस्य धर्मस्य

अत्र ब्रूमः।

साक्षात्कृते त्वधिष्ठाने समनन्तरनिश्चितिः।
अध्यस्यमानं नास्तीति बाध इत्युच्यते बुधैः ॥४०॥

शुद्धे अधिष्ठाने विपरीतमध्यस्य प्रवर्त्तमानस्य निवर्त्तमानस्य वा यदधिष्ठानविषयकं बाधकज्ञानं परोक्षमपरोक्षं वा उत्पन्नं तदनन्तरमिदमिह कालत्रयेऽपि नास्ति इति योऽयं निश्चयः स एव बाध इति सर्वजनानुभवसिद्धम्। नच अन्यथाख्यातिवादेऽपि अस्य अर्थस्य अर्थात् पर्य्यवसानमस्तीति वाच्यं तत्राध्यस्यमानस्य अन्यत्र सत्त्वाभ्युपगमात् एवं ब्रह्मात्मसाक्षात्कारे जाते अज्ञानं तत्कार्य्यं च सर्वं यावत् किञ्चित् तत्र अध्यस्तं तत्सर्वं तत्र कालत्रयेऽपि

अभावादृत्तेरुपलक्षणत्वानुपपत्तेः प्रकृतोपयोगमुपपादयन् बाधनिराकरणमुपसंहरति तस्मादिति।

प्रतिपन्नोपाधावध्यस्यमानं कालत्रयेऽपि न अस्तीति योऽधिष्ठाननिश्चयानन्तरं बोधः स एव बाध इति परिहरति अत्र ब्रूम इत्यादिना। उक्तमर्थं संवादयति उच्यते बुधैरिति।

श्लोकं व्याचष्टे शुद्धे अधिष्ठानम् इति। परोक्षभ्रमे परोक्षमधिष्ठानज्ञानमपरोक्षे तदपरोक्षमिति विभागमाश्रित्याह परोक्षमपरोक्षं वेति। ननु बाधविषयो बाध्यमनिर्वचनीयमिति भवतो मतं तदिदं बाधविषयत्वं निरुक्तम्

नास्तीति यो निश्चयः स्वानुभवसिद्धः स एव तस्य तत्र बाध इति उच्यते अत एव प्रतिपन्नोपाधौ निषेधप्रतियोगित्वमनिर्वचनीयत्वमिति सम्प्रदायविदां लक्षणमपि समञ्जसम्।

नच उत्तरकालीननिषेधप्रतियोगित्वेऽपि वर्त्तमानातीतकालयोः सत्वान्न त्रैकालिकनिषेधप्रतियोगित्वम् अनिर्वचनीयत्वमिति वाच्यं अनिर्वचनीयत्वापरिज्ञानात् नहि कादाचित्कत्वमात्रेण अनिर्वचनीयत्वं भवति पराभिमतसत्यस्याऽपि घटादेस्तथात्वात्।

अन्यथाख्यातिवादिमते सत्यपि कान्ताकरादौ विद्यमानरजतं गतं यतः तदपि कालत्रये पुरोवर्त्तिनि शुक्तिकाशकलं न अस्तीति भवति निश्चयविषय इत्याशङ्क्य परिहरति न च अन्यथेति। अध्यस्यमानपदेन हेतुमाह तत्रेति। अन्यथाख्यातौ भ्रमविषयो रजतादिरन्यत्र सन् अस्मन्मते तु यत्रैव अधिष्ठाने अध्यस्यते रजतादि तत्रैव तदात्मना तत् सत् न स्वातन्त्र्येण इति भवत्यधिष्ठानात् पार्थक्येन त्रिकालं तदसदेवेति विशेष इति। उक्तमर्थं दार्ष्टान्तिकेन योजयति एवमिति। अध्यस्तस्य त्रैकालिकाभावनिश्चयस्य बाधत्वे सम्प्रदायविदामनिर्वचनीयलक्षणम् उपपन्नं भवति इत्याह अतएव इति।

अनिर्वचनीयलक्षणे असम्भवमाशङ्क्य परिहरति न च इति। अध्यस्यमानस्य बाधोत्तरकाले असत्त्ववत् ततः पूर्वमपि असत्त्व-

नच आविद्यकत्वेन विशेषः कारणस्य नामान्तरकरणापत्तेः नच ज्ञानबाध्यत्वेन विशेषः तस्यापि सतो नास्तित्वप्रमित्यनुपपत्तेः नच सकलकार्य्यकारणबाधरूपस्य नास्तीति प्रत्ययस्य

मेव इति न असम्भविलक्षणमिति अभिप्रेत्याह अनिर्वचनीयेति। इममेवार्थं स्पष्टयति न हीति। कदाचित् असत्त्वमात्रं न अनिर्वचनीयत्वमतिव्याप्तेरित्यर्थः। यद्यपि अस्मन्मते घटादिरपि अनिर्वचनीय एव तथापि परस्य तत्र विप्रतिपत्तेरतिव्याप्तिः स्यादेव इति द्योतयितुं पराभिमतेत्यादिविशेषणम्।

घटादिव्यावृत्तये विशेषणं शङ्कित्वा दूषयति न च इति। आविद्यकत्वे सति कादाचित्कमनिर्वचनीयमिति लक्षणं न युक्तमित्यर्थः। शुक्तिरजतस्य आविद्यकत्वं किं कारणमात्रप्रभवत्वम्? उत ज्ञानबाध्यत्वं? नाद्यः, इत्याह कारणस्येति। अविद्याशब्देन कारणमुच्यते तथाच तज्जन्यं कादाचित्कमनिर्वचनीयमित्युक्तं भवति तथाच अतिव्याप्तिरित्यर्थः। द्वितीयमनूद्य दूषयति न चेति। तथाच घटादौ पूर्वपक्षे न अतिव्याप्तिरितिभावः। तस्याऽपि इति। तस्य अपि विशेषस्य असम्भवः कथं ज्ञानबाध्यत्वं नाम ज्ञाननिवर्त्त्यत्वं नच तत्सतः सम्भवति। आत्मनि अतिप्रसङ्गात् अतएव आह सत इति। ततो ज्ञानबाध्यत्वान्यथानुपपत्त्या वर्त्तमानातीतकालयोरपि अध्यस्तं स्वरूपतोऽपि असदेव इति अधिष्ठाने त्रैकालिकाभावप्रतियोगित्वमनिर्वचनीयत्वमिति अनवद्यं लक्षणमितिभावः। ननु बाधात्मानिश्चयः किमात्मैव? उत भिन्न आद्ये संसारादर्शनं? द्वितीये बाध्यो वा? आत्मवत्सन् वा बाध्यश्चेत् तर्हि स्वस्य बाधः

बाधान्तरं मृग्यम् अन्यथा अद्वैतक्षतिरिति वाच्यम् ब्रह्मातिरिक्तसर्वबाधरूपस्य तस्य स्वान्तर्भाविनैव तथात्वात् नच ब्रह्मातिरिक्तमस्ति

स्वयमेव बाधान्तरं वा ? प्रथमे आत्माश्रयः द्वितीये अन्योन्याश्रयादिः संचेत् तदाद्वैतक्षतिरिति परमतं दूषयति न चेति। हेतुमाह ब्रह्मेति। ब्रह्मणि अध्यस्यमानं सर्वं कालत्रये नास्तीति निश्चयस्य अस्तिरूपद्वये एकं बाधात्मकं अपरमध्यस्यमानत्वं तत्र अध्यस्यमानत्वेन रूपेण स्वविषयत्वं बाधत्वेन विषयित्वमिति न आत्माश्रय इत्यर्थः। तथाच न अद्वैतक्षतिरिति भावः। ननु बाध्यमानः प्रपञ्चो ब्रह्मातिरिक्तोऽस्ति न वा ? अस्ति चेत् ? आत्मवत् अनिवर्त्त्यः स्यात् न अस्ति चेत् ? तर्हि तदभावोद्देशे न ज्ञानादौ प्रवृत्तिर्न स्यात् तदभावस्य स्वतः सिद्धत्वात् नच सदसत्विलक्षणं प्रकारान्तरमस्ति परस्परविरोधेन प्रकारान्तरस्थितिरिति न्यायादिति तत्राह न चेति। अनिर्वचनीयत्वेन इति। न तावत् इदं जगत् सत् न इति न इति इत्यादि श्रुत्या तावत् बाधात् न अपि असत् अपरोक्षत्वात् तस्मात् ख्यातिबाधान्यथानुपपत्त्या ब्रह्मातिरिक्तं सदसद्विलक्षणं अनिर्वचनीयं न्यायस्य च प्रमाणविरोधेन आभासत्वात् एतच्च सतोऽपि जनिर्नैवेत्यादौ असकृच्चोद्यं परिहृतमित्यर्थः। ननु अविविक्तव्यवहारप्रसञ्जकं स्मरणादगृहीतभेदं ग्रहणमेव भ्रमत्वेन व्यवह्रियते नच तद्विषयोऽनिर्वचनीयः पुरोवर्त्तिनः सत्यत्वात् तथा न इदं रजतमिति बाधप्रत्ययोऽपि व्यवहारमात्रं बाधते न भ्रमविषयस्य कालत्रयाभावं बोधयति तत्कथमनिर्वचनीयवाद इति अख्यातिवादिनो मन्यन्ते।

नास्ति वा इति विकल्पावकाशः अनिर्वचनीयत्वेन परिहृतत्वात्। अख्यात्यात्मख्यात्यसत्ख्यातिवादिषु भ्रमबाधव्यवस्थानुपपत्तेः अन्यथा-

आत्मख्यातिवादिनोऽपि न रजतमध्यस्तमिति आहुः किन्तु सम्प्रयोगमन्तरेण अपरोक्षत्वात् संविदात्मकत्वेन आन्तरस्य रजतस्य बहिष्ट्वेन प्रतीतिर्भ्रमः न इदं रजतमिति बाधोऽपि न रजतासत्त्वमावेदयति।

किन्तु तत्र इदन्त्वापरपर्य्यायं बहिष्ट्वं प्रतिषेधति। धर्मिधर्मोभयनिषेधापेक्षया धर्ममात्रनिषेधे लाघवादित्येवं सङ्गिरन्ते असत्ख्यातिवादिनोऽपि न अनिर्वचनीयं रजतमित्याहुः किन्तु निस्तत्त्वमसदेवं रजतं ज्ञानादेव असत्प्रकाशनसामर्थ्यात् रजतं भासते। अतएव बाधोऽपि रजतासत्त्वमेव बोधयति न इदं रजतमिति ततो ब्रह्मव्यतिरिक्तं जगत् अनिर्वचनीयमिति एतदेव अनिर्वचनीयमित्याशङ्क्याह अख्यात्यात्मेति। अख्यातौ तावत् ग्रहणमेव स्मरणादगृहीतभेदं बाध्याभेदव्यवहारप्रसञ्जकत्वात् भ्रम इति व्यवस्थापितम्। तदसत् ग्रहणस्मरणे भासेते न वा? न चेत् तर्हि नस्तः त्वन्मते ज्ञानस्य स्वप्रकाशत्वादभासने स्वरूपाभावनियमात्। भासेते चेत्? कथं तर्हि तयोर्भेदाग्रहो भेदस्य स्वरूपत्वात् अतएव न अभेदव्यवहारप्रसञ्जकत्वं ततः कथं भ्रमव्यवस्थापनं तथा बाधव्यवस्थापनमपि अनुपपन्नं यत्र त्वन्मतेषणस्य व्यवहार एव न उदेति तत्र न इदमिति ज्ञानस्य बाधकत्वं न स्यात् तस्मात् अख्यातौ भ्रमादिव्यवस्थापनानुपपत्तिरिति। आत्मख्यातावपि किं ज्ञानाकारता वाह्ये अध्यस्यते ज्ञानात्मनि रजते वा बहिष्ट्वं? नाद्यः, विज्ञानवादिमते वाह्यस्य अलीकत्वादसत्त्वेन अधिष्ठानत्वा-

ख्यातिवादिनैव दर्शितत्वात् न इह यत्यते ग्रन्थगौरवभयात् अनात्मविचारत्वाच्च।

नुपपत्तेः तथात्वे वा इदं रजतमसदिति प्रतीतिः स्यात्। ननु सदित्युल्लेखाभावादसदेवेति चेत्? न, तथात्वे रजतार्थिनः प्रवृत्तिर्न स्यात् अथ रजते वहिष्ट्वं समारोप्यते तर्हि तस्यापि असत्त्वात् तद्विषयज्ञानस्य अपरोक्षता न स्यात् असत्ख्यात्यापत्तेश्च रजतस्य ज्ञानाकारत्वे प्रमाणाभावाच्च। नच न इदं रजतमिति बाधप्रत्यय एव लाघवानुगृहीतो रजतस्य वाह्यत्वनिषेधेन अर्थादान्तरत्वमावेदयति इति साम्प्रतम्। इदन्त्वं हि सन्निहितत्वं तच्चेन्निषिद्धं तर्हि असन्निहितमेव रजतं स्यात् तस्य प्रतिपन्नात्मकसन्निहितत्वं कुतस्त्यं नच सम्प्रयोगमन्तरेण अपरोक्षत्वात् तस्य ज्ञानात्मकत्वं दोषवशाद्देशान्तरवर्त्तिन एव रजतस्य इन्द्रियसन्निकर्षोपपत्तेः सम्प्रयोगमन्तरेणेति विशेषणासिद्धेः यत्तु न इदं रजतमिति बाधो वाह्यमिदन्त्वं निषेधति न रजतमिति तन्न बाधो नोभयमपि निषेधति किन्तु तयोस्तादात्म्यं तस्मिंश्च निषिद्धे इदन्त्वं पुरोवर्त्तिनि स्थास्यति रजतं रजतत्वं वा? देशान्तरे रजते वा इति तन्मते भ्रमबाधव्यवस्थापनमनुदितमेव यत्तु असत्ख्यातौ असदेवासत् प्रकाशनसमर्थं ज्ञानं भासयति इति तदपि असत् असतः अपरोक्षप्रतीत्यदर्शनात् सामर्थ्यस्य च कुत्र सामर्थ्यमिति विषयसापेक्षत्वेन विषयस्य असतश्च कार्य्यज्ञाप्यविकल्पासहत्वात् असत्येव असत्ख्यातिः यदपि बाधो रजतासत्त्वमेव आवेदयतीति तदपि अन्यथाख्यातिवादिमते पूर्वमेव आत्मख्यातिनिराकरणप्रसङ्ग एव परिहृतं ततो न ख्यात्यन्तरं युक्तमित्यर्थः। ननु अन्यथाख्यातिवादिना दर्शितं चेत्?

तस्मात् बाधकप्रत्ययोत्तरमध्यस्तस्य त्रैकालिकासत्वनिश्चयो बाध इति सिद्धम्। तथाच सुरेश्वरः।

तत्त्वमस्यादिवाक्योत्थसम्यग्धीजन्ममात्रतः।
अविद्यासहकार्य्येण नासीदस्ति भविष्यति॥

अथ कथं विद्याया अविद्याबाधकत्वम् विरोधादिति चेत्? कस्तर्हि तयोर्विरोधः? किमेककालानवस्थितत्वम्? उत एकदेशानवस्थित्वम्? आहोस्वित् बध्यघातकत्वम्? अथवा

किं तव इति तत्राह न इह इति। अन्यत एव ख्यात्यन्तरनिराकरणस्य सिद्धत्वात् तन्निराकरणं पुनरयुक्तं साक्षादात्मविचाराभावादित्यर्थः।

सर्वदोषापेतं बाधनिरूपणम् उपसंहरति तस्मादिति। उक्तमर्थं सुरेश्वराचार्य्यवचनेन दृढ़यति तथाच इति।

अत्र नासीदिति त्रैकालासत्वमेव जगतः अधिष्ठानसाक्षात्कारानन्तरं प्रतीयते इति तत्प्रतीतिरेव बाधो न अविद्यानिवृत्तिरित्यर्थः।

इममेवार्थं दृढ़यितुं शङ्कामुत्थापयति अथ कथमिति। विद्याधिष्ठानसाक्षात्कारः प्रश्नं मत्वा उत्तरं शङ्कते विरोधेति। तर्हि विरोधमेव निर्ब्रूहि इत्याह कस्तर्हि इति। किं शब्दसूचितान् विकल्पान् आह किमेकेत्यादिना। ननु पूर्वभा-

भावाभावात्मकत्वम्? नाद्यः पूर्वभाविन्या अविद्यया सह विद्याया एककालावस्थितत्वात् विद्योत्तरमविद्यानिवृत्तेः अन्यथा विद्यावैयर्थ्यात्। न द्वितीयः व्यधिकरणयोर्विद्याविद्ययोर्विरोधाभावेन एकाधिकरणत्वस्य अवश्यवक्तव्यत्वात्। तृतीये बध्यस्य घातो वाच्यः।

यत्कर्तृत्वं घातकत्वं ध्वंसो घातस्तत्कर्तृत्वं घातकत्वमिति चेत्? स तर्हि बध्याद्भिन्नः स्वतन्त्रः पदार्थः कश्चित्? उत तद्धर्मः तदात्मैव

त्वमेककालावस्थाने प्रयोजकं घटप्रागभावस्य पूर्वभाविनोऽपि घटेन सह अनवस्थानादिति तत्राह विद्योत्तरमिति। घटस्य प्रागभावनिवृत्तिरूपत्वात् नैककालत्वं तयोर्युक्तमित्यर्थः। अविद्यानिवृत्तेर्विद्याजन्यत्वेन तदुत्तरकालीनत्वात् अविद्याविद्ययोरेककालत्वमनपहरणीयमेव इत्यर्थः।

ननु किमिति विद्या अविद्यां निवर्त्तयिष्यति प्रमेयावभासकत्वेन तस्या अन्यथासिद्धेरिति तत्राह अन्यथा इति। प्रमेयस्य स्वप्रकाशत्वाद्विद्याविद्यां चेत् न निवर्त्तयेत् व्यर्था स्यादित्यर्थः। वक्तव्यत्वाद्विरोधसिद्ध्यर्थमित्यर्थः।

घातस्य वक्तव्यत्वे प्रकृतोपयोगमाह यत्कर्तृत्वमिति। घातस्वरूपं निरूपयति ध्वंस इति। स्वतन्त्र इति न तावत् ध्वंसो बध्यजन्यो भिन्नत्वात्। न च भिन्नेऽपि घटे निमित्तदण्डादिजनकं यथा एवं

वा ? आद्ये बध्यस्य ध्वंसो न स्याद्विमवद्विन्ध्ययोरिव परस्परासम्बन्धात्। द्वितीये धर्म एव धर्मिणो दीर्घायुष्ट्वमानयति अन्यथा निराश्रयो धर्म एव न स्यात्।

तृतीये तु विद्याऽविद्योत्पादिकैवेति कुतो विरोधः। न चतुर्थः विद्याऽविद्ययोः उभयोरपि भावरूपत्वात् अविद्यायाः प्रागभावरूपत्वस्य निरस्तत्वात् अन्यथा एककालावस्थानं न स्यात्। तस्मात् विद्याऽविद्ययोर्विरोधस्य निर्वक्तुमशक्यत्वात् कथं विद्याया अविद्याबाधकत्वं विपरीतं वा किं न स्यादिति ? अत्रोच्यते।

भिन्नमपि ध्वंसं प्रतियोगितया वध्यं जनयेदिति वाच्यं कल्पितप्रतियोगिनो ध्वंसस्य कल्पितत्वेन मुक्तेरपि कल्पितत्वप्रसङ्गात् अकल्पितत्वे द्वैतापत्तेश्च नापि तस्य अविद्याज्ञानाधीनज्ञानत्वम् अविद्यानिवृत्त्यवस्थायां प्रमातृत्वाद्यभावेन तद्विषयकजन्यज्ञानासिद्धेः ततः सर्वात्मना अविद्ययाऽसम्बन्धात् ध्वंसः स्वतन्त्र एव इत्यर्थः। भिन्नोऽपि न स्वतन्त्रस्तद्धर्मत्वादित्यभिप्रेत्य पक्षान्तरमाह उत तद्धर्म इति। पूर्वोक्तं स्वतन्त्रशब्दार्थमाश्रित्य आद्यं दूषयति आद्ये इत्यादिना।

निरस्तत्वादिति भावरूपजगदुपादानस्य इत्यत्रेति शेषः। किञ्च विद्याविद्ययोर्विरोधाविशेषात् विद्यैव बाध्या किं न

उपमर्द्यस्वभावत्वमविद्याया विरोधिता।
तत्कर्त्तृत्वं तु विद्यायाः प्रकाशतमसोरिव ॥४१॥

यद्यपि विरोधान्तरमिह निर्वक्तुमशक्यं तथापि उपमर्द्योपमर्दकभावलक्षणोऽयं विरोधः शक्यत एव निर्वक्तुम् अविद्योपमर्दकत्वस्य विद्यास्वभावस्य अन्वयव्यतिरेकाभ्यां लोकप्रसिद्धत्वात्।

स्यात् नियमे प्रमाणाभावादित्याह विपरीतं वेति। पूर्वपक्षानुवादेन सिद्धान्तमुपक्रमते अत्रोच्यत इति।

को विरोध इति प्रश्ने विरोधं निरूपयितुं विरोधकार्य्यमाह उपमर्द्येति। विपरीतं वेति दोषं परिहर्त्तुं प्रमाणमाह स्वभावेति। विद्यायास्तत्कर्त्तृत्वं विरोधिता इति पूर्वेण अन्वयः। स्वभावे दृष्टान्तमाह प्रकाशतमसोरिवेति।

श्लोकं व्याचष्टे यद्यपि इत्यादिना। पूर्वोक्तविरोधदोषाणामपरिहार्य्यत्वमाह विरोधान्तरमिति। तथापीति उपमर्द्योपमर्दकयोर्भावस्तेन लक्ष्यते अनुमीयते यो विरोधः स उपमर्द्योपमर्दकभावलक्षणः कार्य्येण कारणस्य अनुमानादित्यर्थः। अविद्योपमर्द्यो वेति अत्र स्वभावपदसूचितं हेतुं विवृणोति अविद्योपमर्दकत्वस्य इति। सत्यां विद्यायां न अविद्या यथेयं शुक्तिरिति विद्यायां शुक्त्यविद्याया उपमर्दो नैव अत्र रजतमासीदिति शुक्तिविद्याया अभावे सति शुक्तेरावरणम् अन्यथा रजतात्मना च प्रतिभासो दृश्यते इति अन्वयव्यतिरेकाभ्याम् अविद्यैव उपमर्द्यस्वभावेति लोकप्रसिद्ध्या कल्प्यते इत्यर्थः।

नच विरोधिताऽविशेषे विद्योपमर्दकत्वमेव अविद्यायाः किं न स्यात् इति वाच्यम्। तथा सति विद्योत्पत्तिरेव न स्यात्। उपमर्दिकाया अविद्यायाः पूर्वमेव स्थितत्वात् प्रतिनियतस्वभावस्य पर्य्यनुयोक्तुमशक्यत्वाच्च यथा प्रकाशतमसोः। नच तत्र वैपरीत्यं शङ्कितुं शक्यते दृष्टविरोधात्।

नच बध्यघातकपक्षोक्तदोषप्रसक्तिः उपम-

अन्वयव्यतिरेकसिद्धस्वभावमपि उपमर्द्योपमर्दकत्वं विपक्षबाधकेन अपि दृढ़यितुं पूर्वपक्षं वैपरीत्यप्रसक्तिरूपमनूद्य पराचष्टे नच इत्यादिना। विमता अविद्योपमर्द्या अविद्यात्वात् शुक्त्यविद्यावदित्यनुमानं विपक्षबाधकसहितमर्थात् सूचितं सम्प्रति तत्रैव हेत्वन्तरमाह प्रतिनियतेति। ननु उपमर्दोऽपि अविद्यातो भिन्नः? उत स्वतन्त्रः? इत्यादिदोषप्रसक्तिरत्रापि पक्षे भविष्यति इत्याशङ्काह न च इति। ब्रह्मणि कालत्रयेऽपि सविलासा विद्या नास्ति इति निश्चयस्य उपमर्दत्वात् तस्य च विषयाबाधेन प्रमारूपत्वात्।

ननु अविद्या चेत् न निवर्त्तते तर्हि ब्रह्मात्मैक्यसाक्षात्कारो विफलः स्यात् तत्राह विद्योत्तरमिति। ब्रह्मसाक्षात्कारस्य बाधात्मकोपमर्द एव फलम् अधिष्ठानभेदेन अविद्यादेरसत्वेन तन्निवृत्तेः कर्त्तुमशक्यत्वात् कस्तर्हि बाधस्य ज्ञानात्मनो विषयः निर्विषयज्ञानायोगादिति चेत् न अविद्यादेस्त्रैकालिकनिषेध एव। ननु सोऽपि किमभावो सन् वा? आद्ये तत्प्रति-

देस्य कालत्रयेऽपि नास्तीति प्रमितिरूपस्य बाधापरपर्य्यायस्य विद्योत्तरं जायमानत्वात्।

ननु अविद्योपमर्दकस्वभावत्वं चेत् विद्याया-स्तर्हि विदुषो विद्योत्पत्त्यनन्तरमविद्यायाः सका-र्य्यायाः समूलकाषं कषितत्वात् तदैव विदेह-

योगिनो ज्ञानादेः सत्त्वापत्तिः संश्चेत् स तर्हि आत्मनो भिन्नः ? उत आत्मैव ? आद्ये द्वैतापत्तिः अन्त्ये अधिष्ठानसाक्षात्कार एव स इति न बाधविद्ययोर्जन्यजनकतेति मैवं साक्षात्कारोपाधि-कात्मस्वरूपस्यैव त्रैकालिकाभावत्वात् शुद्धेन च उपाधिना सविलासा विद्या कालत्रयेऽपि आत्मनि नास्ति इति आत्म-स्वरूपविषयं ज्ञानं जन्यत इति को दोषः। न च अयं पक्षः कैरपि सम्प्रदायविद्भिर्न स्वीकृत इति वाच्यम् ? वार्त्तिककृतां सम्मतेर्दर्शितत्वात् विवरणचार्य्यैरपि। ननु प्रतिपन्नोपाधौ रज-तादेरभावं बाधो बोधयति प्रतिपन्नोपाधौ अभावप्रतियोगित्वमेव मिथ्यात्वं नाम इति वदद्भिः अयमपि पक्षो दर्शित एव कथ-मन्यथा ते बाधो बोधयतीति वदेयुः कथं वा तत्त्वदीपनाचार्या अभावपदं त्रैकालिकाभावपरतया व्याकुर्य्युः तस्मात् तैरपि पक्षोऽयं स्वीकृत एवेति न असाम्प्रदायिकमेतदिति।

ननु विद्योपमर्दकत्वं विद्याया न युक्तं जीवन्मुक्त्यभाव-प्रसङ्गादिति शङ्कते ननु इत्यादिना। समूलमिति। ननु अवि-द्याया अनादित्वात् मूलानुपपत्तिः। नच अधिष्ठानमेव मूलं तस्य असत्यैकरूपस्य कल्पितत्वानुपपत्तेः तत्त्वे वाशून्यात्मतापत्तिरिति चेत् ? मैवम् अहमित्यध्यासोऽविद्या तस्याः कार्य्यं कर्त्तृत्वादि

कैवल्यप्राप्तौ देहपातस्तात्कालिकः स्यात् तथा च उच्छिन्नः सम्प्रदायः स्यात्।

नच प्रारब्धसामर्थ्याद्देहपातो नास्तीति वाच्यं प्रारब्धस्यापि अविद्याकार्य्यतया तदभावे स्थातुमशक्यत्वात् तन्त्वभावे पटस्य इव। नच प्रारब्धकर्मफलभोगनिर्वाहकतया कियत्कालमविद्याऽपि अनुवर्त्तते इति वाच्यं विद्याया अविद्योपमर्दकत्वस्वभावहानिप्रसङ्गात्। न च उत्तरकाल एव तथा स्वभावः एकस्य स्वभाव-

तस्या मूलं मूलाज्ञानं यथाहुः। तमेतमेवं लक्षणमध्यासं पण्डिता अविद्येति मन्यन्त इति। मास्तु तर्हि जीवन्मुक्तिस्तत्राह तथाच इति। श्रोत्रियं ब्रह्मनिष्ठमिति विशेषणेन उत्पन्नसाक्षात्कारस्यैव आचार्य्यत्वात् तस्य च सद्य एव मुक्तत्वात् क उपदिशेत्तदभावे कथं ब्रह्मविद्यासम्प्रदायः प्रवर्त्ततामिति वेदान्तानामबोधकत्वलक्षणमप्रामाण्यं प्रसज्येत इत्यर्थः। ननु तत्वज्ञानोत्तरमेव देहपात इति अयुक्तं देहकारणस्य प्रारब्धकर्मशेषस्य सत्त्वात्। न च तदपि तत्त्वज्ञाननिवर्त्त्यम् अविरोधादुपजीव्यत्वात् च इति तत्राह नच इति। यद्यपि प्रारब्धकर्माविरोधितत्त्वज्ञानं तथापि प्रारब्धं कर्म न तावन्निरुपादानभावकार्य्यस्य तत्त्वादृष्टेः सोपादानम् चेत्? तत् किम् आत्मोपादानम् अविद्योपादानं वा? नाद्यः, आत्मनःअकारणत्वेन तदुपादानत्वानुपपत्तेः। द्वितीयः चेत्? तर्हि सा विद्यानिवृत्ता वा तिष्ठति वा? आद्यम्

द्वयानभ्युपगमात् नच आवरणशक्तिप्रधानमज्ञानं निवृत्तमेव विक्षेपशक्तिप्रधानं तु अनुवर्त्तते प्रारब्धनिर्वाहाय इति वाच्यम्। अज्ञानद्वयाभावात्। नच एकमेव शक्तिद्वयविशिष्टम्। एकस्य युगपत् स्थितिनिवृत्त्योर्विरुद्धत्वात्। नच शक्तिनिवृत्तिमात्रमेव विवक्षितं शक्तिशक्तिमतोरभेदात् भेदे वा अज्ञानं न निवर्त्तेत।

नच प्रारब्धनिवृत्त्या तन्निवृत्तिः प्रारब्धनिवृत्तेः अप्रमाणत्वात्। नच तदनन्तरं ज्ञानमेव अप्रतिबद्धं तन्निवर्त्तकमिति वाच्यं प्रारब्धनाशे देहपातानन्तरं ज्ञानस्यैव अभावात्

अनूद्य दूषयति प्रारब्धस्य अपि इति। द्वितीयम् अनूद्य दूषयति न च इत्यादिना। उत्तरकाल एव इति प्रारब्धकर्मशेषनिवृत्त्युत्तरकाल इत्यर्थः। अज्ञानं न निवर्त्तेतेति आरब्धकर्मशेषभोगात् प्रागावरणशक्तिं ज्ञानमपनयति तदुत्तरं विक्षेपशक्तिं निवर्त्तयति। तथाच अज्ञानस्य धर्मिणो निवर्त्तकाभावात् तन्न निवर्त्तेत इत्यर्थः।

ज्ञानव्यतिरिक्तमज्ञानस्य निवर्त्तकम् आशङ्क्य पराचष्टे नच इति। तस्य अनिवृत्तेरित्यर्थः। ननु निवर्त्तकाभावो सिद्धः ज्ञानस्यैव अविद्यानिवर्त्तकत्वात् तर्हि जीवन्मुक्तिविरोध इति चेत्? न, प्रारब्धकर्मशेषेण प्रतिबन्धात् अप्रतिबद्धस्यैव कारणस्य

पूर्वज्ञानस्य च प्रारब्धेन प्रतिबद्धत्वात्। नच अविद्यासंस्कारो लेशाविद्याशब्दाभिधेयो अनुवर्त्तत इति वाच्यं तस्यापि अविद्याकार्य्यत्वात्। अविद्यामात्रत्वे च संस्कारशब्दप्रयोग-

कार्य्यजनकत्वात् कर्मशेषनिवृत्तौ प्रतिबन्धाभावादप्रतिबद्धं तत्त्वज्ञानमज्ञानमुपमर्दिष्यतीत्याशङ्क्य पराचष्टे नच तदनन्तरमिति। न च वाच्यमिति अत्र हेतुमाह प्रारब्धेति। ननु प्रारब्धकर्मनाशे सति पश्चात् देहो नश्यति तन्नाशस्य देहनाशहेतुत्वात् ततश्च प्रारब्धनाशोत्पत्त्यवस्थायां प्रतिबन्धासम्भवात् देहादेश्च विनश्यदवस्थस्य सत्त्वात् तदाज्ञानं जायतामित्याशङ्क्य नाशं विशिनष्टि न च देहपातानन्तरमिति। प्रारब्धकर्मशेषो हि देह एव न तत्कारणीभूतः कश्चिदन्योऽस्ति शेषशब्दवाच्यः कर्मणो देहादिफलरूपेण परिणतस्य रूपान्तराभावात् तथाच शेषनाश एव देहपात इति तदनन्तरं कारणाभावात् ज्ञानमेव नास्ति किम् अज्ञानं निवर्त्तयेदित्यर्थः। ननु यद्यपि मूलाज्ञानं निवृत्तं तथापि तत्संस्कारोऽनुवर्त्तते। न च ज्ञानक्रिययोरेव संस्कारः नाशमात्रप्रयुक्तत्वात् संस्कारस्य ततश्च अपरोक्षात्मनः संस्कारलक्षणदोषवशात् देहाद्यनात्माकारावभास इति स्यादेव जीवन्मुक्तिरिति पक्षं दूषयति नच इति। ज्ञानक्रिययोरेव संस्कार इति नियममाश्रित्य संस्कारशब्दस्य अर्थान्तरमाह लेशेति। लेशाविद्या अविद्यावस्थाविशेष इत्यर्थः। तद्दूषणे हेतुमाह तस्यापीति। अयमर्थः संस्कारो न तावदनादिः संस्कारत्वाभावप्रसङ्गात् सादिश्चेत्? तदुपादानम् आत्मा अविद्या वा? नाद्यः, अनिर्विकारत्वात् अविद्या चेत्? तर्हि तस्या नाशे

वैयर्थ्यात्। जीवन्मुक्तिप्रतिपादकश्रुतिस्मृतिप्रामाण्याद्विदुषो देहस्थितिः कल्प्यत इति चेत् न, शास्त्रस्य जीवन्मुक्तिप्रतिपादने प्रयोजनाभावात्।

मुमुक्षूणां श्रवणादौ प्रवृत्तिः प्रयोजनमिति

सोऽपि कथं स्यात् उपादानाभावात् भावकार्य्यस्य सोपादानत्वनियमादिति।

ननु अविद्यैव लेशशब्दवाच्या संस्कारशब्दार्थ इति तत्राह अविद्येति। अवस्थायाश्च अविद्यातो भेदाभेदाभ्यामनिरूपणात् शक्तिपक्षोक्तदोषप्रसङ्गाच्च अयुक्तत्वमिति भावः। ननु तस्य "तावदेव चिरं स चक्षुरचक्षुरिव "प्रजहाति यदा कामान् सर्वान् पार्थ मनोगतान्" इत्यादिशास्त्रशतप्रामाण्यात् ज्ञानिनो विदेहकैवल्यप्राप्तौ विलम्बप्रतीतेः शरीरस्थितिः कल्प्यते इति जीवन्मुक्तिवादी शङ्कते। जीवन्मुक्तीति देहस्थितिश्च विना कर्मानुपपन्ना कर्मस्थितिमपि कल्पयति इति भावः। उभे इहैव एष ते तरति "भिद्यते हृदयग्रन्थिः ज्ञानाग्निः सर्वकर्माणीति" श्रुतिस्मृतिविरोधात् कल्पनमनुपपन्नमिति परिहरति नेति। ननु तर्हि विरोध इति चेत्? न, जीवन्मुक्तिशास्त्रस्य अध्ययनविधिविरोधेन स्वार्थापरत्वादित्याह शास्त्रस्येति। यद्यपि जीवन्मुक्तिप्रतिपादनं न साक्षात् प्रयोजनं तथापि सुखात्मसाक्षात्कारहेतुविचारादौ प्रवृत्तिजनकतया परम्परया प्रयोजनमिति युज्यत एव स्वार्थपरतेति जीवन्मुक्तिवादी शङ्कते।

मुमुक्षूणामिति तर्हि जीवन्मुक्तिशास्त्रं किं विचारादौ साक्षादेव मुमुक्षून् प्रवर्त्तयति? उत तद्विधायकवाक्यशेषतया? नाद्यः,

चेत्? अस्तु तर्हि श्रवणादिविधेरर्थवादस्तत् शास्त्रं तथाच लौकिकवैदिकप्रमाणविरोधात्तेन कथं विदुषो देहस्थितिः कल्प्यते। नच मुक्तेषु-दृष्टान्तेन प्रारब्धस्थितिः साधितेति वाच्यं दृष्टान्ते वैषम्यात् तत्र कर्मोपादानस्य इषोःअनाशात्। नच जीवन्मुक्तौ सार्वलौकिकी प्रसिद्धिरव्याहतेति वाच्यं प्रमाणविरहेण प्रसिद्धेरन्धपरम्परारूपत्वात्। नच अप्रामाणिकस्य शास्त्रकारैरुपपादनमनर्थकमिति वाच्यं शिष्यस्य

विचारविधायकपदाभावात्। द्वितीयमङ्गीकरोति अस्तु तर्हि इति। तथाच न स्वार्थे प्रामाण्यमित्यर्थः। ननु प्रमाणविरोधे तत् संवादे वा न अर्थवादानां प्रामाण्यम्। नच अत्र तदस्ति ततो देवताधिकरणन्यायेन स्वार्थेऽपि प्रामाण्यं किं न स्यात् इत्याशङ्क्याह तथेति। लौकिकं प्रामाण्यमन्वयव्यतिरेकौ सति शुक्तिसाक्षात्कारे सविलासाविद्योपमर्दः तदभावे न इत्येवंरूपौ वैदिकं प्रमाणं भिद्यते हृदयग्रन्थिरित्यादितो विरोधात् न देवताधिकरणन्यायाऽवतार इति। ननु यथा मुक्तेषु कर्मणः प्रारब्धवेगस्य वेगक्षयादेव क्षयो न अन्यथा एवं प्रारब्धकर्मणो भोगलक्षणकार्य्यक्षयादेव क्षयो नान्यथेति। साधितैव शास्त्रकारैः प्रारब्धस्थितिरिति शङ्कामुन्मूलयति न चेति परिहारः स्पष्टार्थः। ननु अनारब्धकार्य्ये एव तु पूर्वे तदवधेरिति सूत्रकारैः न तु आरब्धकार्य्यं सामिमुक्तफले इत्यादिग्रन्थेन भाष्यकारैः न तु अविपाकं सम्पादितजात्यायुर्वित्तेत्यादिना

अविद्वत्तया गुरौ अविश्वासपरिहारप्रयोजनतया तस्य अर्थवत्वात्।

तस्माद्विद्याया अविद्योपमर्दकत्वस्य स्वाभाव्यात् विदुषः सद्योमुक्तावुपदेष्टुरभावात् कुतो विद्योत्पत्तिः नच आचार्य्यनिरपेक्षैव विद्येति साम्प्रतं आचार्य्यवान् पुरुषो वेद नैषा तर्केण मतिरापनेया प्राप्य वरान्निबोधत आचार्य्यस्ते गतिं वक्तेति अनन्यप्रोक्ते गतिरत्र नास्ति प्रोक्तान्येनैव सुज्ञानाय प्रेष्ठ इत्यादिश्रुतिभ्यः। नैष दोषः।

वाचस्पतिमिश्रैः ननु कर्मणामपि निवृत्तत्वात् कथं द्वैतदर्शनं नैष दोष इत्यादिना विवरणाचार्य्यैः आरब्धफलशेषैकहेतुत्वात् देहसंस्थितेः रागादिप्रत्ययोद्भूतिरिषुचक्रादिवेगवदित्यादिभिर्वार्त्तिककारैर्जीवन्मुक्त्युपपादनमप्रामाणिकत्वात् आनर्थक्यापत्तेरयुक्तमिति शङ्कां पराकरोति नच अप्रामाणिकस्येति।

एवं सर्वदोषापेतत्वेन उपपादितां सद्योमुक्तिमुपसंहरन् पूर्वपक्षफलमाह तस्मात् इत्यादिना। ननु विद्योत्पत्तौ किमाचार्य्यः करिष्यति स्वयमेव तर्कादिना विद्यासम्पादनसम्भवादित्याशङ्क्याह न चेति इत्यादिना। आपनेया प्राप्तव्या इत्यर्थः। वरान् उत्कृष्टानाचार्य्यान् इत्यर्थः। स्पष्टार्थाः श्रुतयः सद्यो मुक्तिरेव साधुः पक्षः तर्हि विद्यासम्प्रदायाभावात् विद्यानुत्पत्तिं प्राप्तां परिहरति नैष इति।

कल्पितोऽप्युपदेष्टा स्यात् यथाशास्त्रं समादिशेत्।
नचाविनिगमो दोषोऽविद्यावत्त्वेन निर्णयात्॥४२॥

यद्यपि विदुषस्तदानीमेव मुक्तत्वात् पारमार्थिकः कश्चित् उपदेष्टा न अस्ति तथापि कल्पितेन गुरुणा विद्योत्पत्तिसम्भवात् न अनुपपत्तिः काचित्। नच कल्पितस्य कथं सत्यज्ञानजनकत्वमिति वाच्यं शास्त्रवत् उपपत्तेः प्रतिबिम्बवच्च। नच गुरुशिष्ययोर्मध्ये कतरः कल्पक इति अविनिगमो दोष इति वाच्यम्।

स्वाज्ञानकल्पितस्य गुरोरुपदेष्टुः सत्त्वात्। ननु कल्पितस्य मिथ्याभूतस्य कथमुपदेष्टृत्वं तत्त्वे च अर्थक्रियाकारित्वात् मिथ्यात्वानुपपत्तेरित्याशङ्क्य श्लोकेन प्रत्याह कल्पितोऽपि इति। उपदेष्टा समादिशेदित्यन्वयः। उपदेष्टा आचार्य्यः। ननु आचार्य्यो नास्तीत्युक्तं तत्राह कल्पितोऽपि इति। सत्यवदित्यपेरर्थः। ननु कल्पितत्वे उपदेष्टृत्वं न युक्तं निस्तत्त्वादिति तत्राह यथा शास्त्रमिति। निस्तत्त्वं यदि तुच्छत्वं तत् न अनङ्गीकारात् यदि मिथ्यात्वं शास्त्रवत् वेदवत् यथा कल्पितो वेदः स्वार्थं बोधयति, एवम् आचार्य्योऽपि इत्यर्थः।

कल्पितत्वस्य तत्त्वसाक्षात्कारात् प्रागज्ञानात् तदुत्तरं च गुरोरनपेक्षणात् न दोष इति भावः। ननु एक एव जीव इतरे तदविद्याकल्पिता इति भवतो मतं तत्र किं शिष्याज्ञानेन गुरुः कल्पितो गुर्वज्ञानेन वा शिष्य इत्यविनिगमे शिष्यस्य श्रवणादौ प्रवृत्तिर्न भवेदिति न इत्याह नच इत्यादिना।

अविदुषः कल्पकत्वात् गुरोश्च विदुषः कल्पना-बीजाभावेन तत्त्वानुपपत्तेः। तस्मात् शास्त्राचार्य्यप्रसादासादिततत्त्वमस्यादिवाक्योत्थसाक्षात्कारेण मोक्षाविर्भावप्रतिबन्धकाज्ञानतत्कार्य्यतिरस्कारसमनन्तरं नित्यशुद्धबुद्धमुक्तस्वभावोऽद्वितीयानन्दोऽस्मीति मन्यते ततः कृतकृत्यो भवतीति।

श्लोकं व्याचष्टे यद्यपि इत्यादिना। व्याख्यानं स्पष्टम्। ननु शास्त्रं न कल्पितं तस्य अपौरुषेयत्वादिति मीमांसकास्तान् प्रत्युदाहरणान्तरमाह प्रतिबिम्बवच्चेति। विमतं बिम्बपूर्वकं प्रतिबिम्बत्वात् सम्मतवत् अत्र कल्पितमपि प्रतिबिम्बं बिम्बप्रतीति हेतुरिति यथा स्वीयते तथा प्रकृतेऽपि इत्यर्थः। नच तत्र प्रतिबिम्बज्ञानमेव हेतुर्न प्रतिबिम्ब इति वाच्यं ? ज्ञानमात्रस्य अहेतुत्वात् प्रतिबिम्बावच्छिन्नस्य तत्त्वे प्रतिबिम्बस्याऽपि तद्धेतुत्वाविघातादिति अनात्मनां कल्पितत्वाद्भेदस्य च निर्वक्तुमशक्यत्वात्। प्रत्यक्षादेस्तद्गोचरत्वानुपपत्तेश्च विद्यायाश्च अविद्योपमर्दस्वभावत्वात् विद्यायाश्च आचार्य्योपदिष्टतत्त्वमस्यादिवाक्येभ्यो अन्वयादिना शोधिततत्त्वम्पदार्थस्य अधिकारिणो लक्षणया उत्पत्तिसम्भवादुत्पन्नया च विद्यया संवित् सुखात्मकब्रह्मात्मैक्यावरकाज्ञानोपमर्दात् निरवद्य संवित् सुखात्माहमस्मीति स्वरूपेण अवस्थितः कृतकृत्योऽधिकारी सम्पद्यत इत्युपसंहरति तस्मादित्यादिना।

अतः सुष्ठूक्तमात्मानन्दं साक्षाद्विनिश्चित्येति। विज्ञानमानन्दं ब्रह्म को ह्येवान्यात् कः प्राण्यात् यदि एष आकाश आनन्दो न स्यात् सा एषा आनन्दस्य मीमांसा इत्यारभ्य यश्चायं पुरुषे यश्चासावादित्ये स एक इत्यन्तं भृगुर्वै वारुणिरित्यारभ्याऽनन्दो ब्रह्मेति व्यजानादित्यन्तं यो वै भूमा तत् सुखं न अल्पे सुखमस्तीत्यादिश्रुतिशतेभ्यः न वा अरे पत्युः कामाय पतिः प्रियो भवति आत्मनस्तु कामाय पतिः प्रियो भवति इत्यारभ्य न वा अरे सर्वस्य कामाय सर्वं प्रियं भवति आत्मनस्तु कामाय सर्वं प्रियं भवतीत्यन्तेन व्युत्पादनाच्च आत्मनः परमानन्दरूपत्वस्य।

उक्तेऽर्थे ग्रन्थाद्यवाक्यनिविष्टपदानि निवेशयति अत इति। पूर्वोक्तयुक्तीनां श्रुतिमूलतया आभासत्वं पराकर्त्तुं श्रुतीरुदाहरति विज्ञानमित्यादिना। अनेकशाखासु विद्यमानाः श्रुतीरुदाहरता आत्मनः आनन्दात्मकवाक्यानां स्वार्थतात्पर्य्ये लिङ्गमभ्यासो दर्शितः न केवलं श्रुतिप्रामाण्यमात्रेण आनन्दरूपत्वं किन्तु युक्त्यापि मैत्रेयीब्राह्मणे व्युत्पादितमानन्दमयत्वम् आत्मन इति हेत्वन्तरमाह न वा अरे इत्यादिना। श्रुत्यर्थोऽपि स्पष्ट एव। ननु व्युत्पादनाच्च आत्मनः

ननु आनन्दत्वादयो धर्मा आत्मनि सन्ति न वा ? आद्ये ते किं सत्या असत्या वा ? नाद्यः द्वैतापत्तेः न इतरः धर्मिणोऽनानन्दत्वापत्तेः नहि रजतत्वं यत्रारोप्यते तद्रजतम्। नच अनानन्द-

आनन्दरूपत्वस्येति वदता आत्मनि ब्रह्मणि आनन्दत्वं धर्मः प्रतीयते।

एवं सच्चिदादिशब्दान् ब्रह्मणि प्रयुञ्जता तेऽपि धर्मा अर्थादुक्तास्तत्र इमं विचारमारभते ननु इति। सन्ति वर्त्तन्ते न वेति आत्मनिष्ठा न भवन्ति इत्यर्थः। आनन्दत्वादयो धर्मा आत्मनि सन्तीति पक्षे द्वेधा विकल्पमाह आद्ये इति। असत्या आरोपिता इत्यर्थः। सत्यत्वं कालत्रयेऽपि अबाध्यत्वमिति पक्षं द्वैतापत्त्या दूषयति नाद्य इत्यादिना। कल्पितपक्षं दूषयति न इतर इति। किं स्वरूपेण आनन्दत्वं कल्पितम्? उत आत्मन्येव तत्कल्पितमिति? आद्यं दूषयति धर्मिण इति। किमपि आनन्दरूपं न भवेदित्यर्थः। द्वितीयमर्थान्तरन्यासेन दूषयति न हीति। ननु किमिदम् आपाद्यमानम् अनानन्दत्वं आनन्दभिन्नत्वं वा आनन्दत्वानधिकरणत्वं वा? आद्ये वेदान्तिनं प्रति आपाद्या प्रसिद्धिरित्याशङ्क्याह न च इति। आनन्दभिन्नत्वं न आपाद्यमित्यभिप्रेत्याह तथापीति। आनन्दरूपत्वासिद्धिमुपपादयितुं प्रसङ्गात् आत्मनि असत्व-पक्षमपि दूषयति न द्वितीय इति। व्यवहारोऽभिवन्दनरूपः आनन्दपदस्य आनन्दत्वविशिष्टे एव गृहीतसङ्गतित्वात्तद-नधिकरणे घटे वा आनन्दपदप्रयोगलक्षणव्यवहारादर्शनवत् आत्मन्यपि तथा स्यात् इत्यर्थः। ननु उपस्थितेषु आनन्देषु

स्वमानन्दभिन्नत्वं तदपि नास्तीति वाच्यं तथापि आनन्दरूपत्वासिद्धेः। न द्वितीयः आनन्दत्वानाश्रये आनन्दव्यवहारादर्शनात् नच सर्वव्यवहारातीतः अलौकिक एव अयमानन्दः।

वैषयिकेषु आनन्दपदशक्तिग्रहे आनन्त्यव्यभिचारदोषात् तत्परिहाराय आनन्दत्वक्रोड़ीकृतेषु प्रवर्त्ततां नाम आनन्दशब्दः। अयं तु ब्रह्मानन्दो न उपस्थितः सर्वप्रमाणातीतत्वेन अलौकिकत्वात् तत आनन्दत्वानधिकरणे ब्रह्मानन्दे लौकिकव्यवहाराभावप्रसञ्जनं न अनिष्टं यो वै भूमा तत्सुखमिति वैदिकसुखादिशब्दप्रयोगादानन्दव्यवहारः परीक्षकाणां युज्यते स्वर्गे सुखादिव्यवहारवदिति शङ्कां दूषयति न च इति। तर्हि ब्रह्मानन्दे वेदात् आनन्दव्यवहारं वदन् वादी प्रष्टव्यः किं पदार्थतया वेदोऽलौकिकानन्दं प्रतिपादयति ? उत वाक्यार्थतया ? नाद्यः इत्याह लौकिकेति। ननु प्रमाणातीतत्वानतीतत्वाभ्यां विशेष उक्तः तत्राह अन्यथेति। यथा नीलपीताद्यवान्तरभेदेऽपि पटव्यक्तीनां पटत्वेनोपस्थितानां पटशब्दवाच्यत्वमेव मवान्तरभेदेऽपि सर्वानन्दव्यक्तीनां सामान्यानन्दत्वेन क्रोड़ीकृतानां युज्यते एव आनन्दशब्दवाच्यत्वं न च लौकिकशब्द एव सङ्गतिगृहीता न वैदिकानन्दशब्द इति वाच्यं लौकिकवैदिकशब्दयोरभेदात् स्वराद्युपाधिकत्वात् भेदव्यपदेशस्य तथाच आनन्दत्वानाश्रये आत्मनि आनन्दव्यवहारो नैव युज्यते इत्यर्थः।

प्रमाणलक्षणे स्थितं प्रयोगचोदनाभावादर्थैकत्वमविभागात् आकृत्यधिकरणोपन्नाततया लोकवेदयोः पदपदार्थान्यत्वानन्यत्वे

लौकिकवैदिकपदार्थयोरेकत्वात् अन्यथा लोकवेदाधिकरणविरोधः।

नच वाक्यार्थ एवायमानन्दस्तेन अपि आनन्दत्वाप्रतिपादनात् अखण्डे एव तात्पर्य्यात्। नच सर्वथा अलौकिके सुखे कस्यापि कामना सम्भवति स्वर्गादेरपि लौकिकसुखसजातीयत्वात्। अत्र केचित्। अनानन्दव्यावृत्तिमात्र-

विचार्य्यते तत्र लोकवेदयोस्तावत् पदान्यत्वं स्वरादिधर्मभेदात् पदान्यत्वात् तदर्थोऽपि भिद्यत इति प्राप्ते सिद्धान्तः अर्थैकत्वं पदपदार्थयोरेकत्वं कुत इति अविभागात् प्रत्यक्षप्रत्यभिज्ञानात् य एव हि वर्णा लौकिके पदे प्रतीयन्ते ते एव वैदिकेऽपि पदे प्रत्यभिज्ञायन्ते वर्णात्मकञ्च पदं ततो न लौकिकपदात् वैदिकं पदं भिद्यते यत्तु धर्मभेदाद्भेद इति अर्थभेदहेतोरेव धर्मभेदस्य भेदहेतुत्वात्। नच सर्वे धर्मा भेदहेतव एव युज्यन्ते वैकल्पिकस्वरादौ व्यभिचारात्। एवं च सति क्रियाकारकसंसर्गात्मकप्रयोग चोदना अपि उपपद्यन्ते। अन्यथा वैदिकपदार्थज्ञानोपायाभावात् सम्बन्धस्य च शास्त्रहेतुत्वात् तासामभावः प्रसज्यत इति।

अथ आनन्दस्वरूपत्वं वाक्यार्थतया वेदः प्रतिपादयति इत्युच्यते इति तदपि दूषयति। न च इति। पूर्वपक्षे वाक्यार्थस्य सर्वत्र अलौकिकत्वात् न लोकवेदाधिकरणविरोध इति भावः। ब्रह्मानन्दस्य काम्यमानत्वाच्च न अलौकिकत्वमिति हेत्वन्तरमाह न च इति।

मानन्दत्वं न तु प्रसिद्ध आनन्द एव आत्मा धर्मधर्मिभावानभ्युपगमात् नच व्यावृत्त्यापि द्वैतापत्तिः तस्या आश्रयानतिरेकात्। एतेन ज्ञानत्वादयो व्याख्याताः। तत् न व्यावृत्तेः अपदार्थत्वात् अपोहवादापत्तेः व्यावर्त्तकधर्मस्य अवश्यं वक्तव्यत्वाच्च अन्यथा व्यावृत्त्यसिद्धेः।

नच स्वरूपेणैव व्यावृत्तिः आत्मनोऽव्यावृत्तत्वात् अन्यथा अब्रह्मत्वापत्तेः।

आनन्दत्वाधिकरणत्वानधिकरणत्वाभ्याम् आत्मनि द्वैतापत्त्यादिदोषप्रसक्तौ तत्परिहारत्वेनैकदेशिसंक्षेपशारीरकाचार्य्यमतमुत्थापयति अत्र केचिदिति। तदुक्तम्

ब्रह्मेतराणि किल नास्य वपूंषि तेषां बुद्धौ स्फुरन्त्यपररूपनिवृत्तिभावादिति।

आत्मानन्द इति कोऽर्थ इत्यपेक्षायामनानन्दव्यावृत्तिमात्रं तेन अनानन्दव्यावृत्त्युपाधिना आत्मनि आनन्दशब्दः प्रवर्त्तते न आनन्दत्वधर्मपुरस्कारेण तेन न उक्तविकल्पावकाश इति। ननु धर्मवद्व्यावृत्तिरपि सती असती वेति पूर्वोक्तदोषतादवस्थ्यमिति तत्राह न च इति। एवम् आनन्दत्वधर्मप्रयुक्तं दूषणं प्रतिक्षिप्य तन्न्यायेन ज्ञानत्वादिधर्मप्रयुक्तमपि दूषणजातं प्रतिक्षिपति एतेन इति। अज्ञानव्यावृत्तिरेव ज्ञानशब्दात् प्रतीयते तद्रूप एव आत्मनि ज्ञानशब्दप्रवृत्तिर्न तु ज्ञानत्वविशिष्टे आत्मनि इत्यर्थः। व्यावृत्तिः किम् आत्मनि आनन्दादिशब्दप्रवृत्ताव-

अन्ये तु आनन्दत्वादयो धर्मा यत्र कल्पितास्ते एव आनन्दादिपदार्था लोकेऽपि प्रसिद्धाः तत्रापि आनन्दत्वादीनां कल्पितत्वात् नच एतावता आनन्दस्य काचित् क्षतिरस्ति धर्मस्य अनुपादेयत्वात् तदाश्रयव्यक्तेरेव अभिलषणीयत्वात् । तदपि आपातरमणीयमिव प्रतिभाति विशिष्टस्यैव आनन्दपदार्थत्वात् व्यक्तिमात्रे तदनुपपत्तेः कल्पितानन्दत्वाश्रयस्य अनानन्दत्वप्रसङ्गानिवृत्तेश्च ।

पाधिः ? उत वाच्या ? आद्यं निरस्यति तत् नेति । आत्मव्यतिरिक्तत्वाभावेन उपाधित्वायोगात् द्वितीयं दूषयति व्यावृत्तेरिति । अन्योन्याश्रयप्रसङ्गादपोहवादो न युक्त इत्यर्थः ।

विवरणाचार्य्यमतमुत्थापयति अन्ये त्विति । लोकेऽपि इत्यपिशब्दोऽलौकिकात्मानन्दसंग्रहार्थः । ननु वैषयिकं सुखं लोके आनन्दः न च तत्र आनन्दत्वं कल्पितमबाधादित्याशङ्क्याह तत्रापीति । धर्मधर्मिभावस्य भेदाभेदाभ्याम् अयुक्तत्वादित्यर्थः । ननु आत्मा कल्पितः कल्पितधर्माधारत्वात् मिथ्यारजतवदिति तथाच अपुरुषार्थतया न उपादेयः स्यादिति तत्राह न च एतावतेति । कल्पितरजताधारे शुक्तिकाशकले व्यभिचारादिति भावः । ततश्च विमतः आत्मानन्दरूपः आनन्दत्वाधिकरणत्वात् लौकिकानन्दवदित्यर्थः । एवं च आनन्दधर्मपुरस्कारेण आनन्दशब्द आत्मनि प्रवर्त्तते तस्य च

नहि यो धर्मो यत्र न स्वाभाविकस्तदन्तर्भावितः पदार्थः स सम्भवति अन्यथा शुक्त्यादेरपि रजतपदार्थत्वापत्तेः।

अत्र उच्यते।

कल्पितत्वात् न द्वैतापत्तिरित्युक्तं भवति तदेतद्दूषयति तदपीति। अत्र अयमाशयः आनन्दत्वम् आनन्दशब्दप्रवृत्तावुपलक्षणम् ? उत विशेषणं ? नाद्यः, शक्त्यानन्त्यप्रसङ्गात् व्यक्तिविशेषाप्रतीतिप्रसङ्गाच्च द्वितीये विशिष्टमतिरिक्तमनतिरिक्तं वा ? आद्यं दूषयति। विशिष्टस्यैवेति तथाच अखण्डवाक्यार्थासिद्धिरिति भावः। द्वितीयं दूषयति कल्पितेति।

इममेवार्थं स्पष्टयति नहीति। अत्र विपक्षे बाधकमाह अन्यथेति। अयमत्राशयः कल्पितधर्माश्रयस्य न वस्तुतः तत्स्वरूपत्वम् अन्यथा धर्मस्य कल्पितत्वमेव न स्यादिति किञ्च आत्मा कल्पितः कल्पितधर्माश्रयत्वात् मिथ्या रजतवत् न च शुक्तौ व्यभिचारः शुक्तिस्वरूपाप्रयुक्तत्वादाधारत्वस्य अन्यथा रजतादेरनिवृत्तिप्रसङ्गात् अज्ञातायाश्च विशिष्टत्वेन शुद्धशुक्तिरूपत्वाभावात्ततो न व्यभिचार इति।

एवमेकदेशिनो मतं विदूष्य स्वयं सिद्धान्तयति अत्रोच्यते इति।

विशिष्टस्य आनन्दत्वधर्मविशिष्टस्य आनन्दस्य आनन्दशब्दशक्यत्वपक्षे आत्मैव उभययापि आनन्द इत्यर्थः। विशिष्टं हि विशेषणाद्यात्मकमेव तथाच विशेषणमानन्दत्वं सामान्यं तदाश्रया च व्यक्तिरुभयमात्मैव यतः कथमुपाधिषु मनोवृत्तिविशेषेषु प्रतिविम्बित आत्मा तदवच्छिन्नो व्यक्तिरूपतां प्रतिपद्यते। तासु

उपाधिसंश्रयो ह्यात्मा आनन्दत्वं तदाश्रयः ।
विशिष्टशक्यपक्षे तु व्यक्तिर्वा शक्तिगोचरः ॥ ४३॥

यदि लोके आनन्दत्वविशिष्ट एव आनन्दपदार्थस्तदापि आत्मैव आनन्दपदार्थो मुख्यः एकस्यैव नानोपाध्यनुप्रविष्टस्य अनुगतव्यावृत्तिबुद्धिजनकतया जातिव्यक्त्युभयरूपत्वोपपत्तेः ।

यथा एकस्मिन्नेव स्वरूपे सर्वकल्पनारहिते मुखचन्द्रादौ बिम्बप्रतिबिम्बस्वरूपमिति त्रिविधव्यवहारस्य उपाध्यनुप्रविष्टत्वारोपानन्तरं दर्शनादित्युक्तं लक्षणास्थले । अथवा व्यक्तिरेव सर्वत्र

उपाधिभिन्नासु आत्मानन्दव्यक्तिषु बिम्बवत् अनुगतबुद्ध्युत्पादकत्वात् सामान्यानन्दत्वरूपतां भजत इति सर्वात्मना स एव मुख्य आत्मानन्द इत्यर्थः । एवं व्यक्तिरेवानुगतबुद्धिहेतुत्वात् सामान्यशब्दाभिधेया विशेषाकारबुद्धिहेतुत्वाद्व्यक्तिशब्दितेति तदुक्तं तत्त्वरत्नकारैः नहि जातिर्नाम व्यक्तेरर्थान्तरभूतं किमपि तत्त्वमस्ति अपि तु वस्तु एव हि एकं व्यावृत्त्यनुगततया बुध्यत इति आत्मन एव उभयरूपत्वं लोकाप्रसिद्धमित्यभिप्रेत्य पक्षान्तरमाह व्यक्तिर्वेति ।

श्लोकं व्याचष्टे यदि इत्यादिना । व्यक्तिर्वेति पक्षमुपपादयति अथ वेति । ननु व्यक्तिपक्षे सर्वासु व्यक्तिषु शक्तिग्रहः क्वचिदेव वा ? नाद्यः, आनन्त्येन सर्वासामनुपस्थितेः न

पदशक्तिगोचरोऽस्तु नच व्यक्तीनामानन्त्यात् पद-शक्तिसम्बन्धव्यभिचारदोषप्रसङ्गः विशिष्टशक्य-पक्षे अपि तुल्यत्वात् विशेषणाभेदेऽपि विशेष्य-भेदेन प्रतिविशेष्यं विशिष्टभेदात्। तस्मात् अशक्येनापि शक्यतावच्छेदकेन अनुगतशक्य-व्यवहाराऽशक्यव्यावृत्तिव्यवहारयोर्जनयितुं शक्य-त्वात्।

तत्रापि शक्तिकल्पने मानाभावात् कारण-स्वरूपवहिर्भूतकारणतावच्छेदकवत्। तस्मात् आनन्दरूपत्वे आत्मनो न काचित् अनुपपत्तिः।

द्वितीयः यासु व्यक्तिसु शब्दस्य वाच्यवाचकसम्बन्धो गृहीत-स्ततोऽन्यत्र प्रवर्त्तमानः शब्दः स्ववाच्यं व्यभिचरेत् ततो न व्यक्तिः शक्येति चोद्यं परिहरति न च इति। यत्र उभयोः समो दोष इति न्यायेन हेतुमाह विशिष्टेति। आन-न्त्यादिदोषोपपादनाय विशिष्टस्य अनेकत्वमाह विशेषणाभेदे-ऽपीति। न च विशेषणैक्येन विशिष्टस्यापि ऐक्यं सम्पाद्यत इति युक्तम् अशक्यत्वात् नापि ज्ञाप्यम् असत्वात् तस्मात् विशिष्टवाच्यत्वापक्षेऽपि आनन्त्यादिदोष ध्रुव एव इत्यर्थः। कथं तर्हि अनुगतव्यवहारो वाच्यव्यक्तेरन्यव्यावृत्त्या प्रतीतिश्च आनन्त्यादिपरिहारश्चेति तत्राह तस्मात् इति।

ननु कथमशक्येन इत्युच्यते यतो गोपदाद्गोत्वविशिष्टैव व्यक्तिः प्रतीयते इति तत्राह तत्रापि इति। प्रतीते अन्यथा-

आनन्दरूपमात्मानं सच्चिदद्वयतत्त्वकम्।
अपूर्वादिप्रमाणोक्तं प्राप्याहं तद्वपुःस्थितः ॥४४॥
योऽहमद्वयवस्त्वेव सद्वये दृढनिश्चयः।
प्राप्य चानन्दमात्मानं सोऽहमद्वयविग्रहः ॥ ४५ ॥
नास्ति ब्रह्म सदानन्दमिति मे दुर्मतिः स्थिता।
क्व गता सा न जानामि यदाहं तद्वपुःस्थितः॥४६
पूर्णानन्दाद्वये तत्त्वे मेर्वादिजगदाकृतिः।
बोधेऽबोधकृतैवासीदबोधः क्व गतोऽधुना ॥४७॥

सिद्धिः शक्तिग्रहाहितसंस्कारवशात् तदुपस्थितेरित्यर्थः। ननु एवं तवापि आनन्दादिपदात् उक्तसंस्कारसचिवादानन्दत्वविशिष्टात्मप्रतीतेर्न शुद्धस्यलक्ष्यस्य पदादुपस्थितिरिति शङ्कां पराकुर्वन् उपसंहरति तस्मात् इति।

आनन्दत्वमपि आत्मैव व्यक्त्यतिरिक्तसामान्यानभ्युपगमात् उपाधेस्तटस्थतया शुद्धस्यैव प्रतीतेरित्यादि आवेदितत्वात् न दोष इति भावः। एवमात्मनः आनन्दादिरूपत्वे श्रुतियुक्तिभ्यां निर्णीते वाक्योत्थाद्वैतसाक्षात्कारादावरकाज्ञानेऽपसृते स्वात्मारामः आचार्यः।

स्वस्य कृतकृत्यतामभिनयति। आनन्दरूपमिति। प्राप्य साक्षात्कृत्य सच्चिदादितत्त्वकत्वे प्रमाणमाह अपूर्वादीति। तद्वपुस्तदात्मक इत्यर्थः। तत्शब्दलक्ष्यशरीरइति वा। ननु सद्वयस्याद्वयात्मकत्वमनुपपन्नं प्रमाणविरोधात् तत्राह योऽहमिति। अद्वयस्य सद्रूपत्वेन अधिष्ठानत्वात् तदन्यत्वस्य अज्ञान-

संसाररोगसंग्रस्तो दुःखराशिरिवापरः।
आत्मबोधसमुन्मेषादानन्दाब्धिरहं स्थितः ॥४८॥
योऽहमल्पेऽपि विषये रागवानतिविह्वलः।
आनन्दात्मनि सम्प्राप्ते सरागः क्व गतोऽधुना ॥४९॥
यस्य मे जगतां कर्त्तुः कार्य्यैरपहृतात्मनः।
आविर्भूतपरानन्द आत्मा प्राप्तः श्रुतेर्बलात् ॥५०॥
परामृष्टोऽसि लब्धोऽसि प्रोषितोऽसि चिरं मया।
इदानीं त्वामहं प्राप्तो न त्यजामि कदाचन॥५१॥

कल्पितत्वात् तत्प्रतीतेर्भ्रमत्वात् नाद्दयात्मकत्वं प्रमाणविरुद्ध-मिति भावः। ननु ब्रह्मसत्त्वादधिष्ठानमित्यनुपपन्नं नास्ति ब्रह्मेत्येव प्रतीतेरित्याशङ्क्य अस्ति ब्रह्मेति चेत्? वेदेत्यादि-श्रुतिजन्यात्मबोधविरोधान्नेति परिहरति नास्तीति। ननु तथापि सद्दयादिप्रपञ्चो वाह्यप्रपञ्चवत् न मिथ्येति शङ्कित्वा दृष्टान्तासिद्ध्या परिहरति पूर्णेति। तर्हि अज्ञानमपि अबाधितत्वात् ब्रह्मवत् सत्यमिति तन्मूलकं जगत् अपि न मिथ्येति तत्राह बोध इति। बोधे ब्रह्मात्मैक्य-साक्षात्कारे समुत्पन्ने सत्यज्ञानं क्व गतं दीपे सति तम इव इत्यर्थः। तथाच ज्ञानबाध्यमज्ञानं मिथ्येति भावः। ननु ज्ञानाज्ञानयोरेव विरोधस्ततः सुखात्मरूपाधिष्ठानावरका-ज्ञानस्य तत्त्वबोधात् निवृत्तावपि संसारनिवृत्तिः कथमित्या-शङ्क्य उपादाननिवृत्त्या उपादेयस्यापि निवृत्तिस्तन्तुनाशे पटनाश इव इत्यभिप्रेत्याह संसारेति। आनन्दाब्धिरिति विशेषणफल-

त्वां विना निःस्वरूपोऽहं मां विना त्वं कथं स्थितः।
दिष्ट्येदानीं मया लब्धो योऽसि सोऽसि नमोऽस्तु ते ५२
देहाभिमाननिगडैर्बद्धोऽबोधाख्यतस्करैः।
चिरं ते दर्शनादेव त्रुटितं बन्धनं क्षणात् ॥५३॥
विशुद्धोऽस्मि विमुक्तोऽस्मि पूर्णात्पूर्णतमाकृतिः।
असंस्पृश्य ममात्मानमन्तर्ब्रह्माण्डकोटयः ॥५४॥

माह योऽहमिति। रागमूला हि प्रवृत्तिः निरतिशयसुखे सर्वेषां सुखानामन्तर्भावात् प्राप्ते च तस्मिन् सर्वसुखस्यापि प्राप्तत्वात् तत्र रागाभावान्न प्रवृत्तिरित्यर्थः।

ननु अज्ञानस्य आनन्दात्मावरकत्वं न युज्यते सुषुप्ते सत्यपि अज्ञाने सुखस्य भानादन्यथा सुखमहमस्वाप्समिति परामर्शो न स्यात् इत्याशङ्क्य कार्य्याकारपरिणतमज्ञानं सुखावभासप्रतिबन्धकं न स्वरूपेण इत्याह यस्येति। ननु आत्मा तावदपरोक्षस्तदभिन्नञ्च ब्रह्मापि अपरोक्षम् आत्मा च भाति तथाच सति ब्रह्मसाक्षात्कारे कथं संसार इत्याशङ्क्य आत्मज्ञानं किमहं कर्त्तेत्येव ज्ञानम्? अथवा शुद्धस्वरूपसाक्षात्कारः? नाद्यः, तस्य अनात्मज्ञानत्वात् न द्वितीयः विचारात् प्राक् तदसिद्धेरित्याह परामृष्टेति। ननु त्यज्यतां को दोषस्तत्राह त्वां विनेति। ब्रह्मणः सद्रूपत्वात् तद्भिन्नस्य असत्त्वप्रसङ्गात् तत्त्यागो न युज्यत इत्यर्थः। ब्रह्मणोऽपि प्रत्यग्भेदे जड़त्वप्रसङ्गात् न प्रतीचो भिन्नं ब्रह्म युज्यत इत्याह मां विनेति। नमस्कार्य्यत्वे बन्धनिवृत्त्युपकारकर्तृत्वहेतुमाह देहेति। ननु बद्धमुक्तयोः को विशेष इत्याशङ्क्याह विशुद्ध इति। बद्धस्य हि मलिनता लोके प्रसिद्धा

तत्त्वमादिवचोजालमावृत्तमसकृत् पुरा।
इदानीम् तत् श्रवादेव पूर्णानन्दो व्यवस्थितः॥५५

ननु परिपूर्णानन्दस्वभावश्चेदात्मा कथं संसारावस्थायां न स्फुरति। नच परमप्रेमास्पदतया आत्मनः स्फूर्त्तिरेव आनन्दस्वरूपस्य स्फूर्त्तिरिति वाच्यं तादृगभिमानाभावात् नहि मोक्षावस्थायां यादृगानन्दस्वरूपत्वमात्मनः श्रूयते एतस्यैव आनन्दस्य अन्यानि भूतानि मात्रामुप-

तथा न्यूनतादीनता च मुक्ते तु तद्वैपरीत्यं लोकादेव सिद्धमिति विशुद्धो मलरहितो द्वितीयाभावात् पूर्णाद्विभोराकाशादपि पूर्णतमेति त्रिविधपरिच्छेदशून्य इत्यर्थः। एतदेव निरतिशयमहत्वं स्पष्टयति असंस्पृश्येति।

तत्त्वसाक्षात्कारसाधनान्तःकरणशुद्धिहेतूनां वेदानुवचनादीनां कार्य्यलिङ्गेन अनुष्ठितत्वमाह तत्त्वमादीति। जालशब्दः समूहवाचकस्तेन सम्पूर्णो वेद इत्यर्थः। उपलक्षणमेतत् अष्टाचत्वारिंशत् संस्काराः नित्यानित्यवस्तुविवेकाद्यन्तरङ्गसाधनमपि सम्पन्नमित्यर्थः। वेदान्तवाक्यविचारजन्यसाक्षात्कारादेव मुक्तिर्न कर्मसहितादिति संन्यासस्यापि अङ्गत्वसूचनाय आह इदानीमिति। तत् श्रवो वेदान्तश्रवः विचारजन्यसाक्षात्कार इत्यर्थः।

ननु आनन्दरूपत्वम् आत्मनो न युज्यते तद्रूपेण अप्रतीयमानत्वात् घटवदिति शङ्कते ननु इति। यद्यपि अद्वयानन्दरूपेणैव तस्य अज्ञानविषयत्वादित्यत्र प्रागेव आनन्दां-

जीवन्ति इत्यादिश्रुतेस्तादृगानन्दात्माभिमानः कस्यचिदस्ति आनन्दं ब्रह्मणो रूपं तच्च मोक्षे प्रतिष्ठितमिति मोक्षे एव तदभिव्यक्तिश्रवणाच्च संसारावस्थायां प्रतिबन्धसत्त्वाद्भासमानमपि आनन्दरूपत्वं नाभिमन्यत इति चेत् कस्तर्हि प्रतिबन्धः अज्ञानं तत्कार्य्यं वा ? आद्ये जीवस्य परस्य वा ? नान्त्यस्तस्य सर्वज्ञस्य निरवद्यस्य तदभावात् नाद्यः तस्य परेण अभेदात् नान्योऽतोऽस्ति द्रष्टा इत्यनेन जीवेन आत्मना तत्त्वमसि अयमात्मा ब्रह्म इत्यादिश्रुतिभ्यः ।

यस्य अज्ञानावृतत्वम् अस्फुरणे कारणमुक्तं तथापि तदेव आवरकाज्ञानादिविषयकविचारेण अतितरां द्रढ़ीकर्त्तुं स्थूणानिखनन्यायेन आचार्य्यः प्रवर्त्तत इति न दोषः मा न भूवं किन्तु भूयासमेव इति तावदिच्छाविषयत्वेन आत्मा प्रतीयते तदेव च सुखस्फुरणं तदतिरिक्तसुखाभावादिति। ततोऽप्रतीयमानम् असिद्धमित्यमुद्य दूषयति। न च इति। किं वस्तुतो निरतिशयानन्दरूप आत्मा परमप्रेमास्पदत्वेन भासत इति उच्यते ? उत निरतिशयानन्दोऽहमस्मि इत्यभिमन्यते वा ? आद्यम् अङ्गीकृत्य द्वितीयं दूषयति तादृगिति। ननु सुखमहमस्वाप्समिति परामर्शादभिमन्यत एव सुखरूपतामिति तत्राह नहीति। ननु सुखं सुप्ते यद्भासते तदपि निरतिशयमेव नहि नित्य आत्मसुखे कश्चिदतिशयोऽस्ति

नच कल्पनामात्रेणैव जीवस्यापि अज्ञानं न वस्तुतोऽस्तीति वाच्यं परस्मिन्नपि प्रसङ्गात् नच चिन्मात्रनिष्ठमज्ञानं तत्सर्वात्मना प्रतिबध्नात्येव इति वाच्यं यदि संसारावस्थायामप्रतिबद्ध आनन्दो नास्त्येव कस्य प्राप्त्या तर्हि प्रतिबन्धनिवृत्तिः स्यात् नहि संसारिप्राप्त्या संसारनिवृत्तिः सम्भवति नच अप्रतिबद्ध एव आनन्दः संसारावस्थायामपि अस्त्येव केवलमज्ञानसमुद्भूतद्वैतान्तःपातिशब्दादिविषयविषविषमस्य तद्दर्शनातिलालसमानसस्य तद्दर्शनवेला-

तत्राह आनन्दमिति। आनन्दोऽहमित्यभिमानस्य ज्ञानविशेषत्वेन सुषुप्तिकालेऽभावात् भासमानमपि स्पष्टं न भासत इत्यर्थः। ननु आनन्दात्मनोऽप्रतीतिरनानन्दात्मकत्वादिति न किन्तु प्रतिबद्धत्वादिति शङ्कते संसारेति। नान्योऽत इति। अतः परमात्मनः अनेन जीवेन आत्मना इति सामानाधिकरण्यात् जीवब्रह्मणोरेकत्वमित्यर्थः।

ननु अज्ञानं न जीवे न वा विश्वभूते ब्रह्मणि किन्तु चिन्मात्रे निर्विभाग इति प्रागेव आवेदितमिति तत्राह न च इति। तत आनन्दरूपत्वप्रतिबन्धः किं वास्तवो वा? उत अनवधानमात्रेण प्रतिभासनात् कल्पितो वा? आद्यम् अनूद्य दूषयति यदीति। द्वितीयमाशङ्क्य पराचष्टे न च इत्यादिना। आत्मनि अनवधानमात्रं प्रतिबन्ध इति सम्बन्धः। अनवधानम्

यामपि अत्यन्तभावनासमुत्थापितविषयवड़िशाकृष्टहृदयस्य परमप्रियतमं जगदीश्वरं सर्वाङ्गप्रोततया अतिसन्निहितमपि आत्मानमीक्षितुं क्षणमलभमानस्य स्वग्रीवास्थग्रैवेयकाद्यनवधानवदनवधानमात्रमात्मनि प्रतिबन्धः न वस्तुतः प्रतिबन्धोऽस्तीति वाच्यम् ।

तद्दर्शनरूपस्य प्रतिबन्धस्य आश्रयनिश्चयासामर्थ्यात् तथा हि कोऽसौ द्वैतद्रष्टा ? किं परमात्मा ? किं वा जीवः ? किं वा परः कश्चित् ? नाद्यः तस्य सर्वज्ञस्य भ्रमबीजाज्ञानाभावेन द्वैतदर्शनानुपपत्तेः यस्याज्ञानं भ्रमस्तस्य भ्रान्तः सम्यक् च वेत्ति स

उपपादयति केवलमित्यादिना। ईश्वरम् आत्मानमिति सामानाधिकरण्यात् ऐक्यमीक्षितुं क्षणम् अलभमानस्य इत्यर्थः। ऐक्यदर्शनयोग्यतामाह अतिसन्निहितेति। साक्षादपरोक्षात् ब्रह्मेति श्रुतेरित्यर्थः। परमेति यो वै भूमा तत् सुखमिति ब्रह्मणः सुखश्रवणादित्यर्थः। आनन्दात्मनो जगत्कारणत्वात् ईश्वरत्वमाह ईश्वरमिति। आनन्दात् ह्येव इति श्रुतेरित्यर्थः। उपादानत्वमाह समुद्भूतेति। उक्तविषय एव विषं तेन विषयस्तदधीनस्तस्य इत्यर्थः। ननु विषयमपि औषधादिना त्याज्यते एवं विवेकेन विषयत्यागो युज्यत इत्याशङ्क्य विवेक एव नास्ति इत्याह तद्दर्शनेति। ननु तथापि वैषयिकसुखेषु अक्षणिकत्वादेव ततो

इति न्यायात् अज्ञानमिथ्याज्ञानसम्यग्ज्ञानानां समानाधिकरणत्वनिश्चयेन अविद्यावत एव तत् सम्भवात् अस्तु तर्हि जीवस्य अविद्यावतो द्वैतद्रष्टृत्वम्। न तस्य परेण अभेदस्य उक्तत्वात् न च अभेदेऽपि विम्बप्रतिविम्बव्यवस्थया सर्वज्ञत्वद्वैतद्रष्टृत्वयोरुपपत्तिरिति वाच्यं वैषम्यात्।

तत्र हि पूर्वसिद्धे उपाधौ विम्बप्रतिविम्बभावानन्तरं प्रतीयमानयोर्मलिनत्वस्वच्छत्वयो-

विरक्त्या भवितव्यमिति न इत्याह तद्दर्शनेति। तथाच विषयदर्शनेनैव सर्वस्य आयुषो व्याप्तत्वात् आत्मनोऽनवधानं युज्यते इति भावः। तेन सुखाद्वैते आत्मनि दुःखादिसद्वयादिदर्शनमेव प्रतिवन्ध इति भावः।

तद्दर्शनरूपस्य इत्यादि अभेदस्य उक्तत्वादित्यन्तो ग्रन्थः स्पष्टार्थः। उक्तत्वात् न अन्योऽतोऽस्ति द्रष्टेत्यादावित्यर्थः। ततो जीवस्य सर्वज्ञेश्वराभिन्नस्य भ्रमवीजाज्ञानाभावात् तत्कृतद्वैतदर्शनं न युज्यत इत्यर्थः। ननु यथा विम्बप्रतिविम्बयोस्तदेव इदं मुखमिति प्रत्यभिज्ञया एकत्वेऽपि श्यामत्वं प्रतिविम्बे एव अवदातत्वं विम्बे उपाधेः प्रतिविम्बपक्षपातित्वनियमात् तद्वत् अज्ञानोपाधिकद्वैतदर्शनं जीवस्यैव न परस्य इति शङ्कां प्रत्याह न च अभेदेऽपीति। दृष्टान्ते विम्बप्रतिविम्बभावस्य नियामकत्वेऽपि प्रकृतेऽन्योन्याश्रयदोषग्रस्तत्वात् तन्न सम्भवतीति वैषम्येण उत्तरमाह वैषम्यादिति।

वैषम्यं स्पष्टयति तत्र हि इत्यादिना। इह दार्ष्टान्तिके

र्व्यवस्थया उपपत्तिर्युक्ता इह तु द्वैतदृष्ट्युत्थापितद्वैतस्यैव उपाधितया तदनुप्रवेशेन विम्बप्रतिविम्बभावकल्पनायां ततः पूर्वं द्रष्टृव्यवस्थापकानुपपत्तेः नच अनादिसिद्धाऽज्ञानप्रतिविम्बस्यापि अनादितया ततः पूर्वमिति पर्य्यनुयोगानुपपत्तिरिति वाच्यम् अनादिसिद्धाऽज्ञानद्रष्टुरपि अनादिसिद्धस्यैव वक्तव्यत्वात्। नचासौ वक्तुं शक्यः नच साक्ष्येव तथा तस्य सर्वज्ञस्य स्वाविद्याविरहेण तद्द्रष्टृत्वानुपपत्तेः।

नच सर्वज्ञस्यापि अन्याऽविद्याद्रष्टृत्वेन अविरोधः स्वभिन्नाऽविद्याद्रष्टृत्वेन परमात्मनो भ्रान्तत्वप्रसङ्गात् नान्योऽतोऽस्ति द्रष्टेति शास्त्र-

द्वैतदर्शने सति तत्प्रत्युपस्थापितस्य अज्ञानकार्य्यस्य प्रतिविम्बोपाधितया तदनुप्रवेशेन तदुपरागेण प्रतिविम्बादिकल्पना तस्यां च सत्यां प्रतिविम्बात्मा जीवो द्रष्टेत्यन्योन्याश्रयादयं प्रकारो न उपपद्यत इत्यर्थः। ननु उपाधिप्रतिविम्बयोरनादित्वात् तदुत्तरकाले द्रष्टृत्वव्यवस्था इत्यनुपपन्नमिति न इत्याह न च इति। तथाच न अन्योन्याश्रय इति भावः। भवत्वेवं द्रष्टा जीवः सादिरनादिर्वा ? सादिश्चेत् तत्राह अनादिसिद्धेति। तथाच जीवो द्रष्टा न स्यात् इत्यर्थः। ननु जीवादन्यः पर एव अनादिसिद्धो द्रष्टा अस्तु तत्राह न चेति। अनादिसिद्धो-

विरोधाच्च न च सर्वज्ञत्वं नाम स्वरूपचैतन्येन स्वाध्यस्तसकलभासकत्वं तच्च अविद्यावस्थेऽपि न विरुध्यत इति वाच्यम् निरवद्यं निरञ्जनमिति श्रुत्या अविद्याया अपि तत्र निषिद्धत्वात् नच वस्तुभूताऽविद्यानिषेधः न तु कल्पिताया अपि इति वाच्यं साधारणनिषेधात् वस्तुभूताऽविद्या-

द्रष्टा वक्तुं न शक्यत इत्यर्थः। ननु कथं द्रष्टुरभावः साक्षिण एव सत्त्वादिति। न इत्याह न चेति। साक्षी किं परो वा जीवो वा? आद्यं दूषयति तस्येति। साक्षी किं स्वाविद्यादि पश्यति जीवाविद्यादि वा? नाद्यः, इत्याह सर्वज्ञस्येति।

द्वितीयं दूषयति न चेति। तर्हि जीवब्रह्मणोर्भेदः किं वास्तव? उत अवास्तवः? नान्त्य इत्याह स्वभिन्नेति। स्वभिन्नस्य या विद्या तद्द्रष्टृत्वेन इत्यर्थः। स्वस्या अविद्या नास्ति सर्वज्ञत्वात् स्वभिन्नोऽन्योऽविद्याश्रयो नास्ति अतः स्वभिन्नाविद्यां पश्यतः परमात्मनो भ्रान्तत्वं स्यात् इत्यर्थः। तर्हि ब्रह्मणो भ्रान्तत्वपरिहाराय वास्तवो जीवपरमात्मनो र्भेदोऽस्तु तत्राह नान्योऽत इति। ननु परमात्मैव द्वैतद्रष्टा अस्तु नच सर्वज्ञत्व-विरोधः सर्वज्ञत्वं हि न अविद्यानिवर्त्तकप्रमाणजन्यज्ञानाश्रयत्वं किन्तु स्वरूपचैतन्येन स्वाध्यस्तसर्वजगदवभासकत्वं नच स्वरूप-चैतन्यमविद्याविरोधि तस्य तत्साधकत्वात् तथाच परमात्मैव द्वैत-द्रष्टेति न इत्याह नच इत्यादिना। अविद्याया अपि इत्यपि शब्दोऽविद्याकार्य्यसंग्रहार्थः निरञ्जनशब्देन अविद्याकार्य्यस्य निषिद्धत्वादिति। अविद्यादिनिषेधवाक्यस्य अन्यविषयत्वेन

ऽप्रसिद्धेश्च जीवस्य च अविद्योत्तरभावितया अनादित्वानुपपत्तेः अन्यथा अविद्यानिवृत्त्यापि जीवभावो न निवर्त्तेत। न तृतीयः जीवपरमात्मव्यतिरिक्तस्य सर्वस्यैव जड़त्वेन द्रष्टृत्वानुपपत्तेः।

नच उभयानुगतचित्सामान्यस्यैव द्रष्टृत्वमिति वाच्यं तथाच सति अविद्याया अपि तत्रैव वक्तव्यतया जीवस्य निरवद्यस्य अभ्रान्तस्य परमात्मवत् नित्यमुक्तत्वसर्वज्ञत्वाद्यापत्तिः उपाधिसिध्युत्तरकालीनत्वाच्च त्रितयविभा-

अविद्यादिनिषेधकत्वमित्याशङ्क्य अविद्याशब्दस्य अविद्यामात्रशक्तस्य वास्तवाविद्यःपरत्वे लक्षणापत्तेर्नैव मित्याह नच इत्यादिना। किञ्च वस्तुभूता विद्याप्रसिद्धा वा न वा? आद्ये द्वैतापत्तिर्निषेधानुपपत्तिश्च ब्रह्मवत् स्यात् द्वितीयेऽप्रसिद्धत्वादेव निषेधानुपपत्तिरित्याह वस्तु भूतेति। जीवोऽनादिरिति पक्षं प्रत्याह जीवस्य चेति। विपक्षे भावत्वे सति अनादित्वात् जीवभावस्य संसारिकत्वस्य अनिवृत्त्यापत्त्या निर्मोक्षः स्यात् इति बाधकमाह अन्यथेति। अथ परः कश्चित् द्रष्टेति पक्षं प्रत्याह न तृतीय इत्यादिना।

सर्वज्ञत्वाद्यापत्तिरित्यन्तो निगदव्याख्यातो ग्रन्थः किञ्च जीवपरमात्मनोः अनुगतं चैतन्यं द्रष्टेति पक्षे अन्योन्याश्रयदूषणान्तरमित्याह उपाधि इति। तृतीयप्रकारे चैतन्यस्य

गस्य। नच अविद्यानङ्गीकारे तद्विषयकप्रश्नाद्येपानुपपत्त्या तवैव प्रष्टुराच्चेपुर्वा अविद्याद्रष्टृत्वं युक्तमिति वाच्यं तस्यैव ममापि अविद्याद्रष्टुः स्वरूपस्य इदानीं त्वया तत्त्वनिर्णयार्थं वक्तव्यत्वात् नच यस्त्वं स्वात्मस्वरूपमपि न जानासि अयमहमिदं पृच्छामि इति तस्य तव प्रश्न एव कथं स्यात् इति वाच्यं प्रश्नविषयाज्ञाने सत्येव प्रश्नोपपत्तेः अन्यथा प्रष्टव्यार्थज्ञानाज्ञानविकल्पेन प्रश्नाभावेन

नाऽपृष्टः कस्य चिद्ब्रूयात् नचाऽन्यायेन पृच्छतः।
जानन्नपि हि मेधावी जड़वल्लोक आचरेत्॥

इति न्यायेन स्वयं वक्तुमशक्यतया सर्वं शास्त्रमरण्यरुदितं स्यात्।

द्रष्टृत्वे तद्दशात् उपाधिशब्दिताज्ञानादिसिद्धिस्तत्सिद्धौ तन्निरूप्य विम्बप्रतिविम्बाख्यब्रह्मजीवप्रकारद्वयापेक्षितहृतीयप्रकारसिद्धिरिति अन्योन्याश्रयादयं पक्षो न साधीयानित्यर्थः। ननु प्रश्नस्य ज्ञानपूर्वकत्वादित्यत्र अविद्याप्रष्टेत्यर्थादुक्तं तथा चेप्ता वा तत् द्रष्टेति तथाच द्वैतद्रष्टुरुक्तत्वात् तत्प्रश्नः पुनर्न युज्यते इति पक्षं दूषयति न चेति। ननु को द्वैतद्रष्टेति प्रश्नो विद्याद्रष्टुस्तव स्वरूपाज्ञाने न उपपद्यते प्रश्नविषयाज्ञाने तद्विषयकशब्दप्रयोगायोगादिति तत्राह न

नच प्रश्नविषयापरिज्ञाने कथं तद्विषयकशब्दरचना नहि संसर्गमज्ञात्वा शब्दरचना नास्तेति प्रसिद्धिरिति वाच्यं स्तोभशब्दवत् सार्थकस्यापि शब्दस्य तत्स्वरूपज्ञानादेव रचनोपपत्तेः सर्वत्र शब्दस्वरूपज्ञानस्यैव शब्दरचनाहेतुत्वात् संसर्गज्ञानस्य च शब्दरचनाहेतुत्वेन प्रसिद्धोपात्तस्य प्रमाशब्दप्रामाण्यप्रयोजकतया अन्यथासिद्धेः न च देहादीनां बुद्धिपर्य्यन्तानामहम्प्र-

चेति । अज्ञात एवार्थः प्रष्टव्य इत्यर्थं विपक्षबाधेन दृढ़यति अन्यथेति । संसर्गज्ञानं न वाक्यप्रयोगहेतुः हुम्फडादिस्तोभप्रयोगे व्यभिचारात् पदज्ञानस्यैव शुकवेदवाक्यादिषु कारणत्वेन क्लृप्तस्य इतरत्रापि तस्यैव वाक्यरचनाहेतुत्वोपपत्तौ संसर्गप्रतीतेः कारणत्वे प्रमाणाभावादिति ।

नच वाच्यमिति प्रतिज्ञायां हेतुमाह स्तोभशब्दवदिति । ननु अबाधितलोकप्रसिद्धिसिद्धस्य वाक्यरचनाहेतुत्वस्य संसर्गप्रतीतौ कथमपह्नवः क्रियते इति तत्र आह संसर्गज्ञानस्य चेति । ननु वेदप्रामाण्येन संसर्गज्ञानमस्ति शुकवालादिवाक्येऽपि तत् नास्ति ततः कथं तस्य प्रामाण्यप्रयोजकतेति मैवं नैयायिकमतेन अस्य परिहारस्य उक्तत्वात् तन्मते च ईश्वरज्ञानस्य वेदे शुकादिवाक्ये च प्रमाण्यप्रयोजकस्य सत्त्वात् अस्माकं पुनर्हुंफटादिशब्दप्रामाण्ये तदभावेन व्यभिचारात् लोकप्रसिद्धेरन्धपरम्परानादरणीयत्वादिति । तस्मात्

**त्वयाऽऽलम्बनीभूतानामितराऽनात्मव्यावृत्ततया प्रतीयमानानां मध्ये अन्यतमं तत्समुदायो वा तव स्वरूपमिति वाच्यम्।**

अज्ञानेऽपि प्रश्नसम्भवात् अविद्याद्रष्टुर्मम स्वरूपं तत्त्वनिर्णयार्थं त्वया वाच्यमिति स्थितं तत्र शिष्यद्वारैव द्रष्टृस्वरूपनिर्णयार्थं शरीरादीनां द्रष्टृस्वरूपत्वमाशङ्क्य परिहरति। नच देहादीनामिति। आदिशब्देन इन्द्रियं मनश्च संगृह्यते।

तेषां द्रष्टृस्वरूपत्वे हेतुमाह अहं प्रत्ययेति। अहं प्रत्ययेत्यादिविशेषणफलमाह इतरेति। अन्यतममिति शरीरमेव वा मन एव वा बुद्धिरेव वा इत्यर्थः। एतेषां समुदायो वा द्रष्टृस्वरूपमिति पक्षान्तरमाह समुदायो वेति।

शरीरस्य इन्द्रियाद्यपेक्षया अतिस्थूलत्वात् प्रथमत्वेन उपन्यासः शरीरात्मवादिनामयमभिप्रायः तत्र शरीरनामनिरपेक्षत्वगिन्द्रियाधारः निरपेक्षपदम् अङ्गुल्याद्यवयवानां प्रत्येकं शरीरत्वनिरासाय तेषाम् इतरावयवसापेक्षाणामेव त्वगाधारत्वात् अहं मनुष्य इति प्रतीतेः अहन्त्वमनुष्यत्वयोरेकमधिकरणं प्रतीयते मनुष्यत्वञ्च देह एव इति सम्मतं तथाच स एव आत्मा न च मम इदं शरीरमिति भोक्तृशेषतया प्रतीतेः स्रगादिवदनात्मत्वमिति वाच्यं मम आत्मा इतिवत् तत् प्रतीतेरुपचारात् ततः शरीरमेव आत्मा इति स्थूलदर्शिनो बौद्धविशेषाः प्रतिपन्नाः केचन पुनरिन्द्रियाण्येव आत्मा इत्याहुः। इन्द्रियाणां ज्ञानान्वयव्यतिरेकात् ज्ञानकारणत्वे उपादानस्य अभ्यर्हितत्वात् तदेव उचितमहं काणो बधिर इत्याद्यहंप्रत्ययावलम्बनत्वाच्च

तेषामपि अज्ञानकार्य्याणां मद्भोगोपकरणतया मम प्रत्ययविषयाणां छत्रचामरादीतरभोगसाधनवन्मदुपसर्जनतया प्रतीयमानानां प्रत्येकसमुदाययोः कार्य्यकारणविलक्षणाऽहेयानुपादेयस्वभावमप्रत्ययाविषयपरमप्रियतमस्वातिरिक्तसर्वावभासकसर्वदाऽव्यभिचार्य्यात्मवस्तुस्वरूपत्वानुपपत्तेः न च देहादिबुद्धिपर्य्यन्तेभ्यो यत् स्वरूपं त्वया परिशेषितं तदेव तव स्वरूपमिति गृहाणेति वाच्यं तस्यापि अज्ञातत्वात् नचा-

इन्द्रियाण्येव द्रष्टृणीति। अपरे पुनः स्वप्ने इन्द्रियोपरमेऽपि मनसोऽनुवृत्तेः अहं मन इति प्रतीतेर्मन एव आत्मेति वदन्ति। विज्ञानव्यतिरिक्तस्य मनसोऽभावात् क्षणिकविज्ञानमेव आत्मेति विज्ञानवादिनः प्रपेदिरे इति बुद्धिपर्य्यन्तानाम् इत्युपलक्षणं यथायथान्तरमव्यभिचारित्वेन यत् सम्भवति तदपि स्वरूपत्वेन ग्राह्यमिति। एवं गुरुणा स्वरूपे शिष्योपदिष्टे न च वाच्यमिति तेन निषिद्धे स एव निषिद्धा।

तत्र हेतुमाह तेषामिति। तेषां शरीरादीनां प्रत्येकसमुदाययोः आत्मवस्तुस्वरूपत्वानुपपत्तेरिति अन्वयः। अनुपपत्तौ चतुर्विधान्वयव्यतिरेकौ हेतुत्वेन आह अज्ञानकार्य्याणामित्यादिना। अनेन कार्य्यकारणान्वयव्यतिरेकौ दर्शितौ न च अज्ञानमेव कारणं न आत्मेति वाच्यम्। अज्ञानाधिष्ठानत्वेन आत्मनः कारणत्वस्य असकृदुक्तत्वात् अहं प्रत्ययाव-

ज्ञानं परित्यज्य तद्विषयस्वरूपमात्रं प्रत्यक्तत्त्वं ग्राह्यमिति वाच्यं तस्यापि जीवेश्वरतद्भिन्नत्वादिरूपेण निर्णेतुमशक्यतया सन्देहाक्रान्तत्वात् नच किं नाम निर्णयेन वस्तुस्वरूपं तु निर्णीतमेवेति वाच्यम् अशेषविशेषेण तत्त्वबुभुत्सुं प्रति एतस्य अनुत्तरत्वात्।

लम्बनत्वम् अन्यथयति ममेति। तेन भेदे प्रतीयमानेऽभेदप्रतीतिरुपचरिता इति भावः। न च विपरीतं शङ्कनीयं मम आत्मेति वदिति वैषम्यात् आत्मशब्दसन्निधानात् तत्सम्बन्धप्रत्यय उपचारमर्हति न च अत्र तथास्ति अहंप्रत्ययस्य देहादावात्मतादात्म्याध्यासेन अपि उपपत्तेः कस्तर्हि ममेति षष्ठ्या सम्बन्धः प्रतिपाद्यत इत्याशङ्क्याह मद्भोगेति। तत्र दृष्टान्तः छत्रचामरादीति। अनात्मत्वे हेत्वन्तरमाह मदुपसर्जनतयेति। एषां मध्ये प्रत्येकं वा समुदायो वा स्वरूपत्वं न सङ्गच्छत इत्यर्थः। आत्मस्वरूपं विशिनष्टि कार्य्येत्यादिना। कारणमत्र अज्ञानं विवक्षितम्। आत्मनि अहेयत्वं वदता प्रपञ्चस्य शरीरादेः दुःखात्मकत्वं सूचितं तेन दुःखिप्रेमास्पदत्वलक्षणान्वयव्यतिरेकौ ध्वनितौ अनुपादेयत्वम् अविक्रियत्वात् देहादौ इव अहम्प्रत्ययस्य आत्मनि गौणत्वं प्रति आह ममेति। निरतिशयसुखरूपत्वेन अन्यानुपसर्जनत्वमाह परमेति। साक्षित्वमाह स्वातिरिक्तेति। अनेन साक्षिसाक्ष्यान्वयव्यतिरेकौ दर्शितौ अज्ञानादावध्यस्ते सर्वत्र अनुगतत्वेन अव्यभिचारित्वमाह सर्वदा इति। एतेन देहादीनामर्थाद्व्यभिचारित्वमुक्तं तेन चतुर्थोऽपि

नच सामान्यविशेषशून्ये विशेषबुभुत्सैव अनुपपन्नेति वाच्यं तस्यैव सामान्यविशेषशून्यस्य वक्तव्यत्वापत्तेः नचाज्ञानव्यतिरिक्ततया निश्चिते स्वरूपे सन्देह एव न उपपद्यत इति वाच्यम् अज्ञानस्य अद्यापि अनिवृत्तत्वात् स्थिते एव अज्ञाने विवेकदृष्ट्या तद्विविक्तस्वरूपनिर्णयेऽपि तेनैव अज्ञानेन विषयीकृते सन्देहोपपत्तेः नच अध्यस्ताज्ञानस्वरूपे स्थिते तदधिष्ठानस्य आत्मनो विवेकोऽशक्य एव अधिष्ठानभेदेन अध्यस्तस्य

अन्वयव्यतिरेको दर्शित इत्यर्थः। तस्यापीति। प्रत्यक् चैतन्यस्यापि इत्यर्थः। अशेषविशेषेण इति इत्थं भावे तृतीया।

तत्र गुरुशङ्कां शिष्यः पराचष्टे न च इति। विशेषशून्ये तदनात्मके इत्यर्थः। तर्हि तादृगेव स्वरूपं त्वया वाच्यमिति शिष्य आह तस्येति। ननु सन्दिग्धं जिज्ञास्यं देहाद्यज्ञानान्तेभ्यो भिन्नतया परिशेषात् निश्चिते वस्तुनि सन्देहानुपपत्तेः जिज्ञासायोगात् किं प्रश्नेन इति तत्राह न च इति। ननु तिष्ठतु नाम अज्ञानं निश्चिते वस्तुनि सन्देहादर्शनात् कथं जिज्ञासेति तत्राह स्थिते एव इति। विवेकज्ञानस्य अन्वयादिजन्यतया परोक्षत्वादपरोक्षसंशयादिनिवर्त्तकत्वं न युज्यत इत्यर्थः।

ननु विविक्ततया निश्चितेऽपि अज्ञानं तत्प्रयुक्तः संशयोऽपि अस्तु इत्युक्तेऽज्ञानादिसत्त्वे निश्चित एव नास्ति तस्मिन् वा सति

पृथक्स्वरूपाभावात् ततो यदि विवेकदृष्ट्या अधिष्ठानस्वरूपमात्मतत्त्वं निश्चितं तदा तत्र अध्यस्तमज्ञातं तत्कार्य्यं वा ? ततो भेदेन तत्र नास्ति इति अवधार्य्य विनिश्चेतव्यं तथा च तत्र अज्ञानविरहात् सन्देहानुपपत्त्या प्रश्नानुपपत्ति-रेव इति वाच्यम्।

एतावता अपि द्वैतद्रष्टुरव्युत्पादनात् नहि शुद्धस्य कूटस्थस्य द्वैतद्रष्टृत्वमुपपद्यते मोक्षकाले-ऽपि द्वैतदर्शनप्रसङ्गात्। ननु मोक्षस्य नित्य-त्वेन सर्वदा सत्त्वात्सर्वो हि कालो मोक्षकाल

न अज्ञानादीति शङ्कामनूद्य दूषयति न च इति। अध्यस्ता-दन्यत्वमधिष्ठानस्य विवेकः। नच सति अध्यस्ते तदन्यत्वं ज्ञातुं शक्यम्। अध्यस्तस्य अधिष्ठानतादात्म्यात् तद्भेदेन स्वरूपाभावात् अथ यदि विवेकनिश्चयः स्वीक्रियते ततो न अज्ञानादीत्याह ततो यदीति। सन्देहाभावे प्रश्नो जिज्ञासाभावादेव न सङ्गच्छत इत्याह तथाच इति। नच वाच्यमिति व्यवहितेन अन्वयः। ननु अज्ञानादिके त्वदुक्तयुक्त्या परास्ते शुद्धं मोक्षान्वयिविकाररहित-चैतन्यमवशिष्यते तच्च न द्वैतदृष्टृ अनिष्टप्रसङ्गादिति शङ्कते।

एतावतापीति प्रसङ्गस्य अनिष्टत्वमाक्षिपति। ननु इति। ननु मोक्षस्य ज्ञानसाध्यत्वात् नित्यत्वमसिद्धमिति तत्राह विमुक्तश्चेति। पूर्वमपि विमुक्त एव अज्ञानवशादविमुक्तत्व-भ्रमे तत्त्वसाक्षात्कारात् अज्ञानोपमर्दिते विमुच्यते इति

एव विमुक्तश्च विमुच्यते इति शास्त्रात् अन्यथा मोक्षस्य कादाचित्कत्वेन अनित्यत्वप्रसङ्गः तथाच मोक्षकाले द्वैतदर्शनप्रसङ्गो न अनिष्ट इदानीं तद्दर्शनादिति चेत्? न, सार्वलौकिकानुभवविरोधात् नहि द्वैतदर्शनकाले कश्चन मोक्षमनुभवति नहि सर्वलोकविरुद्धमर्थं श्रुतिरपि प्रतिपादयति अन्यथा शिलाप्लवनवाक्यानामपि स्वार्थे प्रामाण्यप्रसङ्गः। ततो न सर्वः कालो मोक्षकालः सर्वलोकानुभवविरोधादिति। हन्त तर्हि ये सर्वेऽनुभवितारस्ते एव द्वैतद्रष्टारस्त्वयैव निश्चितास्तथाच स्वाधीननिश्चये द्वैतद्रष्टरि कः प्रश्नः।

उपचर्य्यते न तु जन्यते मोक्षः पूर्वसिद्धत्वात् इत्यर्थः। मोक्षस्य अजन्यत्वे न नित्यत्वे फलितमाह तथा चेति। इदानीमिति मोक्षकाले सत्यपि इत्यर्थः। द्वैतदर्शनमोक्षयोरेककालत्वं लौकिकानुभवबलात् कल्प्यते? उत श्रुतिबलात्? आद्यं निषेधति न इति। न केवलमनुभवाभावः किन्तु विपरीतानुभवो बाधकोऽस्तीत्याह सार्वलौकिकेति। नेति इति निषेधमुपपादयति नहि इति। द्वितीयं दूषयति नहि इति। द्वैतदर्शनमोक्षयोः एककालत्वनिराकरणमुपसंहरिति तत इति। ततः शब्दार्थमाह सर्वेति। तथाच द्रष्टृत्वमपि न निरूपितमिति तत् वक्तव्यमिति शिष्यस्य अभिप्रायः द्वैतानुभवितारो

किमत इदमतो भवति एतेषां यद् द्वैतदर्शनं तदेव सच्चिदानन्दपरिपूर्णात्मस्वरूपमोक्षाविर्भावप्रतिबन्धकमिति गृहाण। अस्तु तर्हि तेषां प्रतिबन्धो मम द्वैताऽद्रष्टुः कुतो न मोक्ष आविर्भवतीति चेत्? तर्हि त्वं किमेतेभ्यो भिन्नो येन द्वैताऽद्रष्टृत्वं भवेत्। कः संशयः नहि तानात्मत्वेन अनुभवामि तेषां सुखदुःखादीनां मम लेपाभावात्।

मुक्तिं न अनुभवन्ति इत्युक्तमाश्रित्य गुरुः उत्तरमाह हन्तेति। अनुभवदर्शनयोः पर्य्यायत्वाद्वैतानुभवितार एव तद्द्रष्टार इति त्वयैव निर्णीतमिति स्वबुद्धिसिद्ध्यर्थं प्रश्नस्तत्र च मम अनिरूपणप्रयासो वृथा इत्यर्थः।

ननु द्वैतानुभवितार एव द्वैतद्रष्टार इति स्थितेऽपि मोक्षस्य कादाचित्कत्वेन अनित्यत्वप्रसङ्गे किं समाधानं भवति इति शङ्कते किमत इति समाधत्ते। इदमिति एतदेव स्पष्टयति। एतेषामिति आविर्भावोऽभिव्यक्तिः अनुभव इति यावत्। तथाच नित्य एव मोक्षः परन्तु प्रतिबन्धवशात् न अनुभूयते यथा अन्धकारप्रतिबन्धादपवरकदेशावस्थितो घटादिरिति द्वैतदर्शनं न मोक्षाविर्भावप्रतिबन्धकं तस्मिन् न असत्यपि मम मोक्षाविर्भावादर्शनादिति शङ्कते अस्तु तर्हि इति। द्वैताद्रष्टृत्वमसिद्धमिति वक्तुं पृच्छति तर्हि त्वं किमिति। किं शब्दसूचितं द्वैतद्रष्टृभ्यो भिन्नत्वपक्षं विनैव अङ्गीकुरुते

अहो आश्चर्य्यंताननेकविधानेव देवतिर्य्यङ्-मनुष्यादिभेदभिन्नान् पश्यन् द्वैतं न पश्या-मीति वदत स्ते वचः कथं श्रद्धेयं स्यात् नहि मुमुक्षोः सन्न्यासिनस्तत्त्वबुभुत्सोरिदमुचितं यद-सत्याभिधानमिति। ननु त्वत्तोऽभिन्न एव अहं तथा च मम असत्याभिधानमापादयतस्तवैव अस-त्याभिधानमायातीति चेत्? तर्हि कोऽहं त्वया आत्मत्वेन दृष्टः किं स द्वितीयोऽद्वितीयो वा?

कः संशय इति। भिन्नत्वम् उपपादयति न हीति। हिशब्द-सूचितां सुखदुःखव्यवस्थानुपपत्तिं तत्र प्रमाणयति तेषामिति।

द्रष्टृभेदे प्रमाणमुपन्यसता द्वैतानुभवितृत्वम् आत्मनि त्वया व्यवस्थापितं तथाच द्वैताद्रष्टृत्वम् आत्मनि वदता मिथ्याभाषित्वमिति शिष्यमुपालभते अहो इति। ननु पर-व्यामोहार्थं कथायामयथार्थमपि वक्तव्यं तत्राह न हीति। इह शब्दार्थमाह यदसत्येति। तर्हि त्वं किमित्यत्र किं शब्दसूचितं द्रष्टृभेदपक्षं पराकृत्य तदभेदपक्षमुत्थापयति। ननु त्वत्त इति। अभिन्न इति पदच्छेदः त्वत्त इति पदेन व्यवस्थानुपपत्तेः औपाधिकं भेदमादायापि प्रतिबिम्बभेदानामिव चलनादिव्यव-स्थावदुपपत्तेः न स्वाभाविकात्मभेदप्रमापकत्वमिति सूचितम्। तथाच उपालम्भार्हो न भवामीति पक्षान्तरस्वीकारफलमाह तवाच इति। एतदङ्गीकृत्य गुरुराह तर्हि इति। यदि द्वैत-द्रष्टा त्वत्तो वस्तुतो न अतिरिच्यते किन्तु त्वदात्मैव तथा

यदि आद्यस्तर्हि अयमपि अपरो दोषो यत्त्वं विद्वांसं तवैव आचार्य्यं मां ब्रह्मरूपेण पर्य्यवसितं द्वैतवार्त्तानभिज्ञं सद्वितीयं कल्पयसि एकमेव अद्वितीयं न इह नानास्ति किञ्चन इति शास्त्रविरोधश्च। अस्तु तर्हि अद्वितीयपक्ष उक्तदोषविरहादिति चेत्। हन्त तर्हि कुतो मामद्वितीयमात्मत्वेन ज्ञातवानसि। त्वद्वचनात् उदाहृतशास्त्राच्चेति चेत्? एवं तर्हि प्रबुद्धोऽसि न अतः परं प्रष्टव्यमस्ति नहि आत्मनि विदितेऽपरमविदितं वस्तु अस्ति यत् प्रष्टव्यं स्यात्। अस्त्यनात्मेति चेत्? न, आत्मनो वा अरे दर्शनेन श्रुत्या मत्या विज्ञानेन इदं सर्वं विदितमिति श्रुत्या आत्मदर्शनेन इतरत्सर्वं

सति मम आत्मत्वेन पश्यन् कीदृशं पश्यसि इत्यर्थः। किं शब्दार्थमाह किमिति।

आद्यमुपालम्भेन निराकरोति यदि आद्य इत्यादिना। आत्मनः सद्वयत्वदर्शने श्रुतिविरोधमपि आह एकमेव इति। द्वितीयमङ्गीकर्त्तुमनुवदति अस्तु तर्हि इति। उक्तदोषस्य असत्यभाषणादेरनवकाश इत्यर्थः। एतत् तर्हि पूर्णात्मदर्शनं तव कुतो वृत्तमिति आचार्य्यः पृच्छति। हन्त! तर्हि इति। शिष्य आह त्वद्वचनादिति पूर्वोक्तात्। प्रत्युक्तिरूपाद्वचनादित्यर्थः। वचनस्य

दृष्टं भवतीति उक्तत्वात्। ननु इदमनुपपन्नं यदात्मदर्शनेन इतरत्सर्वं दृष्टं भवतीति कुत इति चेत्? तथा हि किमितरत्सर्वमात्मनो भिन्नमभिन्नं वा?

नाद्यः अन्यदर्शनेन अन्यस्य द्रष्टुमशक्यत्वात् नहि घटे दृष्टे पटो दृष्टो भवतीति शक्यं वक्तुम् अन्यथा तयोरभेदापत्तेः। न द्वितीयः

युक्तिप्रतिपादकत्वेन उपजीव्यप्रमाणापेक्षायां तदाह उदाहृतशास्त्रादिति। उदाहृतं शास्त्रमेकमेव अद्वितीयमित्यादिशास्त्राद्युक्त्युपकृतात् च अद्वैतात्मसाक्षात्कारो जातः तर्हि ज्ञातव्यान्तरस्य अभावादतः परं प्रश्नो न युज्यते इत्याह एवं तर्हि इति। ज्ञातव्यान्तराभावमाक्षिपति अस्ति इति। श्रुत्यात्मवेदनेन सर्वस्य विदितत्वोक्तेः अज्ञातवस्तुनोऽभावात् न विज्ञेयान्तरमस्ति इति परिहरति न आत्मन इत्यादिना। दर्शननामविचारप्रयोजकं ज्ञानं तत्प्रयोज्यो यो विचारः सोऽत्र श्रुतिशब्दार्थः। तया श्रुत्या सत्या मननेन च उत्पन्नं यद्विशेषरूपमपरोक्षसाक्षात्कारलक्षणं ज्ञानं तदत्रविज्ञानं तेन इत्यर्थः।

ननु किं श्रुत्युक्तमित्येव ग्राह्यम्? उत योग्यं? नाद्यः, शिलाप्लवनस्यापि स्वीकर्त्तव्यत्वापत्तेः योग्यं चेत् तत्र योग्यतामाक्षिपति ननु इति।

प्रपञ्चस्य आत्मभेदपक्षं दूषयति नाद्य इत्यादिना। अनात्मात्मनोरभेदपक्षं दूषयति न द्वितीय इति। प्रत्यक्ष-

आत्मानात्मनोर्विरोधात् परमार्थसत्यात्माऽभिन्नस्य नेति नेति इत्यादिना निषेद्धुमशक्यतया बाधानुपपत्तेश्च अन्यथा आत्मनोऽपि बाधिततया शून्यमेव अवशिष्येत। तस्मात् आत्मदर्शनेन सर्वमेव दृष्टं भवति इति अनुपपन्नम्। नैषदोषः।

आत्मसत्तैव द्वैतस्य सत्ता नान्या यतस्ततः।
आत्मन्येव जगत्सर्वं दृष्टे दृष्टं श्रुते श्रुतम् ५६॥

आत्मसत्तातिरिक्ताया द्वैतसत्ताया अभावात् आत्मनि दृष्टे सर्वं द्वैतं दृष्टं भवति यथा रज्जुस्वरूपे दृष्टे तत्र अध्यस्तानां स्रग्दण्डादीनां स्वरूपं दृष्टं भवति तद्वत् आत्मनि दृष्टे सर्वं दृष्टं भवतीति न अनुपपन्नम्।

पराक्तेन आत्मानात्मनोः स्वभावविरोधादित्यर्थः। किञ्च आत्मानात्मनोरभेदे आत्मनि अनात्मा प्रविशति अनात्मनि आत्मा वा? आद्यं दूषयति परमार्थेति। द्वितीयं दूषयति अन्यथेति। अधिष्ठानस्वरूपमेव अध्यस्तस्वरूपम् अधिष्ठानपार्थक्येन अध्यस्तस्वरूपानिरूपणादिति घटविचारादावनेकशो निरूपितं तथाच जगदधिष्ठानात्मस्वरूपे विदिते जगत्स्वरूपं विदितमिति युक्त्या जगतोऽपि ब्रह्मात्मैक्यविज्ञानात् विदितत्वं सम्भावितं योग्यं तया श्रुतिः प्रमायपयत्येव इति गुरुः उत्तरमाह नैषदोष इत्यादिना।

अत एव विधिनिषेधशास्त्रयोरपि न अनुपपत्तिः तत् यथा इदं सर्वं यदयमात्मा सदेव सौम्येदमग्र आसीदेकमेव अद्वितीयम् ऐतदात्म्यमिदं सर्वम्। ब्रह्म वा इदमग्र आसीत्। अहं मनुरभवं सूर्य्यश्चेति। यत्र तु अस्य सर्वमात्मैव अभूत्। नारायण एव इदं सर्वं यद्भूतं यच्च भाव्यम् इत्यादिविधिशास्त्रं तथा निषेधशास्त्रमपि न इह नाना अस्ति किञ्चनेति अथ अत आदेशो न इति न इति न हि एतस्मादिति न

सत्तास्वरूपं नतु पराभिमतं सत्तासामान्यं तस्य विशेषसापेक्षत्वेन परमार्थत्वानुपपत्तेः अतएव दृष्टान्ते स्वरूपशब्देनैव व्यवहरति।

उक्तयुक्त्या आत्मव्यतिरिक्तत्वेन अभिमतस्य सर्वस्यात्मरूपत्वे तद्व्यतिरेकेण च असत्त्वे सम्भाविते विधिशास्त्रं निषेधशास्त्रञ्च उपपन्नमित्याह अतएव इति। विधिशास्त्रमुदाहरति तत् यथेति। यत् ब्रह्म जात्यादि जगत्प्रत्यक्षाद्युपस्थापितं तत्सर्वमात्मा एकमेव आसीत् कार्य्यजातं नैव आसीदित्यर्थः। आत्मभेदे यन्निमित्तं तत्प्रतिषेधति अद्वितीयमिति। यत्र यस्यां निर्विशेषावस्थायाम्। अथात इति। अथ सत्यस्वरूपनिरूपणानन्तरं यस्मात् यत् सत्यस्य सत्यं तदेव निरूपणीयमवशिष्यते ततस्तस्मादादेशो ब्रह्मण इति आदेशो निर्देशः स्वरूपप्रतिपादनमिति यावत्। तत्र शब्द-

इति अन्यत् परमस्ति। अतोऽन्यदार्त्तम्। न तु तत् द्वितीयमस्ति नैव इह किञ्चन अग्र आसीत्। नासदासीन्नोऽसदासीदित्यादि। भवति हि लोके रज्ज्वां स्रगाद्यध्यासिनं प्रत्युपदेश इदं सर्वं रज्जुरिति न इह स्रगादिरस्तीति तथापि उभयोरुपदेशयोर्मध्ये कतरः श्रेयानिति चेत्? यद्यपि उभयोरेकार्थत्वमेव तथापि विधेरस्ति कश्चित् अतिशयः।

तत्र हि परिदृश्यमानानां या सत्ता सा आत्मैव इति उक्ते तदन्यत् नास्त्येव आत्मैव परिपूर्ण इति ज्ञानं साक्षादेव आविर्भवति निषेधे तु अर्थात् निषेधाधिष्ठानतया। कथं तर्हि उभयप्रवृत्तिः विधिनैव पुरुषार्थस्य पर्य्यवसितत्वादिति चेत्? न अधिकारिभेदेन उभयोरुपयोगात्। कश्चिद्धि संसारदुःखेन अत्यन्तमुपहतचेतास्तन्निवृत्तिमेव प्रथमतः कामयते तं प्रति आदौ निषेधवाक्यमेव उपयुक्तं विधिवाक्यं तु पश्चात् यथा

प्रवृत्तिनिमित्ताभावात् इदं तदिति निर्वक्तुमशक्यत्वेऽपि प्रपञ्चापवादेन अवधिभूतमधिष्ठानं ब्रह्म स्वरूपमिति निर्दिशति नेति इति। वीप्सा व्याप्त्यर्था यद्यत् प्राप्तं तत् तन्निषिध्यते

सर्पमारोप्य भिया कम्पमानं प्रति नायं सर्प इति निषेध एव आदौ न तु विधिः। यस्तु अत्यन्तमनुद्विग्नः किमस्य जगतस्तत्त्वमिति एवं जिज्ञासते तं प्रति इदं सर्वं यत् अयमात्मा इत्येव उत्तरं न्याय्यं निषेधस्तु पश्चात्।

यथा सर्पमध्यस्य तत् प्रतीकारज्ञानान्निर्भयः पृच्छति किमिदं पुरोवर्त्तीति तं प्रति रज्जुः इत्येव उत्तरं न तु निषेधः। तस्मात् अवस्थाभेदेन उभयोरुपयोगात् न कस्यापि वैयर्थ्यमतो विधिनिषेधाभ्यां परिपूर्णसच्चिदानन्दः प्रत्यगात्मेति सिद्धम्।

ननु तथापि कोऽसौ द्वैतद्रष्टेति अद्यापि न निश्चितम् इति चेत्? यस्त्वं पृच्छसि, कोऽहमिति चेत्? ब्रह्मैव। एवं तर्हि ब्रह्मणो

इत्यर्थः। हि यस्मान्नेति नेति इत्येतस्मादपरं निर्देशनं नास्ति तस्मादयमेव आदेशो युज्यते इत्यर्थः। इतराः श्रुतयः स्पष्टार्थाः। भवति हि इत्यारभ्य प्रत्यगात्मेति सिद्धमित्यन्तो ग्रन्थः स्पष्टार्थः।

ननु यद्यपि द्वैतद्रष्टारो वस्तुतो मत्तो नातिरिच्यन्ते इति पक्षे अद्वैतात्मसाक्षात्कारस्य सिद्धत्वादात्मव्यतिरिक्तानात्मस्वरूपाभावात् सर्वस्य विदितत्वात् प्रष्टव्यं न अवशिष्यते इत्युक्तं

विकारित्वापत्तिरिति चेत्? कोऽयं विकारो द्वैतं तद्दृष्टिर्वा। नाद्यः द्वैतस्य सर्वस्य ब्रह्मातिरिक्तस्य निषिद्धत्वात् नहि यत् नास्ति तत् कस्यचित् परिणामः यथा नरशृङ्गम्। ततोऽस्य वैल-

तथापि द्वैतद्रष्टा न निर्णीत इति शङ्कते ननु तथापीति। इदानीं गुरुस्त्वं चेत् द्वैतद्रष्टृभ्यो न भिद्यसे तर्हि भवानेव द्वैतद्रष्टेति प्रश्नोत्तरमाह यस्त्वमिति। आत्मस्वरूपमजानन् पृच्छति कोऽहमिति किं संसारिस्वभावः? उत तद्विलक्षणः? इति। यद्यपि देहादेरात्मत्वं पराकुर्वता कर्त्तृत्वादिप्रपञ्चस्य मिथ्यात्वम् आवेदयता च ब्रह्मरूपता आत्मनो निर्णीतैव तथापि पदार्थशोधनेन अर्थादैक्यमात्मब्रह्मणोः सिध्यति, इह तु शब्दत एव वक्तव्यमिति तदर्थमारम्भो युज्यते इति शोधितपदार्थाय अधिकारिणे प्रसन्नाय कृपापरवशो गुरुराह ब्रह्मैव इति। द्वैतद्रष्टुर्मम ब्रह्मणश्च अभेदे ब्रह्मणि कौटस्थ्यभङ्गं शङ्कते एवं तर्हि इति। यद्यपि विकारजातम् अविद्यकमिति बहुशो निर्णीतं तथापि प्रकारान्तरेण अपि तन्निर्णेतुमुपक्रम इति भावः।

ब्रह्मणो द्वैतद्रष्ट्रभेदे विकारित्वं वदन् प्रष्टव्यः द्वैतद्रष्टरि पदार्थत्रयं वर्त्तते द्वैतं तद्दृष्टिः स्वरूपं च, तदभेदे स्वरूपाभेदेन परिणामित्वं प्रयुङ्क्ते किं द्वैतं तद्दृष्टिर्वेति तत् सर्वथाऽपि अयुक्तमिति वक्तुं विकल्पयति कोऽयमिति। निषिद्धत्वात् न इति न इति इत्यादिवाक्यैरिति शेषः। ननु भूतले घटो न अस्तीति निषिद्धोऽपि घटो यथा मृद्विकारस्तथा द्वैतं निषिद्धमपि कस्य

क्षण्यं दृष्टिरेव इति चेत्? तर्हि प्राप्ताप्राप्त-विवेकेन दृष्टिरेव परिणामोऽस्तु तद्व्यतिरिक्त-दृश्याभावात्।

ओमिति चेत्? न दृष्टेः फलरूपाया आत्म-रूपान्तर्भावेन तत्परिणामत्वानुपपत्तेः नहि स्वयं स्वस्य परिणामः कात्स्न्यैकदेशविकल्पेन

चिद्विकारः किं न स्यात् इति तत्राह नहि इति। घटस्य न सर्वथा निषेधः प्रपञ्चस्तु अधिष्ठानात् अन्यत्र नास्त्येव अधि-ष्ठाने चेत् निषिद्धस्तर्हि असत्त्वात् न परिणाम इति। अत्रैव उचितं दृष्टान्तमाह यथेति। नरशृङ्गात् प्रपञ्चस्य वैलक्षण्यं शङ्कते तत्र इति। अस्य द्वैतस्य इत्यर्थः। दृष्टिरपरोक्षप्रत्यय-स्ततोऽसद्वैलक्षण्याद्विकारत्वं द्वैतस्य युज्यत इत्यर्थः। विल-क्षणस्य भावो वैलक्षण्यं विलक्षणताप्रयोजको धर्मो दृष्टिरि-त्यर्थः। तर्हि प्रपञ्चस्य विकारत्वे द्वैतत्वं न प्रयोजकं किन्तु दृष्टिसम्बन्धित्वं तथाच सविशेषणे हि इति न्यायेन दृष्टौ प्राप्तायां द्वैतस्य विकारत्वमप्राप्तायां न इति सैव तर्हि विका-रोऽस्तु इति दृष्टिपक्षमपि निराकर्त्तुं गुरुः अङ्गीकारयति तर्हि इति। किञ्च ज्ञानज्ञेययोर्भेदस्य प्राक्निरस्तत्वात् परिशेषा-दपि दृष्टिरेव विकार इति हेत्वन्तरमाह तद्व्यतिरिक्तेति।

अङ्गीकारितमर्थं शिष्यः अङ्गीकरोति ओमिति। दृष्टिशब्देन किं वृत्तिरुच्यते? उत विषयाभिव्यक्तं फलाभिधं चैतन्यं? नाद्यः तस्याः स्वतो जड़त्वेन प्रकाशकत्वानुपपत्तेरदृष्टित्वात्

परिणामपक्षानुपपत्तेश्च । ननु विवर्त्तपक्षेऽपि अयं दोषः समान इति चेत् ? न, विवर्त्तस्वरूपापरिज्ञानात् नहि अधिष्ठानस्वरूपातिरिक्तं विवर्त्तो नाम किञ्चिद्वस्तु अस्ति यदाश्रित्य कार्त्स्न्यैकदेशविकल्पावतारः स्यात् किन्तु अधिष्ठानमेव दोषवशाद्विलक्षणाकारेण भासमानं विवर्त्त इति उच्यते । स एव विलक्षणाकारः कस्येति चेत् ? वस्तुतो कस्यापि अधिष्ठाने तस्य बाधात् अन्यत्र अप्रतीतेः । भङ्ग्यन्तरेण असत्ख्यातिव्युत्पादनमेव एतदिति चेत् ? न, ख्यातेरपि अध्यस्तत्वात् असत्ख्यातिवादिना च चार्वाकेण

इत्याह न इति । न द्वितीय इत्याह दृष्टेरिति । तत् परिणामत्वे आत्मपरिणामत्वे च अनुपपत्तिं स्पष्टयति नहि इति । किञ्च आत्मा परिणमते चेत् ? तर्हि सामस्त्येन सर्वात्मना ? उत एकदेशेन ? नाद्यः आत्माभावप्रसङ्गात् । न द्वितीयः निरवयत्वादिति । हेत्वन्तरमाह कार्त्स्न्यैकदेशेति । अयं दोषः कार्त्स्न्यैकदेशविकल्पाख्यः कस्तर्हि विवर्त्तशब्दार्थं इति शङ्कते किन्तु इति । किं प्रातीतिकाकारः ? कस्येति पृच्छ्यते ? उत वास्तवः ? आद्ये अधिष्ठानस्य इति असकृत् निवेदितम् । द्वितीयं दूषयति वस्तुत इति । आत्मनो वास्तवो न आत्माकारत्वं न इति न इति इत्यादि बाधात् न सम्भवति । आत्मनः अन्यत्र अप्रतीतेरेव तस्य अन्यत्र

तथा अनभ्युपगमात् सर्वशून्यवादिनस्तु पूर्वं निरस्तत्वात्।

किमिदं ख्यातेरध्यस्तत्वमिति चेत् वस्तुतो निष्प्रकारिकायाः सप्रकारकत्वेन भानमेव इति गृहाण। तस्यैव प्रकारस्य स्वरूपं वाच्यमिति चेत्? वस्तुतो निर्विकल्पकख्यातिस्वरूपमेव। तथैव तर्हि प्रत्येतव्यमिति चेत्? उचितमेव तद्विज्ञस्य न तु भ्रान्तस्य तस्य भ्रान्तत्वादेव। किं तेन अधिकं प्रतीतमिति चेत्? न, किमपि। कथमसौ भ्रान्त इति चेत्? अन्य-प्रतीतेरन्यविषयत्वाभिमानादेव यथा लोके

असत्त्वमिति न वास्तवो विलक्षणाकारः कस्यापि इत्यर्थः। यद्वा असत्ख्यातिवादी शङ्कते अधिष्ठान इति। असत्ख्यातेः उपपादनमेतद्ङ्ग्यन्तरेण विवर्त्तवादव्याजेन इत्यर्थः। ख्याते-रिति परेषां मते ज्ञानं न अध्यस्तमस्माकं तु तदपि अध्यस्त-मिति न सर्वात्मना साम्यं तदभावे च न परसिद्धान्तापत्ति-रित्यर्थः। निरस्तत्वादिति न विज्ञातुरात्मत्वादित्यत्र इत्यर्थः।

ननु ख्यातिर्नाम आत्मचैतन्यं तस्यापि अध्यस्तत्वे शून्यताप्रस-क्तिरिति अभिप्रेत्य शङ्कते किमिदमिति। न स्वरूपेण रजतवत् ख्यातिरध्यस्तेति ब्रूमः किन्तु आकारान्तरेण भासमानत्वात् इत्याह वस्तुत इति। आकारान्तरस्वरूपं यदि आत्मैव तर्हि तद्रूपेणैव प्रतीतिः किं न स्यात्? इति शङ्कते तथैव इति।

रज्जुं प्रत्येति सर्पमभिमन्यते अयं सर्प इति। कोऽसावभिमान इति चेत्? परमार्थस्थितविषयस्य भासमानस्यापि असत्त्वनिश्चयः। यदि वस्तुतो रज्जुप्रत्यय एव कथं तर्हि सर्पोल्लेखितया स प्रत्ययः परिस्फुरति इति चेत्? आकारसाम्यात् दोषवशाच्चेति वदामः।

अत एव बाधोत्तरं मन्यते रज्जुरेव सर्पतया मया प्रतिपन्नेति। तत् किं सर्पो न प्रतिपन्न एव। कः संशयः। एवं तर्हि अनुभवविरोध इति चेत्? न, भ्रान्तानुभवविरोधेऽपि अविरोधात् तस्य किं प्रतीतं किं न प्रतीतमिति विवेकविरहात् अभ्रान्तस्य तदनुभवाभावेन अनुभवविरोधाभावात्।

द्वैतस्वरूपमात्मेति एवं प्रतीतिः किम् उत्पन्नात्मा अपरोक्षज्ञानस्य? उत अन्यस्य? आद्ये इष्टापत्तिरित्याह उचितमिति। द्वितीयं दूषयति ननु इति। अन्यथाकारप्रतीतिकाले स्वरूपप्रतीतेर्विरोधादयोग इति भावः। ननु भ्रान्तिज्ञानविषयोऽधिष्ठानाधिकः कश्चिदस्ति न वा? न चेत्? कथं भ्रान्तत्वम्? अस्ति चेत्? तत्स्वरूपस्य वक्तव्यत्वापत्तेरित्येभिप्रेत्य शङ्कते तस्येति। द्वितीयमङ्गीकृत्य परिहरति न किमपि इति। रज्जुविषयप्रत्ययस्य सर्पाकारत्वं कुत इति पृच्छति यदीति। सादृश्यादिति हेतुमाह

ननु एवं सति अधिष्ठानं तत् प्रतीतिश्चेति द्वयमेव दृष्टान्ते अतिरिक्तप्रतीतिप्रत्येतव्ययोरसत्त्वस्य व्युत्पादनात् दार्ष्टान्तिके तु अधिष्ठानं तत्प्रतीतिश्च द्वयमपि आत्मैव स्वयम्प्रकाशे प्रतीत्यन्तरानभ्युपगमात् तथा च तद्व्यतिरिक्तस्य विवर्त्तस्य दर्शयितुमशक्यतया गतं विवर्त्तवादेन ततोऽतिस्फुटः स्वसिद्धान्तपरित्याग इति चेत्?

न। तस्य बालव्युत्पत्तिमात्रप्रयोजनतया उपनिषत्तात्पर्य्याविषयत्वात् अन्यथा विपरीत-

आकारेति। तर्हि आत्मनि अन्याकारप्रतीतिर्न स्यात् निरवयवत्वेन अनात्मसादृश्याभावादिति तत्राह दोषेति। अज्ञानवशादित्यर्थः। अतएव इतारभ्य अनुभवविरोधाभावात् इत्यन्तो ग्रन्थः स्पष्टार्थो निगदव्याख्यातः।

ननु एवमिति रज्जुरेव प्रतिपन्ना न सर्पः इत्येवं व्युत्पादने सति दृष्टान्ते प्रामाणिकानुभवानुरोधेन अधिष्ठानं रज्जुस्तद्विषयिणी प्रतीतिश्चेति द्वयमेव वर्त्तते न सर्पो नापि सर्पविषयानुभवो भ्रान्तप्रतीतेरनादरणीयत्वात् दार्ष्टान्तिके तु स्वप्रकाशे चिदात्मनि अधिष्ठाने तद्विषयिणी द्वितीयप्रतीतिरपि न अस्ति तथा सति अधिष्ठानमेव स्वरूपमपरित्यज्य रूपान्तरेण आभासमानं विवर्त्तत इति पक्षो गतः रूपान्तरस्य अभावात् भानकर्त्तृत्वस्यापि अभावादिति शिष्योऽपसिद्धान्तेन गुरुं निगृह्णाति इत्यर्थः।

परिहरति बालेति। मध्यमोऽधिकारी अत्र बालश-

दृष्ट्यैव द्वैतापत्तेः। मिथ्यैव सा दृष्टिरिति चेत्? किमिदं मिथ्यात्वं त्रैकालिकासत्त्वम् असत्त्वाविशेषेऽपि कदाचित् प्रतीयमानत्वं वा। नाद्यः इष्टापत्तेः। न द्वितीयः तत् प्रतीत्यैव अद्वैतक्षतेस्तादवस्थ्यात्। साप्येव तत् प्रतीति-

ब्द्यर्थः। सोपानारोहणन्यायेन अद्वैतचैतन्ये बुद्धिप्रवेशार्थं प्रपञ्चमारोप्य निषेधन्ती श्रुतिर्विवर्त्ते पर्य्यवसितेत्युच्यते न वस्तुतोऽन्याकारप्रतीतिसद्भावप्रतिपादनपरा समन्वयविरोधात् तयैव प्रतीत्या आत्मवत् प्रामाणिकया द्वैतापत्तेस्ततः कथमपसिद्धान्त इत्यर्थः। द्वैतापत्तौ परिहारं शङ्कते मिथ्यैव इति। सतो द्वितीयस्य अभावात् न द्वैतापत्तिरिति असत्त्वेति। असत्त्वं मिथ्येत्युक्ते गगनकमलादावतिव्याप्तिस्तन्निवारणाय कदाचित् प्रतीयमानत्वमिति कादाचित्कप्रतीतिविषयत्वमिति यावत् प्रतीतिरत्र अपरोक्षा विवक्षिता असत्त्वं नाम सद्विलक्षणत्वं कादाचित्कप्रतीतिविषयत्वं वृत्तिव्याप्यत्वेन आत्मनि अपि अस्ति इति तदर्थं विशिनष्टि असत्त्वाविशेषेऽपि इति। कदाचिदिति स्वरूपकीर्त्तनं व्यावर्त्त्याभावात् सद्विलक्षणे सति अपरोक्षप्रतीतिविषयत्वमिति एतावतैव चरितार्थत्वादिति त्रैकालिकासत्त्वप्रतीतिर्मिथ्यात्वमिति आद्यपक्षमिष्टापत्त्या दूषयति नाद्य इत्यादिना। द्वितीयं मिथ्यात्वलक्षणं दूषयति न द्वितीय इति। तत्र हेतुः तत्प्रतीत्येति। अयं सर्प इत्याकारप्रतीतेर्मिथ्यात्वं निर्वचता प्रतीतिविषयकं प्रतीत्यन्तरमवश्यं वाच्यं प्रतीतिकर्मघटितत्वात् लक्षणस्य तथाच तदपि प्रतीत्यन्तरं

रिति चेत्? न, तस्य असङ्गत्वात् असङ्गो ह्ययं पुरुष इति श्रुतेः साक्षिणः कादाचित्कत्वानुपपत्तेश्च।

किञ्च आत्मनो द्वैतदृष्टिः प्रमाणसिद्धा वा? नाद्यः अद्वैतागमविरोधात्। न इतर भ्रान्तिसिद्धपदार्थस्य असत्त्वनियमात्। अन्यथा

किं मिथ्या? उत पारमार्थिकम्? उत तुच्छम्? नाद्यः, अनवस्थापत्तेः नान्त्यः तद्वदेव आद्यप्रतीतेरपि तुच्छत्वापत्तेः नापि मध्यमः द्वैतापत्तेरित्यर्थः। आद्यप्रतीतेर्मिथ्यात्वनिर्वाहाय तद्विषयकं प्रतीत्यन्तरं स्वीक्रियते न च अनवस्थाप्रतीत्यन्तरस्य साक्षिरूपत्वात् तस्याश्च स्वप्रकाशत्वात् नापि द्वैतापत्तिरात्मत्वादेव इति शङ्कते। साक्ष्येवेति। साक्षिशब्देन अविद्यावृत्त्यारूढं चैतन्यमुच्यते? उत शुद्धम्? नाद्यः, विशिष्टस्य मिथ्यात्वात् पारमार्थिकत्वे विशेषणवृत्तेरपि पारमार्थिकत्वप्रसङ्गः तथाच अनवस्थातादवस्थ्यं न च वृत्तिफलितं चैतन्यं स्वस्वरूपं वृत्तिञ्च भासयिष्यति स्वप्रकाशत्वादिति वाच्यं प्रतीयमानत्वशब्देन प्रतीतिकर्मत्वस्य उच्यमानत्वात् अभेदे च तदसम्भवात्। अथ शुद्धं चैतन्यं साक्षिशब्दार्थः। तर्हि साक्षी स्वसङ्गिनमर्थं भासयति? उत असङ्गिनमपि? नाद्यः, तस्य असङ्गित्वादित्याह तस्येति। द्वितीयं दूषयति साक्षिण इति। प्रदीपादौ स्वसम्बद्धार्थावभासकत्वदर्शनादिति सूचयितुं चकारः।

किञ्च इत्यादिग्रन्थो व्याख्यातार्थः। आत्मनि द्वैतदृष्ट्य-

भ्रान्तित्वानुपपत्तेः। तथाच आत्मनो द्वैतदृष्टिः कदाचिदपि नास्त्येव। तथा च श्रुतिः यद्वै तन्न पश्यति पश्यन् वै तन्न पश्यति इत्यादि आत्मनोऽविलुप्तदृष्टिस्वभावस्य द्वैतदृष्टिं वारयति।

बालान् प्रति विवर्त्तोऽयं ब्रह्मणः सकलं जगत्।
अविवर्त्तितमानन्दमास्थिताः कृतिनः सदा॥

इति स्मृतिरपि आत्मनो द्वैतदर्शनाभावमनुमन्यते।

ननु आत्मनो द्वैतदर्शनाभावे नित्यमुक्तस्य असंसारिणः शास्त्रसाध्यप्रयोजनशून्यतया शास्त्रानर्थक्यप्रसङ्ग इति चेत्? न, नित्यमुक्तस्य असंसारिणः अत्यन्तासत्संसारनिवर्त्तकत्वेन शास्त्रप्रामाण्योपपत्तेः। अत्यन्तासतो नित्यनिवृत्ततया तत्र शास्त्रव्यापारः अनर्थक इति चेत्?

भावं प्रमाणयति तथाच इति। श्रुतिः पूर्वमेव व्याख्याता तत्रैव प्रमाणत्वेन वाक्यान्तरमुदाहरति।

बालान् प्रति इति। बालपदं व्याख्यातं कृतिनः उत्तमाधिकारिणः इति यावत्।

सविलासाज्ञानस्य त्रैकालिकासत्त्वपक्षे तत्त्वमस्यादिवाक्यवैयर्थ्यं शङ्कते ननु इति। तत्त्वमस्यादिशास्त्रं किं प्रत्यग्ब्रह्मात्मैक्यं

न सत्यस्यापि तुल्यत्वात् नहि सन्निवर्त्तयति शास्त्रमिति क्वचिद् दृष्टम्। अनिर्वचनीयं निवर्त्तयितुं शास्त्रमिति चेत्? न, तत्रापि अदर्शनस्य तुल्यत्वात् नहि अनिर्वचनीयं निवर्त्तते इति उभयसंप्रतिपन्नं स्थलमस्ति तस्मात् विमुक्तश्च विमुच्यते निवृत्तं च निवर्त्तत इत्यादिशास्त्रात् अत्यन्तासत्संसारनिवर्त्तकत्वेनैव शास्त्रप्रामाण्यम्।

भासयति? उत तदज्ञानादि निवर्त्तयति? नाद्यः, तस्य स्वप्रकाशत्वात्। न द्वितीयः, अत्यन्तासतो नित्यनिवृत्तत्वात्। तथाच शास्त्रं व्यर्थं स्यादित्यर्थः। द्वितीयपक्षमाश्रित्य परिहरति न इत्यादिना। नासीदस्ति भविष्यति इत्याकारबाधोत्पादकत्वमेव संसारनिवर्त्तकत्वम् नतु निवृत्तिः ध्वंसतः तस्य पूर्वं निराकृतत्वात् तदपि संसारनिवर्त्तकत्वं प्रत्यग् ब्रह्मैक्याकारापरोक्षवृत्त्युत्पादनद्वारेति भावः। अभिप्रायमविद्वानाशङ्कते अत्यन्तासत इति। असत् न निवर्त्तते चेत्? तत् किं सन्निवर्त्तत इत्युच्यते? उत अनिर्वचनीयं? न उभयथापीति सहेतुकमाह न सत्यस्यापि इत्यादिना।

स्थलमस्ति इत्यन्तः स्पष्टार्थः ग्रन्थः। ननु जगतोऽत्यन्तासत्त्वं तन्निवर्त्तकञ्च शास्त्रम् इत्येतत् तर्कितं नतु प्रमितमिति चोद्यं पराकुर्वन् शास्त्रस्य सार्थकत्वेन प्रामाण्यमुपसंहरति तस्मादिति। श्रुतेरर्थान्तरशङ्कानिवर्त्तकं संक्षेपशारीरकवाक्यमुदा-

नित्यबोधपरिपीड़ितं जगत्
विभ्रमं नुदति वाक्यजा मतिः।
वासुदेवनिहतं धनञ्जयो
हन्ति कौरवकुलं यथा पुनः॥

इति स्मृतिरपि जगदात्मकस्य विभ्रमस्य नित्यबोधस्वभावस्य आत्मनः स्वरूपं पर्य्यालोच्य अत्यन्तासत्त्वमेव आह। किञ्च ब्रह्मातिरिक्तं शास्त्रसत्त्वमस्तीति ये मन्यन्ते तान् प्रति भवतु शास्त्राप्रामाण्यप्रसङ्गो दोषः तस्य प्रमाणैकस्वभावत्वात्। ये तु मन्यन्ते सदा अद्वैतमेव अस्ति द्वैतवार्त्तानभिज्ञाः तान् प्रति कथमयं दोषः स्यात् तैः शास्त्रस्य वा तत् प्रामाण्यस्य वा ब्रह्मातिरिक्तस्य अनभ्युपगमात् अन्यथा ताभ्यामेव अद्वैतक्षतिः स्यात्। न च वेदप्रामाण्यान-

हरति नित्यबोधेति। बोधपीड़ितं बोधमहिम्ना तत्र असदित्यर्थः।

इममेव अर्थं स्पष्टयति जगदात्मकस्येति। किञ्च शास्त्रस्य आनर्थक्येन अप्रामाण्यापादनं द्वैतवादिनं प्रति वा अद्वैतवादिनं प्रति वा आद्ये तेषाम् उपालम्भोऽपि ब्रह्मात्मैक्यवादिनं प्रति तदापादनस्य अयोगात् द्वितीये ब्रह्मातिरिक्तं न किञ्चनापि सदिति कुत्र अप्रामाण्यम् आपाद्यते इत्याह

भ्युपगमे पाषण्डत्वप्रसङ्गः तदप्रामाण्यस्यापि अनभ्युपगमात्।

नच वेदप्रामाण्यानभ्युपगमे अद्वैतस्य अप्रामाणिकत्वप्रसङ्गो दोषः द्वैतदर्शिनं प्रति प्रमाणाधीनसिद्धिके आत्मनि च तस्य दोषत्वात्। ननु द्वैतदर्शित्वं किमात्मनो धर्मः स्वभावो वा? नाद्यः द्वैतापत्तेः। न इतरः द्वैतजातस्य सर्वस्य स्वतःसिद्धिप्रसङ्गादिति चेत्? न, श्रुतिसिद्धात्मस्वरूपानुरोधेन द्वैतजातस्य

किञ्च इत्यादिना। अनभ्युपगमादित्यन्तेन वेदप्रामाण्यानङ्गीकारे पाषण्डत्वापत्तिमुद्धरति न च इति। वस्तुतस्तु पाषण्डत्वम् आत्मातिरिक्तमत्यन्तासदेव इति तदापादनमेव अद्वैतवादिनं प्रति न युज्यत इति। ननु वेदस्य अप्रामाण्यानङ्गीकारेऽपि तत्प्रामाण्यमङ्गीक्रियते? न वा? आद्ये द्वैतापत्तिः, द्वितीये ब्रह्मात्मैक्यासिद्धिः प्रमाणाभावादिति न इत्याह।

नच इति। किमितस्थोऽयं द्वैतदर्शिनं प्रति? उत अद्वैतदर्शिनं प्रति? आद्ये किं नः छिन्नं द्वितीये प्रमाणप्रमेयभावस्यैव असिद्धिः यत्र तु अस्य सर्वमात्मैव अभूदिति श्रुतेः किञ्च प्रमाणं किमर्थं मृग्यते? प्रतीयते चेत्? न स्वप्रकाशत्वेनापि तत्सिद्धेः। अज्ञाननिवृत्तये चेत्? तथापि अद्वैतस्य सिद्धत्वेन तत्र अनपेक्षणात् न तस्य अप्रामाणिकत्वप्रसङ्ग इत्यर्थः। द्वैतदर्शिनं प्रति तस्य दोषत्वादित्युक्तं तदादाय शङ्कते। ननु द्वैतदर्शित्वमिति धर्मपक्षं

सर्वस्य तुच्छत्वात्। नहि तुच्छस्य स्वतःसिद्धिः सम्भवति तस्य निरस्तसमस्तसामर्थ्यस्य स्वतः परतो वा सिद्धुमशक्यत्वात्। ननु आत्मभिन्नस्य जगतस्तद्दर्शनस्य च तुच्छत्वं लौकिकानामभिमतं परीक्षकाणां वा?

नाद्यः तेषामबाधितत्वबुद्धेस्तत्र अव्याहत-

दूषयति नाद्य इति। धर्मः सन् असन् वा? नान्त्यः असतो बन्ध्यापुत्रस्य धर्मत्वादर्शनात् संश्चेत् द्वैतापत्तिरित्याह द्वैतापत्तेरिति। द्वितीये दर्शने द्वैतं विशेषणमेव वाच्यम् उपलक्षणत्वे दर्शित्वमेव आत्मस्वभावः स्यात् तच्च स्वदर्शित्वेन अपि उपपत्तेः द्वैतपदं व्यर्थं स्यात् तथाच द्वैतविशिष्टदर्शित्वस्य स्वभावत्वे स्वप्रकाशत्वं द्वैतस्यापि स्यादिति दूषयति न इतर इत्यादिना। द्वैतस्य आत्मस्वभावत्वे स्वतःसिद्धिः स्यादित्युक्तं तदनुपपन्नं किम् आत्मस्वरूपमिति कृत्वा स्वप्रकाशत्वम् आपाद्यते? किं वा स्वातन्त्र्येण? आद्ये इष्टापत्तिरात्मनः स्वप्रकाशत्वस्य सिद्धत्वात्। द्वितीये निहन्तव्य निवर्त्तते इति श्रुत्या आत्मभिन्नस्य तुच्छत्वबोधनात् पूर्णप्रतिपादकवाक्यसिद्धपूर्णात्मस्वरूपानुपपत्त्या च द्वैतस्य तुच्छत्वात् स्वतो वा परतो वा सिध्यनर्हत्वादिति नेति प्रतिज्ञायां हेतुमाह श्रुतीत्यादिना। श्रुतिसिद्धात्मस्वरूपानुरोधेन द्वैतस्य तुच्छत्वमुक्तं तदुपपादयितुं शङ्कते ननु इति। लौकिकाः शास्त्रासंस्कृतमतयः शास्त्रसंस्कृतमतयः परीक्षकाः।

ऐकमत्याभावमुपपादयति सर्वशून्यवादिना इत्यादिना।

त्वात् तुच्छत्वस्य दूरनिरस्तत्वात्। न द्वितरः परीक्षकाणां सर्वेषामेकमत्याभावात् सर्वशून्यवादिना निःशेषप्रमाणप्रमेयापलापिना अप्रमाणिकेन अशेषस्य तुच्छत्वस्वीकारात्। तद्विरुद्धस्य नित्यानित्यविभागेन सार्वत्रिककादाचित्कत्वस्य अक्षचरणकणभुगादिभिः स्वीकारात् तद्विरुद्धस्य च सर्वदा सर्वसत्यत्वस्य सांख्यादिभिः अभ्युपगमात् तस्मात् परीक्षकाणां सर्वेषां परस्परविप्रतिपत्तेरात्मातिरिक्तस्य तुच्छत्वमसम्प्रतिपन्नमेव। तथा च लौकिकपरीक्षकविरुद्धं जगतस्तुच्छत्वं कथमङ्गीकारपथमारोहति नच परीक्षकाणां मतमपि प्रत्येकं परस्परविरुद्धतया हेयमेवेति वाच्यं तावताऽपि एकैकाङ्गीकारस्य तत्र तत्र अव्याहतत्वात् तुच्छत्वे तदभावात्।

तद्विरुद्धस्य शून्यत्वविरुद्धत्वस्य नित्ये सार्वत्रिकं सत्त्वम् अनित्ये कादाचित्कमिति विभाग इत्यर्थः।

द्वैविध्यसत्त्वविरुद्धं साङ्ख्यादिमतमित्याह तद्विरुद्धेति। विरुद्धत्वमेवाह सर्वदा सर्वसत्यत्वस्येति। सत्कार्य्यवादस्वीकारात् न तावत् प्रागसत्त्वं वर्त्तमानकाले सत्त्वादेव न असत्वं ध्वंसस्य च तिरोधानमात्ररूपत्वात् तस्यामपि अवस्थायां सत्त्वात् सर्वदा सत्त्वमिति साङ्ख्यमतं तथा पातञ्जलादीनां संग्रहाय आदिपद

नच अत्रापि ममाङ्गीकारोऽस्ति एव इति वाच्यं ? तव अप्रामाणिकत्वात् तुच्छत्वग्राहकप्रमाणाभावात्। नच परीक्षकाणामपि परस्परविरुद्धानां मध्ये कस्य मतं समीचीनं कस्य असमीचीनमिति विनिगमकाभावात् एकमपि न ग्राह्यमिति वाच्यं नित्यनिर्दुष्टवेदमूलकत्वभावाभावाभ्यां विशेषात् यस्य हि मतं वेदमूलं तत् ग्राह्यं यस्य तु तत् नास्ति तत् त्याज्यं यथा पाषण्डानां मतम्।

तुच्छत्वासम्प्रतिपत्तेः फलमाह तथाच इति। तत्र तत्रेति शून्ये तथा सर्वदासत्त्वकादाचित्कसत्त्वपक्षादौ तदभावादिति एकैकाङ्गीकारस्यापि अभावादित्यर्थः। तुच्छेऽपि परीक्षकाङ्गीकाराभावोऽसिद्धः।

मम परीक्षकस्य तत्राङ्गीकारसत्त्वादिति न इत्याह न च अत्रापीति। परीक्षकत्वासम्मत्या परिहारे हेतुमाह तवेति। प्रमाणेन परीक्ष्य व्यवहर्त्ता परीक्षकः। न च तुच्छे प्रमाणमस्ति तत्सत्त्वे तुच्छत्वक्षतेरिति हेतुमाह तुच्छत्वेति। ननु वस्तुनो द्वैरूप्यासम्भवात् न सर्वे पक्षाः प्रामाणिका एव तथा सति परस्परविगानात् को वा परीक्षकः ? किं मतञ्च उपादेयम् ? किं वा हेयम् ? इति नियामकाभावादेकस्यापि अनुपादानमिति न इत्याह न च इति। परीक्षकत्वे पक्षस्य च उपादेयत्वे विनिगमकं शङ्कते नित्येति। स्ववाक्यं विवृणोति यस्य हीति। त्याज्यत्वे सिद्धान्त्यभिमतदृष्टान्तमाह यथेति।

हन्त तर्हि अन्ततोऽपि गत्वा श्रुत्या एव विश्वासश्चेत् श्रुतिसिद्धमेव मतमदुष्टं ग्राह्यमिति तदितरत् अग्राह्यमेव अप्रामाणिकत्वात् श्रुतिविरुद्धत्वाच्च। श्रुतिस्तु सदेव सोम्येदमग्र आसीत् एकमेव अद्वितीयं स एष नेति नेतीति अथ तस्य अयमादेशः अमात्रश्चतुर्थो ऽव्यवहार्य्यः प्रपञ्चोपशमः शिवो ऽद्वैत इति एवं प्रकारिका सजातीयविजातीयस्वगतभेदशू-

तुच्छत्ववादी आह हन्त तर्हि इति। ननु अप्रामाणिकत्वमसिद्धं प्रत्यक्षादिप्रमाणमूलत्वात् इतरपक्षस्य इत्याशङ्क्य हेत्वन्तरमाह श्रुतिविरुद्धत्वादिति। तथाच प्रत्यक्षादिश्रुतिविरोधि आभासीभवति इत्यर्थः। ननु न श्रुतिः प्रपञ्चस्य साक्षात् तुच्छत्वपरा अस्ति समन्वयाधिकरणविरोधात् तत्राह श्रुतिस्तु इति। श्रुतिरात्मातिरिक्तस्य सर्वस्य तुच्छत्वमभिमन्यते इत्यन्तः इति अन्वयः। श्रुतीरुदाहरति सदेव इत्यादिना। मीयन्ते इति मात्राः मात्राभ्योऽन्योऽमात्रः अप्रमेय इति यावत्। अथवा मात्रा एकदेशोऽवयवास्तद्रहितः तेन स्वगतभेदनिषेधसिद्धिः तुर्य्य एव चतुर्थशब्दार्थः। अव्यवहार्य्यः अभिवादनादिव्यापाराविषय इत्यर्थः। तस्य पुरुषार्थत्वमाह प्रपञ्च इति। प्रपञ्चाभावरूपत्वं तदा उपपद्यते यदि प्रपञ्चोऽसद्रूपो भवेत् असदभावस्य भावरूपत्वात् तेन विजातीयभेदनिराकृतिः तस्य सुखरूपतामाह शिव इति। सजातीयभेदं निषेधति। अद्वैत इति तेन श्रुतार्थापत्तिः प्रपञ्चस्य त्रैकालिकाभावं बोधयति इत्यर्थः। न चैवं प्रप-

न्यमात्मानं बोधयन्ती आत्मातिरिक्तस्य सर्वस्य तुच्छत्वमभिमन्यते।

तदतिरिक्तस्य कथञ्चिदपि सत्त्वे अद्वैतव्याघातप्रसङ्गात् तस्मात् जगतस्तुच्छत्वं श्रुत्यनुमतमेव। तदुक्तं गौडैः।

तुच्छाऽनिर्वचनीया च वास्तवी चेत्यसौ त्रिधा।
ज्ञेया माया त्रिभिर्बोधैः श्रौतयौक्तिकलौकिकैः॥

वसिष्ठोऽपि इममर्थं साश्चर्यवत् आह।

त्वस्य प्रामाणिकत्वम् आभासोपस्थितस्य अपि अभावप्रतियोगित्वोपपत्तेः अन्यथा न सुरां पिबेत् इत्यादौ सुरापानस्यापि प्रामाणिकत्वं किं न स्यात् अभिमन्यते इति वदता समन्वयविरोधोऽपि निरस्तः अन्यथा विवक्षितात्मसिद्धिरेव न स्यात् इत्यात्मसिध्यर्थमेव प्रपञ्चतुच्छत्वानुमानमिति न कोऽपि विरोधगन्ध इति। ननु किमिति तुच्छत्वमेव आवेदयति उक्तात्मस्वरूपस्य प्रपञ्चमिथ्यात्वेन अपि सिद्ध्युपपत्तेरिति न इत्याह तदतिरिक्तस्येति। कथञ्चिदपि मिथ्यात्वेन वास्तवत्वेन वा इत्यर्थः। कथं तर्हि विवर्त्तवादादिस्वीकार इत्याशङ्कां परिहरन् उपसंहरति तस्मात् इति।

एवकारोऽभिन्नक्रमस्तुच्छत्वपदेन सम्बध्यते तेन श्रौतं तुच्छत्वमेव विवर्त्तादिवादस्य युक्त्यादिमूलत्वात् तदपि विवर्त्ताद्यधिकारिभेदेन न विरुध्यत इत्यर्थः। उक्तमर्थं वृद्धसम्मत्या स्पष्टयति तदुक्तमिति।

वास्तवी परिणामरूपा तस्या वेदान्तवादस्य प्रथमसोपान-

अहो नु चित्रं यत् सत्यं ब्रह्म तद्विस्मृतं नृणाम्।
यदसत्यमविद्याख्यं तत् पुरः परिवल्गति॥

तथा।

अहो नु चित्रं पद्मोत्थैर्बद्धास्तन्तुभिरद्रयः।
अविद्यमाना याऽविद्या तया विश्वं खिलीकृतम्॥

तस्माद् द्वैततद्दर्शनयोस्तुच्छत्वात् स्वतःसिद्ध-शुद्धबुद्धमुक्तपरिपूर्णानन्दात्मनः अद्दष्टद्वयत्वमुपपन्नतरम्।

तथा च श्रुतिः।

न निरोधो नचोत्पत्तिर्न बद्धो नच साधकः।
न मुमुक्षुर्न वै मुक्त इत्येषा परमार्थता॥
तदेव निष्कलं ब्रह्म निर्विकल्पं निरञ्जनम्।
तद्ब्रह्माहमिति ज्ञात्वा ब्रह्म सम्पद्यते ध्रुवम्॥

त्वात् एवं प्रपञ्चस्य तुच्छत्वे श्रुतिमुपपाद्य स्मृतिमपि तत्र संवादयति वशिष्ठोऽपि इति।

अत्र असत्वमित्युपजीव्यते यस्मात् द्वैतं तद्दर्शनञ्च तुच्छ-त्वादसतः तस्मात् आत्मनोऽद्दष्टद्वयत्वमुपपन्नतरमिति उप-संहरति तस्मात् इति। द्वैतस्य विवर्त्तत्वे अपि उपपन्नमिदानीं प्रपञ्चस्य तुच्छत्वम् उपपन्नतरमित्यर्थः।

अद्दष्टद्वयमेव आत्मतत्त्वमित्यत्र श्रुतिं प्रमाणयति तथाच इति। श्रुतिरात्मनो द्वैतदर्शनशून्यत्वमेवाह इत्यन्वयः। निरोधः

निर्विकल्पमनन्तं च हेतुदृष्टान्तवर्जितम्।
अप्रमेयमनादिं च यत् ज्ञात्वा मुच्यते बुधः॥

इति एवमादिका। आत्मनो द्वैतदर्शनशून्यत्वमाह। तस्मात्।

सत्यं ज्ञानमनन्तं च पूर्णमानन्दविग्रहम्।
मान्त्रवर्णिकमात्मानं विनिश्चित्य विमुच्यते॥५७॥

नच एतादृशमात्मज्ञानं न जायत इति साम्प्रतं साधनचतुष्टयसम्पन्नस्य विविदिषोर्मनन-

प्रलयः वैदिककर्मानुष्ठाता साधकः निष्कलं निरवयवं निर्विकल्पकं विशेषानात्मकं अञ्जनमविद्यादि तच्छब्दलक्ष्यं ब्रह्माहमिति साक्षात्कृत्य ब्राह्मणः स्वयं ध्रुवमविचालि कूटस्थात्मकं भवति अनन्तम् अन्तो नाशस्तद्रहितं हेतुवर्जितं स्वयमकार्य्यं दृष्टान्तवर्जितम् अनुपमं स्वतुल्यरहितम् एतेन सजातीयभेदः परास्तः। कारणत्वं प्रतिषेधति अनादिमिति इति। स्वरूपमात्मत्वेन साक्षात्कृत्य विमुच्यते। अविद्यातत्कार्य्यरहितो भवतीत्यर्थः।

भवतु एवम् आत्मतत्वं किं ततस्तत्राह तस्मात् इति। यस्मात् इदं वास्तवं वृत्तं तस्मात् सत्यं ज्ञानमनन्तं ब्रह्मेति मन्त्रवर्णसिद्धं सत्यादिस्वरूपमात्मानं स्वमभिन्नं विनिश्चित्य साक्षात्कृत्य विमुच्यते इति तज्ज्ञानफलं स्वरूपप्राप्तिरित्यर्थः।

ननु एतादृशात्मज्ञानं यदि भवेत् तदा घटादिज्ञानवदुपलभ्येत साधनाभावात् न ज्ञायते इति चेत्? न, तत्साध-

निदिध्यासनाभ्यामुपकृतश्रवणानुष्ठानसमनन्तर-मेव तदुत्पत्तिदर्शनात् अन्यथा तादृशात्मप्रति-पादकागमाप्रामाण्यप्रसङ्गः।

नच जातमपि ज्ञानं साधनान्तरापेक्षया फलदानाय विलम्बत इति वाच्यं? तद्धैतत्पश्यन् ऋषिर्वामदेवः प्रतिपेदे अहं मनुरभवं सूर्यश्चेति ब्रह्मवेद ब्रह्मैव भवति तरति शोकमात्मवित्

नस्य प्रमाणस्य श्रुतेः सत्त्वात्ततो न जायत एव एतादृशं ज्ञानमिति न इत्याह नच इति। न च साम्प्रतमिति प्रतिज्ञायां हेतुं वदन् न अनुपलम्भविरोधं प्रत्याह तदुत्पत्तीति। तस्य उत्पद्यमानस्य ज्ञानस्य पश्यन् प्रतिपेदे यो यो देवानां प्रत्य-बुध्यत इत्यादि श्रुतिभ्यो दर्शनात् न अनुपलम्भनिषेध इत्यर्थः। यत्तु सत्यपि साधने ज्ञानं न जायत इति तदपि अयुक्त-मित्याह साधनेति। वेदानुवचनादिना उत्पन्नविदुषोर्नित्या-नित्यवस्तुविवेकादिसाधनचतुष्टयेन अथशब्दसूचितेन सम्पन्नस्य अधिकारिणो गुरूपदिष्टमहावाक्यविचारानन्तरं ज्ञानोत्पत्ति-दर्शनात् कथं तर्हि संसारानुवृत्तिः श्रुतवेदान्तानामिति तत्राह मननेति। असम्भावनादिनिवर्त्तकमननाद्युपकृतात् वाक्यविचा-रात् शक्तितात्पर्य्यग्राहकानुकूलव्यापारादनुष्ठितात् अप्रतिबद्धं ज्ञानं जायते एव इत्यर्थः।

ननु ज्ञानात् मुक्तिरिति कोऽर्थः? किं ज्ञानमेव मुक्ति-साधनम्? उत ज्ञानमपि? नाद्यः, विद्याञ्च अविद्याञ्च इत्यादिसमुच्चयप्रतिपादकवाक्यविरोधात् न द्वितीयः कर्म्मणैव

इत्यादिश्रुतिभ्यः आत्मज्ञानतत्फलयोः समानकालनिर्देशात् मध्ये साधनान्तरकालविलम्बयोरभावप्रतिपत्तेः तमेव विदित्वाऽतिमृत्युमेति नान्यः पन्था विद्यते अयनायेत्यादिसाधनान्तरप्रतिषेधश्रवणाच्च। तस्मात् ससन्न्यासात्मज्ञान-

हि संसिद्धिमास्थिता जनकादय इत्यादिविरोधात् इत्याशङ्क्य न इत्याह न च इति। समुच्चयपक्षमत्र पराकरोति न च वाच्यमित्यत्र हेतुमाह तद्वैतदित्यादि। तद्ब्रह्म एतत् अहमिति पश्यन् साक्षात् कुर्वन् एतस्मादेव दर्शनात् ऋषिर्नामतो वामदेवः प्रतिपेदे ह किल ज्ञानफलसर्वभावापत्तिप्रतिपादकान् मन्त्रान् ददर्श इत्यर्थः। यथा भुञ्जन् तृप्यति इत्युक्ते भुक्तितृप्त्योर्मध्ये कार्य्यान्तरं न प्रतीयते तथात्र पश्यन्नेव प्रपेदे इत्यत्रापि दर्शनसर्वभावापत्त्योर्मध्ये कार्य्यान्तरप्रतीतिर्वर्त्तमानार्थं शतृप्रत्ययनिर्द्देशेन न अस्तीत्यर्थः। यदा ब्रह्म वेद तदैव ब्रह्म भवतीति ब्रह्मभवनवेदनयोरेककालत्वप्रतीतेः कालविलम्बोऽपि नास्ति इत्यर्थः। कर्मैव मुक्तिसाधनमिति पराचष्टे तमेव इति। न च स्मृतिविरोधः संसिद्धिशब्देन तत्त्वज्ञानस्यैव उक्तत्वात् कषाये कर्मभिः पक्वे ततो ज्ञानं प्रवर्त्तत इत्याद्यागमात् कर्मणां तत्त्वज्ञानसाधनीभूतान्तःकरणशुद्धिहेतुत्वप्रतीतेः एतेन समुच्चयप्रतिपादकवाक्यविरोधोऽपि परास्तः। तत्रैव वाक्यशेषेण व्याख्या मृत्युनिवर्त्तकत्वमेव अविद्याशब्दवाच्यानां कर्मणां प्रतीयत इति ज्ञानमेव मुक्तिफलमिति स्थितं यदा च एवं तदावश्यं संसारभीरुणा तन्निवृत्तिसाधनं ज्ञानं श्रवणादिसाधनैः सम्पादनीयमित्युपसंहारव्याजेनाह तस्मादिति।

मेव अमृतत्त्वसाधनं यत्नतः सम्पादनीयं तदभावे यतो महती विनष्टिः श्रूयते इह चेदवेदीत् अथ सत्यमस्ति न चेत् इहावेदीत् महती विनष्टिरित्यत्र । उत्पन्ने च ब्रह्मात्मज्ञाने विदुषः फलेन सह विद्योद्गार स्मर्य्यते ।

विद्याविग्रहसग्रहेण पिहितं प्रत्यञ्चमुच्चैस्तरामुत्कृष्योत्तमपूरुषं मुनिधिया मुञ्जादिषीकामिव ।
कोशात्कारणकार्य्यरूपविकृतात् पश्यामि निःसंशयं
नासीदस्ति भविष्यति क्व नु गतः संसारदुःखोदधिः॥

पश्यामि चित्रमिव सर्वमिदं द्वितीयं
तिष्ठामि निष्कलचिदेकवपुष्यनन्ते ।

तस्मात्त्याग एव हि सर्वेषां मुक्तिसाधनम् ? उत अत्यागमिति शास्त्रमाश्रित्य आह ससन्न्यासेति । यत्नतः सम्पाद्यत्वे हेतुमाह तदभावे इति । इहेति पदं पूर्वार्द्धस्थितमत्रापि योजयित्वा श्रुतिं पठति इहेति । इह संसारमण्डले ब्रह्मात्मत्वेन न चेत् ? विदितवन्तो वयं ततोऽहमवेदिः स्यां ब्रह्मात्मसाक्षात्काररहितः स्याम् अस्तु तर्हि ततः को दोष इति तत्राह महतीति । विनष्टिरिति जन्ममरणादिलक्षणान्तरपरिमाणा विनष्टिः स्यात् तस्मात् अवश्यमात्मसाक्षात्कारः सम्पादनीय एव इत्यर्थः । तत्त्वज्ञाने सति संसारो निवर्त्तत एव इत्यत्र विद्वदनुभवमपि प्रमाणयति उत्पन्ने चेति । कारणादिकोशादनात्मराशेर्विविच्य केवलब्रह्मात्मानुभवो मम संवृत्तः संसारस्य असन्निवृत्त इत्यर्थः ।

तथापि जीवनाभासोऽपि अनुवर्त्तत इत्याह पश्यामीति ।

आत्मानमद्वयमचिन्त्यसुखैकरूपं
पश्यामि दग्धरसनामिव च प्रपञ्चम् ॥
अद्वैतमप्यनुभवामि करस्थबिल्व-
तुल्यं शरीरमहिनिर्ल्वयनीव वीक्षे ।
एवं च जीवनमिव प्रतिभासनं च
निःश्रेयसाधिगमनं च मम प्रसिद्धम् ॥
आश्चर्यमद्य मम भाति कथं द्वितीयं
नित्ये निरस्तनिखिले शिवचित्प्रकाशे ।
आसीत् पुरेति किमिमाः श्रुतयो न पूर्वं
येन द्वितीयमभवत् तिमिरप्रसूतम् ॥

न च एतावता मुक्तेः किञ्चित् वैकल्यमित्याह तिष्ठामि इति। ननु संसारदर्शनब्रह्मदर्शनयोर्विरुद्धत्वात् कथमेककालावस्थानमिति तत्राह दग्धरशनामिव इति ।

अद्वैतदर्शनेन द्वैतप्रपञ्चो बाध्यत एव इत्यर्थः। विरोधशङ्कां प्रत्याह अद्वैतमपि इति। अद्वैतानुभवस्य न कदाचिदपि पारोक्ष्यं यथा परित्यक्ताहिनिर्मोकोऽहि र्भासते एवं संसारबाध्यमपि सत् प्रतिभासत इत्यर्थः। स्वभावपरित्यागापत्तेर्न विपरीता शङ्केति भावः।

एवञ्च जीवन्मुक्तिरपि मम प्रसिद्धा इत्याह एवं चेति। तत्त्वज्ञानावस्थायां शरीरं बाध्यमिति किं वक्तव्यं तत्त्वज्ञानात् प्राक् अपि द्वैतप्रपञ्चप्रतिभासो यो मम अभूत् तत्रापि आश्चर्यमेव इदानीं मम वर्त्तत इत्याह आश्चर्यमिति।

एवं शास्त्राचार्य्यप्रसादादपरोक्षीकृततीव्रब्रह्मात्मतत्त्वस्य गुरुभक्त्यभिनयोऽपि स्मर्य्यते अतः अपि इयं विद्या जायते एव। तथा हि।

त्वत्पादपङ्कजसमाश्रयणं विना मे
सन्नप्यसन्निव परः पुरुषः पुरासीत्।
त्वत्पादपद्मयुगलाश्रयणादिदानीं
नासीन्न चास्ति न भविष्यति भेदबुद्धिः॥
यस्मात् कृपापरवशो मम दुश्चिकित्सं
संसाररोगमपनेतुमसि प्रवृत्तः।
त्वत्पादपङ्कजरजः शिरसा दधान-
स्त्वामाशरीरपतनादहमप्युपासे॥

ननु विद्यया अविद्योपमर्देऽपि कथं संसारस्य इहलोकपरलोकसञ्चारलक्षणस्य नानाविधयोनिप्राप्तिपरिहाराभ्याम् अनेकविधदुःखसङ्कुलस्य निवृत्तिः स्यात् तद्धेतोः कामकर्मादेस्तदवस्थत्वात्।

ननु किमत्र आश्चर्य्यं औतबोधः पूर्वं बाधको न अभूत् इदानीं च तेन बाधित इति तत्राह किम् इमा इति।

एवमित्यादि आरभ्य अहमप्युपासे इत्यन्तो ग्रन्थः स्पष्टार्थः।

ननु ज्ञानादज्ञाननिवृत्तावपि संसारः कथं निवर्त्तते तस्य कर्मजन्यत्वात् तस्य च विद्यमानत्वात् इति शङ्कते ननु इति।

नच अविद्यानिवृत्त्या तदुपादेयस्यापि सर्वस्य निवृत्तिरावश्यकीति वाच्यम्। वैशेषिकाणाम् उपादाने निवृत्तेऽपि क्षणं कार्य्यावस्थानवद-निवृत्तिशङ्काया दुरपह्नवत्वात् नच क्षणान्तरे नंक्ष्यत्येव इति न दोषः तत्क्षणवत् उत्तर-क्षणेऽपि अनुपपत्त्यभावस्य अनुमातुं शक्यत्वात् तस्मात् अज्ञाने निवृत्तेऽपि संसारो न निवर्त्तिष्यते प्रमाणाभावादिति व्यर्थः प्रयासः, मैवम्।

कर्ममूलमनर्थानां तच्च ज्ञानेन बाध्यते।
क्षीयन्ते चास्य कर्माणि तथाच श्रुतिशासनम्॥५८

ज्ञाने जातेऽपि कर्ममूलकः संसारः अनु-वर्त्तिष्यत इति यदुक्तं तन्न अविद्यावत् कर्म-णोऽपि ज्ञानेन बाधितत्वात् अविद्यावत् तत्का-र्य्येण अपि विद्याया विरोधित्वाविशेषात्।

नहि सम्भवति रज्जुसाक्षात्कारे तद-विद्यानिवृत्तौ तत्कार्य्यं सर्पाद्यनुवर्त्तत इति नच यतो ज्ञानमज्ञानस्यैव निवर्त्तकमिति अव-धारणं शास्त्रकाराणामेवं सति असमञ्जसमिति

ननु कर्म नोपादानं प्रपञ्चस्य किन्त्वविद्या सा चेत् ज्ञानान्निवृत्ता तन्मूलः संसारोऽपि निवर्त्तिष्यत इत्याशङ्क्य प्रसिद्धदृष्टान्तेन

वाच्यम्? अज्ञानकार्य्यस्यापि अज्ञानानतिरेकात् तदभावे तत्सत्त्वानुपलम्भात् नच अत्र प्रमाणाभावः।

"भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः।
क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे॥"

इति श्रुतेः। नच एतद्वाक्यमशुभकर्मनिवृत्तिपरमेव इति वाच्यं? कर्मशब्दस्य शुभाशुभसाधारणत्वात् विद्यासामर्थ्यस्य च उभयत्र तुल्यत्वात्।

ब्रह्मात्मैकत्वविज्ञानं शाब्दं दैशिकपूर्वकम्।
बुद्धिपूर्वकृतं पापं कृत्स्नं दहति वह्निवत्॥

इत्यत्र बुद्धिपूर्वकृतपापस्यापि ब्रह्मज्ञानेन दाहस्मरणात्।

यथैधांसि समिद्धोऽग्निर्भस्मसात् कुरुतेऽर्जुन!।
ज्ञानाग्निः सर्वकर्माणि भस्मसात् कुरुते तथा॥

इत्यत्र सर्वशब्देन अशेषपुण्यपापे गृहीत्वा तस्य सर्वस्यैव ज्ञानाग्निना दाहस्य भगवतापि उक्तत्वाच्च। किञ्च यस्य दर्शनमात्रात् अन्य-

परिहरति न च इत्यादिना। पूर्वपक्षमुपसंहरति तस्मादिति। तत्त्वज्ञानस्य अज्ञानवत् कर्मभिरपि विरोधस्य अविशेषात्

षामपि पापक्षयो जायते का कथा तस्य ब्रह्मी-भूतस्य पापक्षये तदाह भगवान् वसिष्ठः।

यस्यानुभवपर्य्यन्तं तत्त्वे बुद्धिः प्रवर्त्तते।
तद्दृष्टिगोचराः सर्वे मुच्यन्ते सर्वपातकैः॥

तथाच कुलपावित्र्यहेतुत्वमपि ब्रह्मविदः स्मर्य्यते।

कुलं पवित्रं जननी कृतार्था
विश्वम्भरा पुण्यवती च तेन।
अपारसंवित्सुखसागरेऽस्मिन्
लीनं परे ब्रह्मणि यस्य चेतः॥

तस्मात् यथोक्तब्रह्मात्मैकत्वविज्ञानेन कृत-कृत्यो भवतीति न अत्र विवदितव्यम् इति।

प्रकाशानन्दयतिना कृतिना स्वात्मशुद्धये।
सिद्धान्तमुक्तावल्येषा रचिता रन्ध्रवर्जिता॥
अद्वैतानन्दसन्दोहा सत्यज्ञानादिलक्षणा।
नारायणसमासक्ता श्रिया सापत्न्यदूषिता॥
शृणु प्रकाशरचितां सद्वैततिमिरापहाम्।
वादीभकुम्भनिर्भेदे सिंहदंष्ट्राधरीकृताम्

---

धर्माधर्मरूपं कर्मापि तेन निवर्त्तत इति श्रुतिस्मृतियुक्ति-सिद्धत्वादिति परिहरति। मैवमित्यादिना। स्पष्टार्थो ग्रन्थः।

वेदान्तसारसर्वस्वमज्ञेयमधुनातनैः।
अशेषेण मयोक्तं तत्पुरुषोत्तमयत्नतः॥
स्नातं तेन समस्ततीर्थसलिले सर्वापि दत्ताऽवनिः
यज्ञानां च कृतं सहस्रमखिला देवाश्च सम्पूजिताः।
संसाराच्च समुद्धृताः स्वपितरस्त्रैलोक्यपूज्योऽप्यसौ
यस्य ब्रह्मविचारणे क्षणमपि स्थैर्य्यं मनः प्राप्नुयात्॥

इति श्रीपरमहंसपरिव्राजकाचार्य्यश्रीज्ञानानन्दपूज्यपादशिष्य श्रीप्रकाशानन्दविरचिता वेदान्तसिद्धान्तमुक्तावली समाप्ता।

उक्तयुक्त्या आत्मज्ञानात् कृतकृत्यतासम्पन्नेति ग्रन्थमुपसंहरति तस्मादिति।

इतिशब्दो ग्रन्थसमाप्तौ। एवं ग्रन्थस्य अवान्तरप्रयोजनमाह शृणु प्रकाशेति। तादृक् सिंहदंष्ट्रा अधरीकृता यया इत्यर्थः। एतेन वादिविजयार्थिभिरपि इयमभ्यसनीयेति भावः।

इति श्रीपण्डितकुलपतिना वि ए उपाधिधारिणा
श्रीजीवानन्दविद्यासागरभट्टाचार्य्येण प्राचीनां
व्याख्यामवलम्ब्य सङ्कलिता विस्तृत
व्याख्या समाप्ता।

---

